मन्त्रप्रतीकम् | पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् — पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

# [ अ ]

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् ... पृष्ठम्

मन्त्रप्रतीकम् ... पृष्ठम्

मन्त्रप्रतीकम् — पृष्ठम्

मन्त्रप्रतीकम् — पृष्ठम्




॥ ॐ नमः सामवेदाय ॥

# ॥ सामवेदसंहिता ॥

तत्र

## ॥ उत्तरार्चिकः ॥

॥ अथ भाष्यावतरणिका ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्—
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशत् सायणाचार्य्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
छन्दोभिधाभूद् व्याख्याता व्याख्यास्यत्युत्तराभिधाम् ॥ ५ ॥
छन्दस्येकैकशोऽधीता ऋचः सामोद्भवाय हि ।
स्तोम-निष्पत्तये सूक्तान्युत्तरायामधीयन्ते * ॥ ६ ॥

* छन्दसि पूर्वार्चिकाख्ये एकैकशः ऋचः अधीताः, सन्तीति मन्दपेक्षेति भावः ; तत्र सामोद्भवमात्रं प्रयोजनम्, सामोद्भवस्तु एकस्या अपि भवितव्य एव ; परं स्तोम-निष्पत्तिस्तु तथा न भवेत् अत एव उत्तरायां सूक्तानि द्वृच्-तृच-रूपाणि अधीयन्ते ।

स्तोमशब्देनोत्पत्तिषु सोमयागेषु प्रयुज्यमानास्त्रिवृत्पञ्च-दशादयोऽभिधीयन्ते। अतएव तैत्तिरीयकाः प्रश्नोत्तराभ्या मिद-मामनन्ति। तदाहुः—"कतमा वाव तानि ज्योतींषि य एतस्य स्तोमा इति? त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वाव तानि ज्योतींषि यएतस्य स्तोमाः"—इति। छन्दोगाश्च त्रिवृ-दादि-स्तोमानां स्वरूपं ब्राह्मण-द्वितीय-तृतीययोरध्याययोः * बहुधा समामनन्ति। ते च बहुभिरवान्तररूपोपेताः समाम्नाताः स्तोमा नवसङ्ख्याकास्तेषु पूर्वोक्तास्त्रिवृदादयश्चत्वारः त्रिणव-त्रयस्त्रिंशौ त्रिनवसङ्ख्योपेतः स्तोमस्त्रिणवइत्युच्यते। छन्दोमना-मका स्तोमास्त्रयस्तेषु चतुर्विंशाख्यस्तोमः प्रथमः। गायत्रीच्छन्द-सा चतुर्विंशत्यक्षरोपेतेन मीयतइति छन्दोमः। चतुस्त्रिंशश्चत्वा-रिंशाख्यो द्वितीयः। स च त्रिष्टुप्छन्दसा मीयते। अष्टाचत्वारिं-शाख्यस्तृतीयः। सोऽपि जगतीच्छन्दसा मीयते॥ नन्वथ ये इयाम्नातलक्षणोपेतेभ्यस्त्रिवृदादिभ्योऽष्टादश-नवदशादि--नामका बहवः स्तोमा विद्यन्ते। तथाच तैत्तिरीयकाः केषुचिदिष्ट-कोपधान-मन्त्रेषु देवतावद्रूपेष्टकात्व-विवक्षया तान् स्तोमा-नामनन्ति—"आशास्त्रिवृद्भान्तः पञ्चदशो व्योम सप्तदशः। प्रतू-र्त्तिरष्टादशस्तपोनवदशोऽभिवर्त्तः सविंशो धरुण एकविंशो वर्चो-द्वाविंशः सम्भरणस्त्रयोविंशो योनिश्चतुर्विंशो गर्भः पञ्चविंश ओजस्त्रिणवः क्रतुरेकविंशो ब्रध्नस्य विष्टपश्चतुस्त्रिंशो नाकष्षट्-त्रिंशोऽभिवर्त्तोऽष्टचत्वारिंशः"—इति। एवन्तर्हि सन्त्येव बहूनि

* ताण्ड्यमहाब्राह्मणस्येति।

स्तोमान्तराणि तेषां लक्षणानि तु ब्राह्मणान्तरानुसारेण सूत्र-
कारैर्व्युत्पादितानि॥ ते च स्तोमाः सर्वेऽप्याज्यपृष्ठादि-स्तोत्रे-
षूपयुक्ताः "पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानि"—इत्यादि-
श्रुतिभ्यः स्तोम-विषयाः स्तोत्रविषयास्तन्निष्पादक-साम-विषयाश्च।
सर्वेऽपि विचारा अस्माभिश्छन्दोव्याख्यानावतारवेलायामेव
जैमिनीयान्यधिकरणान्युदाहृत्य प्रदर्शिताः *॥ किं बहुना "एकं
साम तृचे क्रियते स्तोत्रियम्"†—इत्यादि-वचनैः स्तोत्रनिष्पाद-
कस्य साम्नस्तृचप्रगाथादि-रूपाणि सूक्तान्याश्रयत्वेनोत्तराख्ये
संहिता-ग्रन्थे समाम्नातानि। स च ग्रन्थ एकविंशति-सङ्ख्यातै-
रध्यायैरुपेतः ‡॥

---

* १ भा० २० पृ०—२८ पृ० द्रष्टव्यम्।

† द्रष्टव्योऽस्यार्थः १भा० २० पृष्ठे।

‡ मूलपुस्तकस्य तु अध्यायसङ्ख्या नैव दृश्यते, परमस्ति नव प्रत्यध्यायस्यार्द्धा-
ध्यायः अध्यायद्वयेऽर्द्धाध्यायद्वयञ्च, पदग्रन्थे च तथा, विवरणादावप्येवमेव। सायणमते
तु अर्द्धाध्यायानङ्गीकारस्तत्रैकविंशतित्वं सुलभमिति। अध्यायेति व्यवहारश्च साय-
णीय एव, वस्तुतः सामवेदे प्रपाठकव्यवहारएव सर्वमूलपुस्तक-पदपुस्तक-गानपुस्तकादौ
विवरणकारमते च प्रसिद्धः।

तत्र, प्रथमाध्यायस्य प्रथमखण्डे, *

प्रथमसूक्ते तृचे, येयमृक् प्रथमा

सैव साम्नायते—

१ २ ३ १ २ ३ १ १
उपास्मैगायतानरःपवमानायेन्दवे।
३ २ ३ १ ३२
अभिदेवाँइयचते॥ १॥ †

हे "नरः" नेतारः! यज्ञस्य, "देवान्" इन्द्रादीन् "अभि इयचते" आभिमुख्येन यष्टुमिच्छते "पवमानाय" चरते "अस्मै" अभिषूयमाणाय "इन्दवे" सोमाय "उप गायत" उपगानं कुरुत॥ १॥

अथ द्वितीया।

३ २ ३ १ २ ३ १ ३२
अभि नमधुनापयोथर्वाणोअशिश्रयुः।
१ २ ३ १ २ ३ १
देवन्देवायदेवयु:॥ २॥

हे सोम! "ते" तव "देवं" देवनशीलं "देवयुः" देव-कामं रसं ‡ "देवाय" देवनशीलायेन्द्राय "मधुना" ¶ "पयः" गव्येन

* अत्र ग्रन्थे खण्ड-व्यवहारोऽपि सायणेनाविष्कृतः।

† इयमेव ऋक् अत्रैव प्रपाठके द्वितीयार्द्धेऽपि दृश्यते (१८, ३)।

‡ 'देवयुः देवान् युनक्ति यः सोमेन स देवयुः'—इति वि०। 'देवयवः'—इति ऋलिङ्गासङ्ख्यकं नैघण्टुकम् (२, १८)।

¶ 'मधुना स्वादुना'—इति वि०।

पयसा * "अथर्वाणः" ऋषयः † "अभ्यश्रिश्रयुः" अभ्यश्रिश्रयन् समकुर्वन्नित्यर्थः ‡ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १उ २ १ १र २ १ २र
स नः पवस्व शं गवे शं जनाय शमर्वते ।
१ २ ३ १ २
शंराजन्नोषधीभ्यः ॥ ३ ॥ १ ¶

हे "राजन्" दीप्यमान सोम ! "सः" प्रसिद्धस्त्वं "नः" अस्माकं § "गवे" ‖ "शं" सुखं "पवस्व" चर + "जनाय"

---

* 'पयः प्रथमैकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम् । पयसा सोम-मिश्रणं कुर्वन्ति'—इति वि० ।

† 'सोममिश्रणं कुर्वन्ति के ? अथर्वाणः ऋत्विजः । अथवा अथर्वा नाम ऋषिः आत्मीयान् पुत्रपौत्राननुशास्ते—हे अथर्वाणः !'—इति वि० ।

‡ 'अभीत्ययमुपसर्गः अश्रिश्रयुरित्याख्यातेन सह सम्बन्धयितव्यः । अभ्यश्रिश्रयु =आभिमुख्येन ते तव अश्रिश्रयुः=मिश्रणं कृतवन्तः'—इति वि० ।

¶ एतामिमामृचः—ऋग्वेदे ९, ७, २६, १-२-२ अपि दृश्यन्ते । आसा ऋषि-सन्देहश्च—"असितः काश्यपो देवलो वा"—इति ऋषि नै० । दैवत-सन्देहोऽपि यथा—"उत्तरासु रक्षस्थाख्याख्याश्च देवताः । पूर्वोक्ता ऋचु ता एवोत्तरासूपात्ते च दृष्टाः । सौम्याः स सोमः पार्थिवः"—इति दैवत-नै० ॥

§ 'नः अस्माकम्'—इति वि० ।

‖ 'चतुर्थ्येकवचनमिदं बहुवचनस्य स्थाने द्रष्टव्यम् । गोभ्यो बहुभ्यः'—इति वि० ।

\+ 'पवस्व प्रयच्छ'—इति वि० ।

पुत्राय च * "शं" पवस्व "अर्वते" अश्वाय † च "शं" पवस्व "ओषधीभ्यः" च ‡ शम्पवस्व ॥ ३ ॥ १

४ २ र ४ २ ४र

॥ यज्ञायज्ञीयम् ॥ उपाऽ५स्मै। गाइयाइताना

५ २ १ २ २ १ २ १ २ २

राः। पाइवामाइना। याऽ२३आ। ऊम्मायि। दाइवा

१ २र ३२ १ २ १र

यि। अभिदेवाऽ२इयाऽ२त्तताउ॥ ते (१)॥ आ। भिते

२ १ २ २ १ १र र २ १

मा। धूइनापाइयाः। आया२र्वा। णोआ२३आ। ऊ

२ २ १ २र ३२ १

म्मायि। आइयूः। दायिवन्देवायदा२यिवयाउ॥ यू(२)॥

१ १ २ १ २ २ १ १र

साः। नःपवा। स्वाइआङ्गाइवायि। आञ्जा२ना। य

२ १ २ २ १ र र

आ२३मा। ऊम्मायि। वीइतायि। आ२राजन्नोषधा

३ २

२यिभ्यआउ॥ (३) ॥ ११ ¶ ॥ १

---

* 'शं जनाय पुत्र मृत्विग्जनाय'—इति वि०।

† 'शं अर्वते यजमानजनाय'—इति वि०।

‡ 'ओषधीभ्यः व्रीहि यव-तिल-माषादिभ्यः'—इति वि०।

¶ सामवेदमूहगानस्यैकविंशप्रपाठक-प्रथमार्द्धस्यैकादशम्।

अथ द्वितीयखण्डे—प्रथमा

१ २ २ १ २ ३ १ २ ३ २

द्विद्युतत्यारुचापरिष्टोभन्त्याकृपा ।

१ २ ३ १ १र

सोमाःशुक्रागवाशिरः ॥ १ ॥

"द्विद्युतत्या रुचा" अतिशयदीप्त्या "परिष्टोभन्त्या" परितः शब्दायमानया "कृपा" धारया च युक्ताः "सोमाः" "गवाशिरः" गवाशिराः भवन्ति गव्येन पयसा मिश्रिता भवन्ति इत्यर्थः* ॥१॥

अथ द्वितीया ।

२ २ ३ १ २ ३ १ २र ३क २र

हिन्वानोहेतृभिर्हितआवाजंवाज्यक्रमीत् ।

१ २ ३ १ २

सीदन्तोवनुषोयथा ॥ २ ॥

"वाजी" बलवान् सोमः "हेतृभिः" प्रेरकैः स्तोतृभिः † "हिन्वानः" स्तोत्रैः स्तूयमानः "हितः" अभीष्टकारी सन् "वाजं" यागाख्यं युद्धम् "आ अक्रमीत्" आक्रामति । तत्र दृष्टान्तः—

---

* "द्विद्युतत्या दैदीप्यमानया रुचा। परिष्टोभन्त्या परि समन्तात् स्तोभन्त्या पुनः पुनः स्तोभः अभ्यासः अभ्यस्यमानया। कृपा कान्त्या। सोमाः शुक्राः शुक्लवर्णाः। कथं शुक्लवर्णा भवन्ति? गवाशिरः कारणे कार्यवदुपचारः गोक्षीराशिरः। आशिरं मिश्रम्॥"—इति वि०।

† "प्रचेतारं प्रवृत्तां प्रेरकम्"—इति ऋ० भा० ६,९,५,१ सा० द्रष्टव्यम् (१भा० ५८१प०)।

यथा "वनुषः" हन्तारो भटाः * "सीदन्तः" युद्धं प्रविशन्तः आक्रामन्ति तद्वदित्यर्थः † ॥ ३ ॥

अथ तृतीया।

३ १ २ ३ १ २ ३ २ ३ १ २
ऋधक्सोमस्वस्तये सञ्जग्मानो दिवाकवे।

१ २ ३ १ २ ३ २
पवस्वसूर्योदृशे ॥ ३ ॥ २ ‡

हे "सोम"! "कवे" क्रान्तदर्शिन्! "सूर्य्यः" सुवीर्यः ¶ त्वं "ऋधक्" ऋध्नुवत्। तथाच यास्कः—"ऋधगिति पृथग्भावस्यानुप्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते (निरु० नै० ४, २५)"—

---

* "वनुष्यति"—इति क्रुध्यतिकर्मसु अष्टम नैघण्टुकम् २, १२। "वनुष्यतिर्हन्तिकर्मानवगतसंस्कारोभवति 'वनुयामवनुष्यत' इत्यपि निगमो भवति"—इत्यादि निरु० नै० ५, २।

† 'हिन्वानः नीयमानः प्रेर्यमाणो वा। कैः हेतुभिः? हरणस्वभावैर्ऋत्विग्भि वा वाजम्। आ शब्दः उपसर्गः। अक्रमीदित्याख्यातेन सम्बन्धयितव्यः आ, मनुष्येन आक्रमीत् वाजं वाजी वाजमन्नं, पशुपुरोडाशादि-लक्षणस्यान्नस्य स्वामी अथवा वाजं द्रोणकलशम् आक्रमीत् सोमः। कथमाक्रमीत्? सीदन्तोवनुषोयथा। सीदन्तः उपविशन्तः वनुषः मनुष्यः एकवचनमिदं बहुवचनस्य स्थाने द्रष्टव्यम्। वनुषाः मनुष्याः उच्यन्ते। यथा उपविशन्तो मनुष्याः आसन माक्रमन्ति तद्वत् द्रोणकलशं सोमः'—इति वि०।

‡ ऋ० वे० ७, १, ४१, २-४५। ऋ० "कश्यपो मारीचः" इति ऋषि-नै०। छन्दोदेवते पूर्ववत्।

¶ 'सूर्यः दृशे, सूर्यः (इव शब्द माहूयते। दृशे दर्शनाय। यथा सूर्य उदेति विश्वस्य जगतो दर्शनाय तद्वत् त्वमपि पवस्वेत्यभिप्रायः'—इति वि०।

इति। "सञ्जग्मानः" सङ्गच्छमानः "स्वस्तये" "इषे" दर्शनाय "दिवा" दिवः विभक्तिव्यत्ययः* ॥ "पवस्व"-"चर"—"दिवाकवे"-"दिवाकविः"—इति पाठौ ॥ ३ ॥ २

॥ यज्ञायज्ञीयम्॥ ४ ३ इवाऽ५पियिद्यु। ४ २ ४र ५ ता३तीऽयाहृचा। २ १ २ २ पा३रायिष्टो३भा। १ २ ता२३ञ्या। १ ऊम्मायि। २ १ का३र्षा। १ र र ३ २ सोमाःशुक्रागवाशिराउ॥ १ १ रा(१)चायि। १र र २ न्वानोहोत्॥ १ २ १ १र० इभायिर्चो३यिताः। १ र आवा२जम्। २ १ वाजा२३या। ऊ २ २ म्मायि। क्रा३मीत्। १ र १ १ २ सायिदन्तोवनुषो२यथाउ॥ १ था(२) २ १ र चा। धक्सोमा। २ १ २ २ द्व३वास्ता३यायि। १ १र सञ्जा२ग्मा। र २ नोदा२३यिवा। १ ऊम्मायि। २ १ का३वायि। १५ र पावस्वहरियो२ ३ २ इशाउ (३)॥ १२ † ॥ [१]२

* 'दिवा कवे अहन्यहनि हे मेधाविन्!'—इति वि०।

† ऊ० गा० २१ प्र०१ अ० १२ सू०।

तृतीय-तृचे—प्रथमा।

१ २　　३ २ ३　१ २
पवमानस्यतेकवेवाजिन्त्सर्गाअसृक्षत।
१ २ ३ १ ३२ १ २
अर्वन्तोनश्रवस्यवः॥ १ ॥

मार्जनप्रसङ्गादाह—हे "कवे" क्रान्तप्रज्ञ! हे "वाजिन्" बलवन् सोम! "पवमानस्य" दशापवित्रेण पूयमानस्य "ते" तव "सर्गाः" सृज्यन्ते इति सर्गा धाराः *। कीदृश्यः? "श्रवस्यवः" ["छन्दसि परेच्छायां क्यच् (३,१,८वा०] यद्वा अन्नं कामयमानास्त्वदीया धारा "असृक्षत" विसृजन्ति निर्गच्छन्तीत्यर्थः। तत्र दृष्टान्तः—"अर्वन्तो न" यथा अश्वा मन्दुरातो निर्गच्छन्ति तद्वत् पवित्राभिःसरन्तीत्यर्थः†। प्रयोगापेक्षं चात्र धारा-बाहुल्यम्॥ १॥

अथ द्वितीया।

२ ३ १ २　३ २ ३१ २ ३१ २ ३१ २
अच्छाकोशम्मधुश्चुतमसृग्रंवारेअव्यये।
१ २　　३ १ २
अवावशन्तधीतयः॥ २ ॥

धारानिर्गमनप्रसङ्गादभिधीयते—"मधुश्चुतं" मधुररसस्य च्यावयितारं क्षारयितारं "कोशं" द्रोणकलशम् "अच्छ" अभि-

---

* 'सर्गाः उदकस्य अन्योन्यजन्मयः सङ्घाताः'—इति वि०।

† 'अर्वन्तः अजमानाः'—इति वि०।

लक्ष्य* "अव्यये" अवि-खभूते "वारे" वाले दशापवित्रे "असृग्रं" सोमाः ऋत्विग्भिरुत्सृज्यन्ते [सृजेः कर्म्मणि तिङ्गातिङ्गो भवन्तीति टेरमादेशः]। किञ्च। "धीतयः" [अङ्गुलि नामैतत् †
धयन्ति पिबन्त्याभिरिति] अस्मदीया अङ्गुलयः "अवावशन्त" तान् सोमान् न पुनः पुनर्मार्जनार्थं कामयन्ते‡ ॥ २ ॥

अथ तृतीया।

१ २ ३ १उ १ २ १ १ १२३१२
अच्छासमुद्रमिन्दवोस्तङ्गावोनधेनवः।
१ २ ३ २ ३ २ ३ २
अग्मन्नृतस्ययोनिमा ॥ ३ ॥ ३ ¶

"इन्दवः" क्षरन्तः सोमाः "समुद्रं" सोमाना मेकत्रैव सङ्गमनस्थानं द्रोणकलशम् "अच्छ" अभि गच्छन्ति। तत्र दृष्टान्तः —"धेनवः" पयः-प्रदानेन जनानां प्रीणयित्र्यो नवप्रसूतिका गावः "अस्तं" गृहं यथा अभि गच्छन्तीति तद्वत् §। किञ्च ते

---

* 'अच्छ आप्नुम्'—इति वि०।

† "धीतयः"—इति अङ्गुलिनामसु सप्तमं नघण्टुकम् २, ५।

‡ 'धीतयः धीतिः बुद्धिः बुद्धिमन्तः सोमाः। अथवा अवावशन्त कामयन्तु के धीतयः ऋत्विजः, किं कामयन्त ? सोमस्य पावनं द्रोणकलशगमनञ्च'—इति वि०।

¶ ऋ० वे० ७, २, ८, ५—९, १, २। ऋ० "वैखानसा आङ्गिरसः"—इति ऋषि नै०।

§ 'कथमाप्नुम् ? अस्तं गावो न धेनवः। अस्तमनकाले गावो न गृहं उपरिष्टा

सोमाः "ऋतस्य योनिं" सत्यभूतस्य यज्ञस्य* योनिं स्थानम् "आ" "अग्मन्" आभिमुख्येन गच्छन्ति। [गमेर्लुङि सिचो लुकि, उपधालोपः॥ ३॥ ३

४ ३ र ४ २ ४र ५
॥ यज्ञायज्ञीयम्॥ पवाऽ५मा। ना३स्या३तेकावायि।

१ १ २ २ १ २ १ २ २
वा३जायिन्द्रा३र्गाः। आ२३सा। ऊम्मायि। चा३ता।

१ र ३ ० १ २ १र र
आर्वन्तोनश्रवा२स्यवाउ॥ वा(१)आ। च्छाकोआम।

२ १ २ २ १ १ र २ १
माइधूस्रू३ताम्। असा२र्य्म। वार२३आ। ऊम्मायि

२ २ १ र ३ २ १ २
व्या३यायि। आवावशन्तधा२यितयाउ॥ या(२)आ।

१ १ १ २ २ १ १र र
च्छासम्। द्रा३मायिन्दा३वाः। अस्ता२ङ्गा। वीना२

२ १ २ २ १ ६ १
३धे। ऊम्मायि। ना३वाः। आग्मन्नृतस्ययो२निमाउ।

१ १ १ १
वा३४५ इ)॥ १३ †॥ [१]३

---

दुपसार्थीय गावः इव धेनवः यथा अस्तमनकाले वत्सानतियन्ति स्वं स्वा-हृढाः"—इति वि०।

* 'ऋतस्य यज्ञस्य प्रजापतेर्वा'–इति वि०।

† ऊ० गा० २१ प्र० १ ख० १३. सा०।

## इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य प्रथमः खण्डः * ॥ १ ॥

---

* 'ज्योतिष्टोमिकं बहिष्पवमानं समाप्तम्'—इति वि०। "तदिदं मृक्त्रयगानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते। तत्रावस्थितानामृचां पवमानार्थत्वाद् बहिःसम्बन्धाच्च"—इति मी० द० जै० अ० ९ अध्या० ४पा० ३ अधि०। न खल्विदं स्तोत्रम इतरस्तोत्रवत् सदोनामकस्य मण्डपस्य मध्ये औदुम्बर्याः स्तम्भशाखायाः सन्निधौ प्रयुज्यते किन्तु सदसो बहिः प्रसर्पद्भिः प्रयुज्यते। 'बहिष्पवमानं नाम वेदः, यत्र स्थित्वैतद्बहिष्पवमाननामकस्तवक-साध्य-त्रिवृन्नामस्तोमपाठपूर्वकं मार्जनं भवति; सा तु उदग्वंशनामशालान्तर्गतसदोमण्डपात् पश्चिमस्याः प्राचीनवंशनामशालायाः अन्तर्गतोत्तरवेद्युत्तरतो विद्यते. अस्य च बहिष्पवमानस्य प्रकृतियागेऽग्निष्टोमादौ त्रिवृन्नामकः स्तोमो भवति. एतद्विधायकं ब्राह्मणवाक्यं ताण्ड्यद्वितीयप्रपाठकारम्भे एव खण्डत्रयात्मकं द्रष्टव्यम्—तिसृभ्यो हिङ्करोतीत्यादि। अत्र च विष्टुतित्रयमस्ति उद्यती, परिवर्त्तिनी, कुलायिनीति, ताश्च तत्रैव स्फुटाः। विकृतियागेऽतिरात्रादौ तत्रैव एकविंशादि-स्तोमा विहिताः। बहिष्पवमाने चात्र आहृतगाना-भावात् त्रिषु तृचेष्ववस्थिताभिर्नवभिर्ऋग्भिरेकविंशस्तोमपूरणाभावात् तत्पूरणाय चत्वारस्तृचा आगमयितव्याः, त्रिणवस्तोमपूरणाय षट् तृचाः, त्रयस्त्रिंशत्स्तोमपूरणाय चाष्टौ तृचाः। तृचागमने च मानम्—"त्रीणि ह वै यज्ञस्योदराणि गायत्री"—इत्यादि ताण्ड्य सप्तम तृतीये द्रष्टव्यम्। आगन्तूनाञ्च तासां मन्त्रे निवेशः। द्वादशाहे तु मध्ये एव निवेशः। तद्विचारश्च मीमांसाधिकरणमालायाः पञ्चम-तृतीयस्य चतुर्थे द्रष्टव्यः। प्राकृतानां बहिष्पवमानगतानां त्रयाणां तृचानां स्तोत्रियोऽनुरूपः पर्यास इति यथाक्रमं त्रीणि नामानि। अत्र मानम् ताण्ड्यैकादशषष्ठे "स्तोत्रियानुरूपौ तृचौ भवतः" इत्यादि। गवामयनादिषु सत्रेषु पूर्वं चतुर्भिरभिप्लविकैः चतुर्विंशत्यहानि भवन्ति तत एकेन पृष्ठ्यषडहेन मासः पूर्यते, तत्र प्रथमाहः त्रिवृत्स्तोमसाध्यः अतोऽयं स्तोमः पृष्ठ्य इत्यप्युच्यते। किञ्चेदमेकषष्ट्यधिकत्रिशत-दिनसाध्येषु सत्रेषु—पञ्चविंशदिने, पञ्चपञ्चाशद्दिने, पञ्चाशीतिदिने, पञ्चदशाधिक-शततमे दिने, पञ्चचत्वारिंशदधिकशतदिने, ऊनसप्तत्यधिकशतदिने, नवत्यधिक-शतदिने, एकादशाधिकद्विशतदिने, एकचत्वारिंशदधिकद्विशतदिने, एकसप्तत्य

द्वितीयखण्डे,

प्रथमतृचे—प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २ १ २
अग्न आयाहि वीतये गृणानो हव्यदातये।
१ २र ३ १ २
नि होता सत्सि बर्हिषि॥ १ *॥

हे "अग्ने" अङ्गनादिगुणविशिष्ट! त्वम् "आयाहि" अस्मद् यज्ञं प्रत्यागच्छ। किमर्थम्? "वीतये" हविषां चरुपुरोडाशादीनां भक्षणाय। कीदृशः सन्? "गृणानः" अस्माभिः स्तूयमानः [व्यत्ययेनः कर्मणि कर्तृ-प्रत्ययः]। पुनश्च किमर्थम्? "हव्यदातये" देवेभ्यो हविःप्रदानाय। आगत्य च "होता" देवाना माह्वाता सन् "बर्हिषि" आस्तीर्णे दर्भे "निषत्सि" निषीद [सदेः छान्दसः शपो लुक्]॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २
तं त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि।
३ १ २
बृहच्छोचा यविष्ठ्य॥ २ †॥

---

धिकद्विशततदिने, एकाधिकविंशततमे च दिने विनियुज्यते—इति दिक् विस्तरस्तु ताण्ड्ये चतुर्थप्रपाठकादिके।

* छ० आ० १, १, १, १ (१भा० ९४ पृ०) = ऋ० वे० ४, ५, २९, ४।

† य० वे० ३, ९ = ऋ० वे० ४, ५, २३, १।

हे "अङ्गिरः" अङ्गनादिगुणयुक्त! अङ्गिरसः पुत्र वा अग्ने! "तं" पूर्वोक्तगुणं "त्वा" त्वां "समिद्भिः" समिन्धन-हेतुभिः दारुभिः "घृतेन" आज्येन च "वर्द्धयामसि" वर्द्धयामः। अतो हे "यविष्ठ्य" युवतमाग्ने! * "बृहत्" महत् अत्यन्तं "शोच" दीप्यस्व॥ २॥

अथ तृतीया।

१ २ ३ २ ३ १ २ १ २
सनः पृथुश्रवाय्यमच्छादेवविवाससि।

३ १ २ ३ १ २
बृहदग्नसुवीर्यम्॥ ३ †॥ ४ ‡

हे "देव" द्योतमानाग्ने! स पूर्वोक्तगुणस्त्वं "पृथु" विस्तीर्णं "श्रवाय्यं" श्रवणीयं प्रशस्यं "बृहत्" महत् "सुवीर्यं" शोभन-वीर्योपेतं धनं "नः" अस्मान्¶ "अच्छ" § "विवाससि" अभि-गमय+। अत्र वाजसनेयकम्—"अच्छादेवविवाससीति तन्नो ऽभिमयेत्येवैतदाहेति॥ ३॥ ४

* 'यविष्ठ्य. अतिशयेन बलवान्'—इति वि०।

† ऋ० वे० ४, ४, २३, २। ‡ इदमाग्नेय माज्यम्।

¶ 'नः अस्माकम्'—इति वि०। § 'अच्छ आप्तुम्'—इति वि०।

+ 'विवाससि . . . दीप्तिं करोषि'—इति वि०।

द्वितीयतृचे—प्रथमा।

१ २ ३ १ २र
आनोमित्रावरुणाघृतैर्गव्यूतिमुक्षतम्।
२ ३ १ २
मध्वारजाꣳसिसुक्रतू॥ १ *॥

"सुक्रतू" शोभनकर्माणौ, हे "मित्रावरुणौ"! "नः" अस्माकम् "गव्यूतिं" गवां मार्गं गोनिवासस्थानं "घृतैः" क्षरणसाधनैः पयोभिरुदकैः "आ उक्षतं" समन्तात् सिञ्चतम्। अस्मभ्यं दोग्ध्रीः गाः प्रयच्छत मित्यर्थः। किञ्च "मध्वा" मधुरेण सुरसेन "रजांसि" पारलौकिकानि अस्मदावासस्थानानि "सिञ्चतम्"॥ १॥

अथ द्वितीया।

३ १ २ ३ १ ३ ११ २र
उरुशꣳसानमोवृधामह्नादक्षस्यराजथः।
३ १
द्राघिष्ठाभिःशुचिव्रता॥ २ †॥

"शुचिव्रता" परिशुद्धकर्माणौ‡ हे मित्रावरुणौ! "उरुशंसा" उरुभिः बहुभिः¶ शंसनीयौ। यद्वात्र बृहच्छंसः शस्त्रं ययोस्तौ।

---

* ऋ० आ० ३, २, ३, ७ (१भा० ४५९ पृ०) = ऋ० वे० ३, ४, ११, ५।

† ऋ० वे० ३, ४, ११, ६।

‡ 'हे शुचिव्रतौ शुचिर्नयो मध्ये क्रियमाणं कर्म भवति तौ शुचिव्रतौ सत्यव्रतौ —इति वि०।

¶ 'उरु'- इति बहुनामसु पाठं नैघण्टुकम् ३, १।

"नमोवृधा" नमसा हविर्लक्षणेनान्नेन स्तोत्रेण वा वर्धमानौ*। "द्राघिष्ठाभिः" अत्यन्तदीर्घस्तुतिलक्षणाभियुक्तौ युवां "दक्षस्य" दक्षते समर्थो भवत्यनेनेति दक्षं धनं बलं वा तस्य† "मह्ना" महत्त्वेन "राजथः" ईशाथे ‡॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
गृणानाजमदग्निनायोनावृतस्यसीदतम्।
३ १ २र
पातꣳसोमवृतावृधा॥ ३ ¶॥ ५ §

हे मित्रावरुणौ! "जमदग्निना" एतन्नामकेन महर्षिणा यद्वा जमदग्निना प्रज्वलिताग्निना विश्वामित्रेण "गृणाना" स्तूयमानौ युवां "ऋतस्य" यज्ञस्य "योनौ" देवयजनाख्ये देशे "सीदतं" उपविशतं "ऋतावृधा" ऋतस्य कर्मफलस्य वर्द्धयितारौ युवां + "सोमं" "पातम्" अस्माभिरभिषुतम् सोमं पिबतम्॥ ३॥ ५

* 'नमस्कारैर्वृद्धौ'—इति वि०।

† 'दक्षस्य ऋषेः अथवा दक्षो यजमान उच्यते तस्य यजमानस्य बलेन दीप्यमानेन —इति वि०। दक्ष इति बलनामसु त्रयोदशं नैघण्टुकम् २, ९।

‡ 'राजथः दीप्यथः'—इति वि०।

¶ ऋ० वे ३, ४, ११, ७। § इदं मैत्रावरुण साम्नम्।

+ 'ऋतावृधौ यज्ञेन वर्द्धितौ'—इति वि०।

तृतीये तृचे—प्रथमा।

१ २ ३ १उ ३ १ २ ३ २ ३ १ २ ३ २
आयाहिसुषुमाहितइन्द्रसोमम्पिबाइमम्।
२उ ३ १ २ ३ १ २
एदम्बर्हिःसदोमम॥ १ *॥

हे "इन्द्र"! त्वम् "आ याहि" अस्मद्यज्ञं प्रत्यागच्छ, वयं "ते" त्वदर्थं "सुषुमा हि" सोम मभिषुतवन्तः खलु तम् "इम्" अभिषुतं सोमं त्वं "पिब" त्वदर्थं "मम" यमिदं "बर्हिः" वेद्या मास्तीर्णं दर्भम् "आ सदः" आसीद अभि निषीद॥ १॥

अथ द्वितीया।

१ २ ३ १ ३ १ ३ १ २ ३ १ २
आत्वाब्रह्मयुजाहरीवहतामिन्द्रकेशिना।
१ ३ १ ३
उपब्रह्माणिनःशृणु॥ २ †॥

हे "इन्द्र"! "ब्रह्मयुजा" ब्रह्मणा मन्त्रेण युज्यमानौ "केशिना" केशिनौ केशवन्तौ "हरी" हरणशीलौ वा अश्वौ "त्वा" त्वाम् "अवहताम्" अभि प्रापयताम्। त्वं चास्मद्यज्ञ मुपेत्य "नः" अस्माकं "ब्रह्माणि" स्तोत्राणि "शृणु" सम्यक् चित्ते धारय॥ २॥

---

* छ० आ० २, २, ५, ७ (१ भा० ४१७ पृ०)=ऋ० वे० ६, १, २२, १।

† ऋ० वे० ६, १, २२, २।

अथ तृतीया।

३ १ २ ३ २ ३ १ २ ३ २ २ ३ १ २

ब्रह्माणस्त्वायुजावयꣳसोमपामिन्द्रसोमिनः।

३ १ २

सुतावन्तोहवामहे ॥ ३ * ॥ ६ †

हे "इन्द्र" "ब्रह्माणः" ब्राह्मणा वयं त्वां "त्वायुजा" योग्येन स्तोत्रेण "हवामहे" आह्वयामहे। कथम्भूतम्? "सोमपां" सोमस्य पातारम्। ईदृशा वयं "सोमिनः" सोमयुक्ताः "सुतावन्तः" अभिषुतैः सोमैरुपेताः॥ "ब्रह्माणस्त्वायुजावयं"-"ब्रह्मांणस्त्वा-वयं युजा"—इति पाठौ ॥ ३ ॥ ६

चतुर्थे तृचे—प्रथमा।

१ २ ३ १ २ २ ३ ३ २उ १ २

इन्द्राग्नीआगतꣳसुतङ्गीर्भिर्नभोवरेण्यम्।

३ १ २ २ ३ ३ २

अस्यपातन्धियेषिता ॥ १ ‡ ॥

इन्द्रश्चाग्निश्च "इन्द्राग्नी" ¶ देवौ § "सुतम्" अभिषवा-

---

* ऋ० वे० ६, १, २२, ३। † इद मैन्द्र माज्यम्।

‡ य० वे० ७, ३१ = ऋ० व० ३, १, ११, १। ऋ० "विश्वामित्रो गाथिनः"—इति ऋषि-नै०। दे० 'इन्द्राग्नी ऐन्द्राग्नम्'—इति देव-नै०। छ० गायत्री। एव-मेवात्रोत्तरत्र द्वयोः।

¶ ऋ० ब्रा० ३, २, ४, ९, = अत्र तु १, १, ७, १ = १, १, ७, २ = २, २, ८ १ = २, २, ८, २ = ३, १, ९, १ = ३, २, १०, १—इति सप्तसु ऋक्षु श्रूयते 'इन्द्राग्नी'।

§ "अथास्य संस्तविका देवाः—अग्निः सोमो वरुणः पूषा बृहस्पति र्ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णु र्वायुः"—इति निरु० दे० १, १०।

दिभिः संस्कारैः संस्कृतम् अतएव "वरेण्यं" वरणीयं सम्भजनीय मिमं सोमं प्रति "गोर्भिः" अस्मदीयाभिर्वाग्भिराहुतौ सन्तौ "नभः" नभसः स्वर्गाख्यात् स्थानात् "आगतम्" आगच्छतम्। आगत्य च "धिया" अस्माभिः क्रियमाणेन कर्मणा "इषिता" इषितौ प्रेरितौ युवाम् "अस्य" इमं सोमं "पातं" पिबतं। यद्वा "धिया" अस्मदीयया बुद्धग्रा इषितौ प्राप्तौ* अस्मद्भक्त्या प्रेरितौ युवा मिमं सोमं पिबतम् ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २र ३ १ २ १ ३ १ २
इन्द्राग्नीजरितुःसचायज्ञोजिगातिचेतनः।
३ १ २ ३ २ ३ २
अयापातमिमꣳसुतम् ॥ २† ॥

हे "इन्द्राग्नी" "जरितु" स्तोतुः‡ "सचा" स्वर्गादिलक्षणप्राप्तौ सहायभूतौ "यज्ञः" ज्योतिष्टोमादि-यज्ञ-साधनभूतश्चेतनः इन्द्रियाणां चेतयिता आप्यायनकारी सन्नसौ सोमः "जिगाति" युवा मभिगच्छति¶। "अया" अस्मदीयया स्तुतिलक्षणया अनया वाचा आहुतौ सन्तौ युवां "सुतम्" अभिषवादि-संस्कारोपेतम् "इमं" "पातं" पिबतम् ॥ २ ॥

---

* "इषता इषु इच्छायाम् इच्छन्त्या"—इति वि०।

† ऋ० वे० ३, १, ११, २। ‡ 'जरितुः स्तोतुः यज्ञातुः'—इति वि०

¶ 'जिगाति गायति चेतनः लुप्तोपमान मिदं चेतन इव'—इति वि०।

अथ तृतीया ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

इन्द्रमग्निङ्कविच्छदा यज्ञस्य जूत्या वृणे ।

१ २र ३ १ २

तासोमस्येहतृम्पताम् ॥ ३ * ॥ ६ †

"यज्ञस्य" यज्ञसाधनभूतस्य सोमस्य "जूत्या" जूतिः प्रेरणं सोमस्तावद्यजमानं प्रेरयति । साधन मुपलभ्य तत् साध्ये क्रतौ यजमानः प्रवर्त्ततइति हि तस्य प्रेरकत्वम् । तया प्रेरणरूपतया जूत्या ‡ प्रेरितोऽहं स्तोता "कविच्छदा" कवीनां स्तोतृणा मुचितफल-प्रदानेनोपच्छन्दकौ इन्द्र मग्निं च युवां "वृणे" सम्भजे । आगतौ च ताविन्द्राग्नी "इह" अस्मदीये अस्मिन् कर्मणि "सोमस्य" सोमेन सोमयागेन "तृम्पतां" तृप्यताम् ॥ ३ ॥ ७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य

द्वितीयः खण्डः ¶ ॥ २ ॥

---

* ऋ० वे० ३, १, ११, ९ ।

† इद मैन्द्राग्न साम्यम् । 'प्रातः सवनं समाप्तम्'—इति वि० ।

‡ 'जूत्या अभिवृद्धा निमित्तभूतया'—इति वि० ।

¶ "तान्येतानि प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वार्याज्यस्तोत्राणीत्युच्यन्ते"—इति मी० द० जै० अ० ९ अध्या० ४ पा० ३ अधि० । 'यदाजिमीयुस्तदाज्यानामाज्यत्वम्'—इति चैतन्निर्वचनम् ता० ब्रा० ७, २ । एष्वाज्यस्तोत्रेषु पञ्चदशनामकः स्तोमो भवति ; तद्विधायकं ब्राह्मणं ताण्ड्यं, 'पञ्चभ्यो हिङ्करोति'—इत्यादि ( २, ४-

तृतीयखण्डस्य,

प्रथमतृचे—प्रथमा।

२ १ २ ३ ११ २र ३ ११ २र
उच्चातेजातमन्धसोदिविसद्भूम्यादद।

३ १र ३ २ ३ १ २
उग्रꣳशर्ममहिश्रवः॥ १ *॥

हे सोम! "ते" तव सम्बन्धिनः "अन्धसः" रसस्य "उच्चा" उपरि "जातं" जन्म अपिच "दिवि" द्युलोके "सत्" तव सम्बन्धि "उग्रम्" उद्गूर्णं "शर्म" सुखं "महि" महत्। "श्रवः" अन्नं "भूमि" भूमिष्ठैः यजमानैः "आ ददे" आदीयते॥ दिविसद्"-"दिविषद्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ ३ १ २ ३१ २ ३ १ २ ३ १ २
सनइन्द्राययज्यवेवरुणायमरुद्भ्यः।

५-६) तत्रैवेतद् विष्टुतिचयस्य परिस्फुटम्। सोमोऽयं द्वितीय पृष्ठ इत्यप्युच्यते किञ्च सत्रेषु षड्विंशतितमे दिने, षट्पञ्चाशत्तमे दिने, षडशीतिदिने, षोडशाधिकशतदिने, षट्चत्वारिंशदधिकशतदिने, सप्तत्यधिकशतदिने, ऊननवत्यधिकशतदिने, दशाधिकद्विशतदिने, चत्वारिंशदधिकशतदिने, सप्तत्यधिकद्विशतदिने, त्रिंशततमे च दिने विनियुज्यते। विस्तरस्तु ताण्ड्य-चतुर्थप्रपाठकादिके।

* छ० आ० ५, २, ४, १ (२ भा० २ पृ०) = ऋ० वे० ७, १, १९, ५। ऋ० 'अमहीयुः आङ्गिरसः'—इति ऋषिमै०। दे० 'पवमानः सोमः'—इति देव-मै०। छ० गायत्री। एवमेवात्रोत्तरत्र द्वयोः॥ इदानीं माध्यन्दिनः पवमानः। गायत्री बृहती त्रिष्टुबिति छन्दांसि। पुष्कलोऽग्निर्वामदेव्योऽग्निश्चरिम्हीयुधाजीवउशनाःकाव्यः इति आर्षाणि। सोमः सोमदेवता साम-देवता विस्तरस्त्वग्रोच्यते'—इति वि०।

१ ११ १२
वरिवोवित्परिस्रव ॥ २ * ॥

हे सोम "वरिवोवित्" धनस्य लम्भकः पवमानः † "नः" अस्माकं ‡ "यज्यवे" यष्टव्याय ¶ "इन्द्राय" "वरुणाय" च 'मरुद्भ्यः" च "परि स्रव" धारया चर § ॥ २ ॥

अथ तृतीया।

३१ २र ३२उ ३ १ ३१ २
एनाविश्वान्यर्य आद्युम्नानिमानुषाणाम्।
१ २
सिषासन्तोवनामहे ॥ ३ ** ॥ ८ ††

"मानुषाणां" मनुष्याणां लब्धव्यानि "एना" एनानि "विश्वा" विश्वानि सर्वाणि "द्युम्नानि" यज्ञसाधनानि धनानि ‡‡ हे सोम! त्वत्प्रसादात् "आ" आभिमुख्येन "अर्य्यः" ¶¶ अभि-

---

* ऋ० सा० आर० १, ७ (२ भा० २५४ पृ०) = ऋ० वे० ७, १, २०, २।

† 'वरिवः वरिष्ठः। वित् भजनीयः'—इति वि०।

‡ 'नः अस्मभ्यम्'—इति वि०।

¶ 'यज्यवे यजमानार्थं—इति वि०।

§ 'परिस्रव परि समन्तात् दशापवित्रात् स्रव'—इति वि०।

** ऋ० सा० आर० १, ८ (२ भा० २५६ पृ०) = ऋ० वे० ७, १, २०, १।

†† इदं माध्यन्दिनपवमान साम।

‡‡ 'द्युम्नानि धनानि'—इति वि०।

¶¶ 'अर्थः यजमानः'—इति वि०।

गच्छन्तः वयं "सिषासन्तः" सम्भुक्त मिच्छन्तस्र * "वनामहे" त्वां सम्भजामहे † ॥ ३ ॥ ८

५ र २ ४र ५ २ १
॥ आमहीयवम् ॥ उच्चाता३इजातमन्धसाः। दिवा
२ १ २ १ २ १
इसाऽ१ह्र२। मियार३ददाइ। उग्रं॒शर्मा। महार३
२ ५ २ ४र ५ १ २ १
इश्रवाउ। वा३ ॥(१) सनआ३इन्द्रायययज्यवाइ। वरुणा
१ २ २ २र १
ऽ१या२। मरु२३द्भियाः। वरिवोवाइत्। परा२३इस्र
१ ५रर २ ४र ५ २ १ २
वाउ। वा३ ॥(२) एनावा३इश्वानिअर्यमा। द्युम्नानाऽ१इ
२ १ १र २ १ २
मा२। नुषार३णाम्। सिषासन्ताः। वना२३महाउ।
२र १ १ १ १
वा३। स्तोषे२३४५(३) ॥ १ ॥ [१]

४ २ र ४ २ ३ ५
॥ त्रुलकवैष्टम्भम् ॥ उच्चाऽ५ते। जा३तमन्धसाः।
१ २ र १ २ १ २ २ १
दायिवीसद्भू। मियादा१दे२३। होवा३हायि। उग्रा॒

* 'सिषासन्तः साधयन्तः'—इति वि०।

† 'वनामहे याक्रयामः'—इति वि०।

‡ ऊ० गा० १प्र० १अ० १सा०।

ग्रा१म्मा२३। होवा३हायि। मह्वि। आ२वा२३४औ

होवा॥(१) सना ऽ ५ इ। द्रा३ययज्यवायि। वारुणाय। म

रुद्भा१या२३ः। होवा३हायि। वरायिवो१वी२३त्।

होवा३हायि। परि। ग्ना२वा२३४औहोवा॥(२) एना ऽ ५

वि। श्वा३निअर्य्यआ। द्युम्नानिमा। नूषा१णां२३म्।

होवा३हायि। सिषामा१न्ता२३ः। होवा३हायि। वना।

मा२हा२३४औहोवा। दी२३४आः(३)॥ १३ *॥ [२]

॥ आजिगम॥ उच्चातेजा। तमान्धासा:। दि

विसद्भ। माया१दा२३दायि। उग्रा(ं)शाम्मा। मह्विआ

२३वा३४३ः॥(१) सनाआयिन्द्रा। ययाज्यावायि। वरुणा

य। मारुद्भा२३याः। वरायिवोवीत्। परिह्मा२३वा३४

३॥(२) एनावायिश्वा। निआर्य्याआ। द्युम्नानिमा। नू

* ऊ० गा० २प्र० १ख० १३गा०।

थाऽ२३थाम्। सिषासान्ताः। वनामाऽ२३हाई४३यि।
ओ२३४५ई। डा (३) ॥ ८ * ॥ [३]

॥ आभीकम्॥ ऊ२३४वातेजा५। तमौहोऽन्धा
साः। दिविसद्भूमियाऽ१दाऽ२दे। उग्रऽआऽ२३४र्म्मा। मा
हाऽ२उवा२४३। आऽ३४५वो६हायि ॥(१) सां२३४नइन्द्रा५।
ययौहोज्यावायि। वसूयमरु१द्भ्रा३या:। वरिवो२३४
वीत्। पारा४उवा३४३। साऽ३४५वो६हायि ॥(२) आऽ२३४
यिनाविश्वा५। नियौहोर्ष्णी्या। द्युम्नानिमानूऽ१षाऽ३णा
म्। सिषासा२३४न्ता:। वाना३उवा३४२। मा३४५हो
६हायि(३) ॥ १० † ॥ [४]

॥ गायत्रीवैरूपम्॥ उत्वाते२३४जा। तमान्धा३सा३:।
दिवा२यिसा२३४द्भू। माया१दादा२यि। उग्रा२३म्।

* ऊ० गा० ६प्र० १अ० ८सा०।
† ऊ० गा० ६प्र० १अ० १०सा०।

२ ५र र १ १ २ ३१.१११ २१
मन्मा३४औहोवा। महिम्रवार३४५ः॥(१) सनाया२३४यि

१ ११ २ १ १ १ ७
न्द्रा। ययाज्या३वा३यि। वरूरणा२३४या। मारुद्भा

१ र२ ५र र १ ११ २ ११
या२ः। वरा२३यि। वोवा३४औहोवा। परिस्रवा२३

११ १र२र ५ १ १ २ २ १
४५॥(२) एनावा२३४यिश्वा। निचार्व्या३या३। द्युम्ना२

३ ५ १ २ १ २ २
ना२३४यिमा। नृचा२णा२म्। मिचा२३। सन्मा३४

५र र १ १र२३ १ १ १ १
औहोवा। वनामहो२३४५यि(३)॥ १२ *॥ [५]

२ १ र र
॥ सत्रासाहीयम्॥ उच्चा३४। तेजातमन्धसः।

५ ५ १ र र १ १ १
ओ६वा। दिविसद्भूमियादा२दायि। उ२ग्राम्। आ

२ १ ऽ र २ ३र २ १ ५ ५
२३र्मा। महौ३हो। वाहा३४३यि। आ२३४वो६हा

१ २ र र ५ ५ १ र
यि॥(१) सना३४ः। इन्द्राययज्यवे। ओ६वा। वरुणाय

१ १ २ १ ऽ २र
मरुद्भा२याः। वा२रायि। वोर३वीत्। परौ३हो।

३र २ १ ५ ५ ३र२ र
वाहा३४३यि। स्वा२३४वो६हायि॥(२) एना३४। विश्वान्य

* ऊ० गा० ७प्र० १ख० १२गा०।

र्य्यश्रा। श्रो६वा। द्यु म्नानिमानुषा२णाम्। सा२यिषा। सा२३न्ताः। वनौ३चो। वाहा३४५यि। मा२३४चो६ हायि(३) ॥१२ *॥ [६]

॥ स्वारसौपर्णम् ॥ उच्चातेजातमन्धा३सा:। दिवि सद्भूमिया। दुम्। दा२३४दायि। ऊग्रा३उवा। शर्म। मद्दो२३४वा। श्रा५वो६हायि ॥(१) सनइन्द्रायज्या३वा यि। वरुणायमरु। ऊम्। द्भा२३४या:। वारा३उ वा। वोवित्। परो२३४वा। श्रा५वो६हायि ॥(२) एना विश्वान्यर्य्या३श्रा। द्यु म्नानिमान्। ऊम्। षा२३४णाम्। मायिषा३उवा। सन्ताः। वनो२३४वा। मा५हो६हा यि(३) ॥ १० † ॥ [७]

॥ शाकरवर्णाम् ॥ उच्चा। तेजातमन्धसाः। दिवि

* ऊ० गा० ८प्र० २ख० १२सा०।

† ऊ० गा० १०प्र० १ख० १०सा०।

र   १२   २ ५ २१
सत्। भूमिया२। ददा३१उवा२३। ऊ३४पा। उग्र

२ १ २   १ २   १र
ᳫ्शा२३र्मा। महिश्रवा३१उवा२३॥(१) सानाः। इन्द्राय

२१   २१२र   १   १ २
यज्यवायि। वरुणा। यमरु२। द्भिया३१उवा२३।

२ ५ २१ २ १ २   १
ऊ३४पा। वरिवो२३वीत्। परिस्रवा३१उवा२३॥(२) आ

२   १र २१ २ १र २ १र   १र २
यिना। विश्वान्यर्यआ। द्युम्नानि। मान्२। षाणा३

१   २ ५ २१र   २ १र २
माउवा२३। ऊ३४पा। सिषासा२३न्ताः। वनामहा३१

२ ५
उवा२३। ऊ३२३४पा(३)॥ ११ *॥ [८]

२ रर १ २   १ २१
॥ जराबोधीयम्॥ उच्चातेजोवा। तामन्धसाः।

२ १   २   र १   २
दिवायिसार३द्भू। मियादादायि। उग्राᳫ्शा१र्मा२३

४ ५ १२   २ १ २ १
मा। हि। श्रवो३४५ई। डा॥(१) सनइन्द्रोवा। याय

२१   २१   २   १   २
ज्यवायि। वरुणा२३या। मरुद्भायाः। वरायिवो१वी

४ ५ ३२   २र र १ २ १
२३त्या। रि। स्वो३४५ई। डा॥(२) एनाविश्वोवा। ना

* ऋ० मा० १०म० १ख० ११सा०।

२ १ २ १ २ १ २
अर्य्यआ। द्युम्नाना२३यिमा। नुषाणाम्। सिषासा
४ ५र ३ २
१न्तार२३वा। ना। महो३४५ई। डा(३) ॥ १४* ॥ [९]

१र र र र
॥ ऋषभः पावमानम् ॥ हाहाउआतेजा। हा३।
६ १ २ ५ २१ र २ २
हा३यि। तामार२न्धार२३४सा:। दिविसद्भूमियाश्दा२
२ २ ५ १ २ ४ ५ ४
दे। उग्र९शा२३४र्म्मा। ओमो३। मचोवा। आ५
५ २र र २ १
वो६हायि ॥(१) हाहाउसनइन्द्रा। हा३। हा३यि। या
३ ५ १ र २ २ २ ३
या२ज्या२३४वायि। वरुणायमरु१द्भा३या:। वरिवो
५ १ २ ४ ५ ४ ५ २र
२३४वीत्। ओमो३। परोवा। हा५वो६हायि ॥(२) हा
र र र २ १ ३ ५
हावेनाविश्वा। हा३। हा३यि। नाआर२र्य्या२३४षा।
१ र र २ २ २ २ २ ५ १ २
द्युम्नानिमानू१षा३णाम्। सिषासा२३४न्ता:। ओमो३।
४ ५ ४ ५
वनोवा। मा५हो६हायि(३) ॥ १ † ॥ [१०]

---

* ऊ० गा० ११प्र० १अ० १४सा० ।

† ऊ० गा० १२प्र० १अ० १सा० ।

॥ गौषूक्तम् ॥ उच्चातेजातमौ। हौहोवाहायि। न्धसाः। दिविसद्भूमियौ२। ऊवायि। ऊवा२यि। दादा२यि। उग्रꣳशर्ममहौ२। ऊवायि। ऊवा२यि। आवा२३ः। हो२वा२३४औहोवा ॥(१) सनइन्द्राययौ। हौहोवाहायि। ज्यवायि। वरुणायमरौ२। ऊवायि। ऊवा२यि। द्भाया२ः। वरिवोवित्परौ२। ऊवाहि। ऊवा२यि। स्रावा२३। हो२वा२३४औहोवा ॥(२) एनाविश्वानियौ। हौहोवाहा। यꣳआ। द्युम्नानिमानुषौ२। ऊवायि। हुवा२यि। षाणा२म्। सिषासन्तोवनौ२। हुवायि। हुवा२यि। माहा२३यि। हो२वा२३४औहोवा। अग्निराहुता२३४५:(३) ॥ २*॥ [११]

॥ स्वारसैन्धुक्षितम् ॥ उच्चातेजातमन्धासाः। दा

* ऊ० गा० १२प्र० १ख० २सा०।

२ १ १र र २ १

यिविसद्भू। मियादाद्दी। होवा३हायि। ऊग्रा२९

१ २ १ ५ ४ ५ २ र

शार्म्मा२३। मद्दो२३४वा। आपुवो६हायि॥(१) सनइन्द्रा

१ २ १ २र १ २र र २

ययज्यावायि। वारुणाय। मरुद्भायो। होवा३हा

१ १ २ १ ५ ४ ५

यि। वारा२यिवोवो२३त्। परो२३४वा। आपुवो६हा

२र र र १ २ १ र २ र १ २र

यि॥(२) एनाविश्वानिअर्य्याआ। द्युम्नानिमा। नुषाणो।

र २ १ १ २ १ ५ ४

होवा३हायि। सायिषा२सान्ता२३ः। वनो२३४वा। मा

५

पुद्दो६हायि(३)॥ ७ *॥ [१२]

२ र र १ २ १ २ ३

॥ ऐडसौपर्णम्॥ उद्धातेजोवा। तामन्धा२३४

५ १ २ १ ७ २ ३

साः। द्विवायिसद्भू। मिया२दा२३४दायि। ऊ२

१ २ १ २ १ २ ४ ५ २

ग्राम्। शा२३र्म्मा। माहिश्रवा। औ३होवा॥(१)सन

१ ५ १ २ ३ ५ २ १ २र १ ७ ३

इन्द्रोवा। यायज्या२३४वायि। वरुणाया। मरु२द्भा

५ १ २ १ २ १ २

२३४याः। वा२रायि। वो२३वोत्। पारिस्रवा। औ

---

* ऊ० गा० १९प्र० २ख० ७सा०।

४ ५ २र२ १ २ १ २ ३ ५ २ १
३होवा ॥(२) एनाविश्वोवा। नाअर्य्या२३४आ। द्युम्ना
२ १ २ ५ १ २
निमा। नूरषा२३४णाम्। सा२यिषा। सा२३न्ताः।
१ २र १ २ ४ ५ ४
वानामहा। औ३होवा। हो५ई। डा(३) ॥ १७* ॥ [१३]
२र १र १ २
॥ सुरूपोत्तरम् ॥ उच्चातेजौहो२। इया। तम
१ १ १ २र १
न्धासा२ः। दिविसद्भौहो२। इया। मियादांदा२
१ १ २ १ २
यि। उग्रꣳशर्म्मौहो२। इया। महिश्रा२३वा३४३ः ॥(१)
२ १ १ २ १ १र
सनइन्द्रौहो२। इया। ययज्यावा२यि। वरूणायौहो
१ २ १ १र १
२। इया। मरुद्भाया२ः। वरिवोवौहो२। इया।
२ १ २ २र२ १ १ २ १
परिस्रा२३वा३४३ ॥(२) एनाविश्वौहो२। इया। निअर्या
२ १ १ २१
आ२। द्युम्नानिमौहो२। इया। नुषाणा२म्। सि
१ १ १ २१र २ १
षासन्तौहो२। इया। वनामा२३हा३४३यि। ओ२३
४५ई। डा (३) ॥ ३ † ॥ [१४]

---

* ऊ० गा० १३प्र० १ख० १७गा०।

† ऊ० गा० १४प्र० १ख० २गा०।

॥ अदारहत्॥ हाउहातेजा। तमा२न्धासा२। दिविसद्भूमिया२दादा२यि। उग्रा२ॐशार्मा२। महि। आ२वा२३४औहोवा॥(१) हाउसनइन्द्रा। यया२ज्यावा। २यि। वरुणायमरु२द्भाया२ः। वरा२यिवोवी२त्। परि। स्वा२वा२३४औहोवा॥(२) हावेनाविश्वा। निआ २र्य्याआ२। द्युम्नानिमानु२षाणा२म्। सिषा२सा न्ता२ः। वना। मा२हा२३४औहोवा। अस्मभ्यज्ञातु वित्तमा२३४५म्(३)॥ ४ *॥ [१५]

॥ इडानाॐसंहारः॥ औहोयिहुवा३होयि। उ स्वातेजा३ता३मन्धसः। दिविसद्भूमी३यादादायि। उग्राॐशा२३४र्म्मा। महिश्रवः। इडा२३॥(१) सनइन्द्रा३ या३यज्यवायि। वरुणाया३मा३रुद्भियः। वरायिवो२३

* ऊ० गा० १५प्र० १ख० ४सा०।

४वीत् । परिस्रव । इडा२३ ॥ (२) एनाविश्वा३नी३अर्य्या । द्युम्नानिमा३नू३षाणाम् । औहोयिहुवा३होयि । सिषासा२३४न्ताः । वनामहे । इडा२३भा३ । एहीडा । हो५ई । डा (३) ॥ ५ * ॥ [१६]

॥ आप्लुभार्गवम् ॥ उच्चाते । जातमन्धा३साः । दायिविसद्भू३ । माया२दा२३४दायि । उग्रा१ऽम्मा१र्मा२ । महा३यि । आ२३४वो६हायि ॥ (१) सनद्र । द्रा१ययज्या३वायि । वारुणाया३ । मारु२द्भा२३४याः । वरायिवो१वीर२न् । परा३यि । स्रा२३४वो६हायि ॥ (२) एनाविश्वानि । अर्य्या३आ । द्यूम्नानी३ । मानू२षा२३४णाम् । सिषासा१न्ता२ः । वना३ । मा२३४वो६हायि (३) ॥ ११ † ॥ [१७]

---

* ऊ० गा० १४प्र० १ख० ५गा० ।

† ऊ० गा० १९प्र० १ख० ११गा० ।

॥ सौमित्रम् ॥ उच्चातेजातमन्धसा३ए। दिविस
द्भूमि। आ२१२३। ददा३४३यि। ऊ२३ग्राम्। श
र्मा२ओ२३। महोवा। आ५वो६हायि॥(१) सनइन्द्राय
यज्यवा३ए। वरुणायम। रु२१२३। द्भिया३४३:।
वा२३रायि। वोवा२औ२३। परोवा। स्वा५वो६हा
यि॥(२) एनाविश्वान्यर्य्यआ३ए। द्युम्नानिमा। नू२१२३।
षाणा३४३म्। सा२३यिषा। सन्ता२ओ२३। वनो
वा। मा५वो६हायि(३)॥ ६ *॥ [१८]

॥ ऐटतम् ॥ उच्चा। एउच्चा। तेजातम्। आ
३। जा२मा२३४औहोवा। धा२३४सा:। दिवायिसा
२३४द्भू। मिया३। मा२या२३४औहोवा। दा२३४दे।
उग्रा(ं)शा२३४र्म्मा। मह्वा३यि। मा२हा२४४औहोवा।

---

* ऊ० गा० २०प्र० १अ० ६सा०।

आ२३४वाः ॥(१) सनः। एमानाः। इन्द्राय। या। ३।
या२व्या२३४औहोवा। ज्या२३४वे। वरुणा२३४या।
मरु३। मा२रु२३४औहोवा। दभी२३४याः। वरायिवो
२३४वीत्। परा३यि। पा२रा२३४औहोवा। आ२३४वा॥(२)
एना। एआयिना। विश्वानि। आ३। ना२आ२३४औहो
वा। र्या२३४आ। द्यु॒म्ना२३४नी। मानू३। मा२नू२३४
औहोवा। षा२३४णाम्। सिषासा२३४न्ताः। वना३।
वा२ना२३४औहोवा। मा२३४हे(३)॥ ७*॥ [१९]

॥ धुरासाकमश्वम्॥ उच्चातेजा३। हौ३हो३१।
तमन्धसा३ः। हौ३हो३१यि। दिविसद्भू३। हौ३हो
३१यि। मियाददा३यि। हौ३हो३१यि। उग्रꣳशर्म्मा
३। हौ३हो३१यि। महिश्रवा३ः। हौ३हो३१२३४५ई।

* ऊ० गा० १०प्र० १ख० ७सा०।

डा ॥(१) मनइन्द्रा३। चौ३हो३१। ययज्यवा३यि। चौ३हो३१यि। वरुणाया३। हौ३हो३१यि। मरुद्भिया३ः। चौ३हो३१यि। वरिवोवी३त्। चौ३हो३१यि। परिस्रवा३। चौ३हो३१२३४५ई। डा ॥(२) एनाविश्वा३। चौ३हो३१। निअर्य्यआ३। हौ३हो३१यि। द्युम्नानिमा३। चौ३हो३१यि। नुषाणा३म। चौ३हो३१यि। सिषामन्ता३ः। चौ३हो३१यि। वनामहा३। हौ३हो३१२३४५ई। डा(३) ॥ ८ * ॥ [२०]

॥ विल्म्बसौपर्णम् ॥ उच्चातेजातमन्धसः। ईयइयाहायि। दिविसद्भूमिया। हा३हा३यि। दा२३४दायि। ऊग्रा३उवा३। शा२र्म्मा२३४औहोवा। महिश्रवा२३४५ः ॥(१) सनइन्द्राययज्यवे। ईयइयाहायि। व

* ऊ० गा० १०प्र० १अ० ८सा०।

४र५र र २ १ १ ४ १ १
हुणायमंहु। हा३हा३यि। दंभार२३४या। वारा३उ

१ १ ३ ५र र २ ३ १ १ १ १ २र१र
वा३। वो२वार२३४औहोवा। परिस्रवा२३४५॥(२)एन।

२र १ १र १ २ १ २ ४ ३र ४ र ५र २
विश्वान्यर्य्या। इयइयाहाहि। द्युम्नानिमानू। हा३

२ १ ५ १ २ २ १ ३
हा३यि। षा२३४णाम। सायिषा३उवा३। सा२न्ना

५र र २ र २ १ १ १ १
२३४औहोवा। वनामहा२३४५यि(३)॥ ८ * ॥ [२१]

२र १ २ १ ३ २
॥ मार्गीयवाद्यम्॥ उहौहोवा। तेजा२। तमा

३ ५ १ २ र १ २ १
न्धा२३४सा:। दिविसद्भू। मियादा१दा२यि। उग्र

२ २ ३ ५ १ ३
म्। हा। औ३होयि। ग्रा२३४म्मा। मा२हा२३४

५र र २ १ १ १ १ १ २ र १ १ १
औहोवा। ए३। अवा२३४५:॥(१) स्नौहोवा। आयि

३ २ ३ ५ १ २र १ २
न्द्रा२। ययाज्या२३४वायि। वरुणाय। मरुद्भा१

१ र २ २ २ ५ १
या२:। वरा। हा। औ३होयि। वो२३४वोत्। पा

* ऊ० गा० २०प्र० १ख० ९सा०।

२ ५र र २ १ १ १ १ १ २र र १ २
२रा२३४औहोवा। ए३। स्ववा२३४५॥(२) एनौहोवा।
१ ३ १ ३ ५ १ र २ र १ २
वायिश्वा२। निश्वार्य्या२३४आ। द्युम्नानिमा। नृषा१
१ र २ २ ३ ५
णा२म्। सिषा। हा। औ३होयि। सा२३४न्ताः।
१ ३ ५र र २ १ १ १ १ १
वा२ना२३४औहोवा। ए३। महा२३४५यि(३)॥ १४*॥[२२]

३ र २र १ ४ ५
॥ ऐडकौत्सम॥ सनाद्योन्द्रा२३। ययज्यवइया।
१ २र १ २ १ २र १ २ १
वरुणायमरुद्भियः। वारुणाय। मरुद्भा२३याः। वा
२ २ १ २ २ १ २ १
रा३यिहायि। वोवो३हायि। परिस्रा२३वा३४३। ओ
२३४५इ। डा(२)॥ ४†॥[२३]

२र र २ १र २
॥ सौमित्रम्॥ एनाविश्वान्यर्य्य आ३ए। द्युम्नानि
१र र २ १ २
मा। नृ२१२३। षाणा३४३म्। सा२३यिषा। सन्ता
१ ४ ५ ४ ५
२ओ२३। वनोवा। मा५होइहायि(३)॥ १८‡॥[२४] ८

---

* ऊ० गा० २०प्र० २अ० १४सा०।

† ऊ० गा० १२प्र० १अ० ४सा०। द्वितीयस्या ऋचोगानमेतत्।

‡ ऊ० गा० १६प्र० २अ० १०सा०। तृतीयस्या ऋचोगानमेतत्।

द्वितीय-सूक्तरूपे प्रगाथे* प्रथमा—

२   १   २   ३ १   २ ३   १   २र

पुनानःसोमधारयापोवसानोअर्षसि।

१   २ ३ १   १   २र ३ १ २   ३ १   २ ३१   २ ३ १ २

आरत्नधायोनिमृतस्यसीदस्युत्सोदेवोहिरण्ययः॥ १† ॥

हे सोम। "पुनानः" पूयमानस्त्वम् "अपः" उदकानि वसतीवर्याख्यानि "वसानः" आच्छादयन् "धारया" "अर्षसि" पवित्रं गच्छसि, ततो "रत्नधा" रत्नानां रमणीयानामन्नानां दाता च "ऋतस्य" सत्यभूतस्य यज्ञस्य "योनिं" स्थानम् "आसीदसि"। कीदृशस्त्वम्? "उत्सः" प्रस्यन्दनशीलः "देवः" द्योतमानः, "हिरण्ययः" हिरण्मयः सुवर्णोत्पत्तिस्थान मित्यर्थः॥

"उत्सोदेवः"—"उत्सोदेव"—इति पाठौ॥ १ ॥

---

* "प्रकर्षेण ग्रथनं यत्र स प्रगाथः। प्रकर्षो नाम आम्नाता दृक्पाठा दाधिक्यम्" —इति ऐ० ब्रा० अ० ८, २, ६ अधि० १ वर्गके माधवव्याख्यायाम्। एष च प्रगाथः— पादाभ्यास-पुरःसर मृगन्तरसम्पादनेनोपजायते। अत्र च "पुनःपदा"—इति श्रौतोक्ति लिङ्गम्। तथा च श्रूयते ताण्ड्ये तृतीये —"एषा वै प्रतिष्ठिता बृहती या पुनः पदा तद् यत् पदं पुनरारभते तस्माद् वत्सो मातर मभिहिङ्करोति"—इति। अस्यार्थः— या बृहती पुनः पदा भवति, सैषा प्रतिष्ठिता स्थिरा भवति ; पदं चतुर्थः पादः सोऽप्यृगन्तर-सम्पादनाय पुनः पठ्यते, ततः सा बृहती पुनः पदा ; सैव मृङ्माता, तस्याः पादो वत्सः ; तथा सति यस्मादेव चतुर्थं पाद मुद्गाता पुनरारभते तस्माद् वत्सो मातर मभि वीक्ष्य हिं मिति शब्दं करोतीति।

† छ० आ० ६,१,२,१ (२भा० ७० पृ०)=ऋ० वे० ७, ४, ११, ४। छ० बृहती। दे० ऋ० पूर्ववत्।

अथ द्वितीया।

१ १२ ३१ ३ १२ ३१ ३ २ ३ २ ३ २ ३ १ २

दुहानऊधर्दिव्यम्मधुप्रियम्प्रत्नꣳसधस्थमासदत्।

१ २ १ ३ १ २ ३ ३१ ३ १ २ ३ १ २ ३ २

आपृच्छ्यन्धरुणंवाज्यर्षसिनृभिर्धौतोविचक्षणः॥ २* ॥९ †

"मधु" मदकरं ‡ "प्रियं" प्रीणनकारि ¶ "दिव्यं" दिवि-भवम् "ऊधः" सोमवल्ली-लक्षणं "दुहानः" पवमानः § सोमो-देवः "प्रत्नं" पुरातनं "सधस्थं" सह तिष्ठन्त्यत्रेति सधस्थं स्थान मन्तरिक्षम् ‖ "आसदत्" आसीदति [सदेर्लुङि रूपं] तदनन्तरम् "आपृच्छ्यं" कर्मणा प्रष्टव्यं "धरुणं" कर्मणो धारयितारं यजमानं "वाजी" अन्नवान्** सन् हे सोम त्वम् "अर्षसि" तस्मै अन्नं दातु मतिगच्छसि। कीदृशः? नृभिः कर्मनेतृभिर्ऋत्विग्भिः "धौतः" अदाभ्यग्रहे परिशोधितः

---

* ऋ० वे० ७, ५, १२, ५।　　　† इदं माध्यन्दिनपवमानं द्वितीयम्।

‡ 'मधु स्वादु सोमाख्यम्'—इति वि०।

¶ 'प्रियं देवमनुष्याणाम्'—इति वि०।

§ 'दुहानः दुह्यमानः। ऊधः ऊधसः सकाशात् दशापवित्ररूपात्। अथवा ऊधउदकं यत्र क्रियते सोमस्य सकाशात् तद् दुह्यते'—इति वि०।

‖ 'सधस्थं स्थानं द्रोणकलशाख्यम्'—इति वि०।

** अन्नवान्—सोमः, चरुः, पशुः, धानाः, करम्भः, पुरोडाशः, पयस्येति।

[ "तैरेनं* चतुराधूनोति पञ्च कृत्वः सप्त कृत्वो वा ( १२, ५, १७)"—इत्यापस्तम्बेन सूचितम् ] "विचक्षणः" सर्वस्य विद्रष्टा॥

"नृभिर्यतो"—"नृभिर्धूतः"—इति पाठौ॥ २॥ ९

२र   र   १   ५   १र
॥ रौरवम्॥ पुनानःसोमा३धारा२३४या। आपो
र र   र   र र   ३१   १२
वसानोअर्षस्यारत्नधायोनिमृतस्यसा२इदसाइ। ओहा
२   १ र रर   २   १ २   २   १
३उवा। उत्सोदेवोहिरा२३ण्याइ। ओहा३उवा। एह्यया।
२ ४ ५   २ र र र   १   ५   १र र
औ३होवा॥(१) उत्सोदेवोहा३इरण्या२३४याः। उत्सोदे
र   र   र   र   ३१   १२
वोहिरण्ययोदुहानऊधर्दिवियम्मधु२प्रियाम्। ओहा३उ
२   १   २   १ २   २   १
वा। प्रत्न१सधस्थमा२३साइ। ओहा३उवा। सदात्।

---

* तै· निग्राभ्य-सञ्ज्ञकाद्भिः, एनं सोममित्यर्थः; अदाभ्यग्रहे इति सङ्गति-लभ्यः। अदाभ्यमिति ग्रहविशेषस्य नाम, तथाहि—'अदाभ्यं गृह्णात्यासिच्य निग्राभ्याः पात्रे तस्मिंस्त्र्यंशून् अवधायाग्नये त्वा गायत्रच्छन्दसमिति प्रतिमन्त्रमुपयामः सर्वत्राविशेषात्'—इति का० श्रौ० सू० १२, ५, १३—१५। अस्यार्थः—पश्चिमौदुम्बरे पात्रे अंशुगृहीतः तस्मिन् होतृचमसस्था निग्राभ्य-सञ्ज्ञा अप आनीय तस्मिंस्त्रिषु सोमलताः प्रक्षिप्याग्नये त्वेत्यादिभिस्त्रिभिर्मन्त्रैः क्रमेणादाभ्यं ग्रहं गृह्णाति। मन्त्रैः सोमलताप्रक्षेपो वेति केचित्। उपयामगृहीतोऽसीत्येतत् त्रिष्वपि मन्त्रेष्वादावनुषञ्जनीयं सर्वशेषत्वादाम्नानस्येति॥ किञ्च अभिषोतव्यस्य सोमस्य सेचनीया आपो निग्राभ्या उच्यन्ते।

४ ५ २ १ ५ १
औ२३होवा ॥(२) प्रत्नꣳसधस्था३मा सा२३४दात्। प्रत्नꣳस
२ २ २ ३ २ १ १ २
धस्थमासदद्दापृच्छन्धरुणंवाजियार्षसाइ। ओहा३उवा।
१ २ १ १ १ २ २ १ २
नृभिर्यौतोविश्वा२३हाइ। ओहा२उवा। हणा। औ
४ ५ ४
३होवा। होऽ५इ। डा (३) ॥ २ * ॥ [१]

३ २ २ ४ ५ १
॥ यौधाजयम् ॥ पुना३१। ना३:सो। म। धा
२ ५ १ २ १ ३ २ २ ५
रा२३४या। आपो३। वसा२। नश्चा३४५। षा२३४सी।
१२ १ १ १ १२ १ ३ २ ३
आरात्नधाः। यो। निम्हता२। स्यसा३४५इ। दा२३
५ २ १ ३ २ ३
४सी। उत्सा२:। दाइवो२। हिरा३४५। ण्या२३४
२ ३ २ २ ४ ५ १ २ ५ १
याः ॥(१) उत्सो३१। द३वो। हि। रण्या२३४याः। उ
२ १ ३ १ ३ ५ २ १ २
त्सो३। दाइवो२। हिरा३४५। एया२३४याः। दुहान
१ २ १ ३ २ ३ ५ २
ऊ। धः। दिविया२म्। मधू३४५। प्री२३४याम्। प्र
१ ३ २ ३ ५ ३
त्ना२म्। साधा२। स्थमा३४५। सा२३४दात् ॥(२)प्र

* ऊ० गा० १प्र० १अ० २सा०।

त्वा३१म्। सा३ध। स्थम्। आसा२३४दात्। प्रात्ना
३म्। सधा२। स्थमा३४५। सा२३४दात्। आपा
र्क्रियाम्। ध। रुणवा२। जिया३४५। षा२३४सौ।
नूभा२इः। धौतौ२। विचा३४५। त्वा २ ३ ४ णा (३)
॥ ३ * ॥ [ २ ]

॥ ऐडमायास्थम् ॥ आयिपुना। ना:सो। मधार
या। आपोवसा३१। नौअर्षसी। आरत्नधा३१:।
योनिम्रता। स्थसीदसी। उत्सोदेवा३१:। हिरण्या२
३या३४३:॥(१) आउत्सा:। दायिवो। हिरण्ययाः। उ
त्सोदेवा३१:। हिरण्ययाः। दूह्यानऊ३१। धर्दिवियाम्।
मधुप्रियाम्। प्रात्नꣳसधा३१। स्थमासा२३दा३४३त् ॥(२)
आयिप्रत्नाम्। साधा। स्थमासदात्। प्रात्नꣳसधा
३१। स्थमासदात्। आपृच्छिया३१म्। धरुणंवा। जि

* ऊ० गा० १प्र० १ख० ७सा०।

१ २ २१ २ १
यर्षसायि। नृभिर्द्धौता३१ः। विचचा२३णा३४३ः। औ

२३४५ई। डा (३) ॥ २० * ॥ [३]

२र २ २र १ २
॥ त्रिणिधनमायास्यम्॥ पुनानःसोमधाहाउह्वोवा।

१ २ •२ ५ १ ३१ २ ५
रायाआ२३४पो। वसा२। नआ३४५। षा२३४सो।

१२२ ३र ४र ५ १ र र ३२
आरा३४। औह्वोवा। लधायोनिम्रता२। स्यसा३४५

३ ५ १ २ ३र ४र ५ १
ग्नि। दा२३४सो। उत्सा३४। औह्वोवा। दायिवो२

३ २ ३ ५ २र रर र र १ २
हिरा३४५। एया२३४याः ॥(१) उत्सोदेवोहिराहाउह्वोवा।

१ २ ३ ५ १• ३१ २
एयायाऊ२३त्साः। दायिवो२। हिरा३४५। एया२३४

५ १ २ ३र ४र ५ १र ३१
याः। दुहा३४। औहोवा। नऊधर्हिवियारम्। मधू

२ ५ १ २ ३र ४र ५ १
३४५। प्री२३४याम्। प्रत्ना३४। औह्वोवा। साधा

३२ ३ ५ २ र र
२। स्थमा३४५। सा२३४दात् ॥(२) प्रत्न७ँसधस्थमाहाउ

१ २ १ २ ३ ५ १ ३२
ह्वोवा। सार्दतप्रा२३४त्नाम्। सधा२। स्थमा३४५।

* ऊ० गा० १प्र० २अ० १०सा० ।

२ ५ १र२ ३र ४र२ १
सा२३४द्रात्। आपा३४। औहोवा। क्रन्वद्रणंवार।

१२ ३ ५ १२ ३र ४र५ १
जिया३४५। षा२३४सी। नृभा३४। औहोवा। धौ

१२ ३ ५
तौ२। विचा३४५। चा२३४णाः(३)॥ १ * ॥ [४]

२र२ १ २र १र११ २१र
॥ कण्वरथन्तरम्॥ पूनानःसोमधारया। अपोवमा।

२ १ २ २ र र र र ३ ५र
नो३आर्षा३सी। आरत्नधायोनिम्टतस्यसीदसा२३४ऐही।

२ १र ५ २ २ २ ३
उत्सोदा२३४यिवाः। हिरा३१उवा२३। ए३। पय्य

२ र र१र२र १ २ १ २१र र र २ १
आ॥(१) उत्सोदेवोहिरण्ययाः। उत्सोदेवो। हा३यिरा

२ २ र र ३ ५र २१
ण्या३याः। दुहानऊधर्द्दिवियम्मधुप्रिया२३४मैही। प्रत्नꣳ

५ २ २ १२२ र
सा२३४धा। स्थमा३१उवा२३। ए३। सद्दा॥ (२)प्रात्नꣳ

१२ १र२१ २१ २ १ २ २ र
सधस्थमासदात्। प्रत्नꣳसधा। स्थाश्मासा३दात्। आ

र २ ५र २ १ ५ २
पृच्छ्यन्धरुणंवाजियर्षसा२३४ऐही। नृभिर्द्धौ२३४ताः। वि

२ १३२
चा३१उवा२३। ए३। चणआ (३)॥ ४ † ॥ [५]

---

* क० गा० २प्र० १ख० १सा०।

† क० गा० ४प्र० १ख० ४सा०।

॥ गौङ्गवम् ॥ पुनानो३:सोमधारया। आपो२। वसानोआ३। षासायि। आरत्नधायोनिमा२३र्त्ता२। स्यसा३यिदासायि। आरत्नधायोनिमृत। स्यसा३यिदी मायि। ऊ२मोई। वा। औ३हो। हिरो२३४वा। एया५योई३हायि॥(१) उत्सो देवा३यिवोहिरण्ययाः। उत्सो २। देवोहिरा३। ण्याया:। दुहानऊधर्हिवा२३या२म्। मधू३प्रायाम्। दुहानऊधर्हिवियम्। मधू३प्रायाम्। प्रात्नᳲस। धा। औ३हो। स्यमो२३४वा। सा५दो ई३हायि॥(२) प्रत्नᳲसा३धस्थमासदात्। प्रात्ना२म्। सधस्थमा३। सादात्। आपृच्छन्धरुणा२३वा२। जिया ३र्षासायि। नृभिर्हौ। ता। औ३हो। विचो२३४वा। ज्ञा५णोई३हायि(३)॥ ५ *॥ [६]

* ऊ० गा० ४प्र० १अ० ५ठा०।

४ ५र २ ४र १र ४ ५र २
॥ द्विनिधनमायास्यम्* ॥ पुनानःसोमधारया । ए३ ।
१ ४ १ २ १ १२ २
औ३हो५वा३ऽऽ । आपो३ । वसा२ । नआ३४५ । धा
१ १ १ १ १ १ २ १ २ १ २ १
३सी२३४५ । आरत्नधाः । योनिमृता । स्यासा३आ ।
२ ४ ५ २ १ २ २ १
औ३हो३ । दा२३४सी । उत्साऔ३हो । दायिवो२ ।
१ २ २ १ १ १ १ १ १ ४र २ ३र ४ ५
हिरा३४५ । ण्या३या२३४५ः ॥(१) उत्सोदेवोहिरण्ययः ।
२ २ ४ १ २ १ १ २
ए३ । औ३हो५वा३ऽऽ । उत्सो३ । दायिवो२ । हिरा
२ १ १ १ १ १ ५ २ २ १ २ १
३४५ । ण्या३या२३४५ः । दूहानऊ । धार्हिवियाम् ।
२ १ २ ४ ५ २ १ २ २
माधू३षा । औ३हो३ । प्री२३४याम् । प्रत्नाऔ३हो ।
१ २ २ २ १ १ १ १ १ ४ २ ४ ३ ४
साधा२ । स्थमा३४५ । सा३दा२३४५त् ॥(२)प्रत्नꣳसधस्थ
३र ४ ५ २ ४ ४ १ २ १
मासदत् । ए३ । औ३हो५वा३ऽऽ । प्रात्ना३म् । सधा२ ।
१ २ २ १ १ १ १ १ १ २ १
स्थमा३४५ । सा३दा२३४५त् । आपृच्छियाम् । धारु

* "तिरश्चीन मायास्यम्"—इति भा० पु० ।

२ १ २ १ ४ ४ ५ २ १ २
यांवा। जायाइआ। औइहोइ। षा२३४सी। नूभाओ

२ १ २ १ २ १ १ १ १ १
इहो। धीतोर। विचा ३ ४ ५। स्वाइणा २ ३ ४ ५:(३)

॥ ६ * ॥ [७]

४ र ३ ४र ३र ४ ५र २ २
॥ उत्सेधम् ॥ पुनानःसोमधारया। पः। वसाइ४

३र ४र ५ ३र १ २ ५
औहोवा। नोअर्षसाऽ२यि। हाइ१उवार३। ऊ३५पा।

३र २ ४ ५र ४ ५ १ २ १ २ र १
आराइत्नधा। औहोवाहायि। योनिमृता। असीदा

२ २ ५ ३ २ ४र ४र
सि। हाइ१उवार३। ऊ३४पा। उत्सोइदेवः। औ

४ ५ १ २ ४ २ ४र र ३र ४
होवाहायि। हिराइण्याभ्याइ५ई: ॥(१) उत्सोदेवोहिर

५ ३र २ ३र ४र ५ २ १
ण्ययः। उत्सः। देवाइ४औहोवा। हिरण्ययाऽ२ः।

२ ५ ३ २ ४ ५र ४ ५
हाइ१उवार३। ऊ३४पा। दुहाइनऊ। औहोवाहायि।

१ २ १ २ १ १ २ ५
धार्हिवियाम्। मधुप्रायम्। हाइ१उवार३। ऊ३४पा।

३ २ ४ ५र ४ ५ २ १ ४
प्रत्नाइ९सध। औहोवाहायि। स्थमाइसाभ्दाइ५त् ॥(२)

---

* ऊ० गा० ४प्र० १ख० ६सा०।

४ २ ४ ३ ४ ३र ४ ५ २ १ २र ४र ५ २
प्रत्नꣳसधस्थमासदत् । प्रत्नम् । सधा३४औचोवा । स्थ
५र २ ५ १र २ ४
मासदाऽरत् । हा३१उवा२३ । ऊ३४पा । आपा३र्च्छि
५र ४ ५ १ २ १ २ १ २
याम् । औहोवाहायि । धारुणंवा । जियर्षासि । हा
२ ५ २ १ ४र ५र ४ ५
३१उवा२३ । ऊ३४पा । नृभा३यिवीतः । औहोवाहा
२ २ ४ २ १ १ १ १
यि । विचा३क्षापुणा६५६ः । ऊ२३४५(३) ॥११*॥ [८]

४ ३ ४ २ ४र ५
॥ यज्ञायज्ञीयम् ॥ पुनाऽपूनः । सो३मा३धारा या ।
१ र १ १ २ २ १र १ र र
आपोवसा । नो३आर्षा३सी । आरा२त्नधायोनिम्ट ।
२ १ २ २ १ र र र
तस्या२३सा । ऊम्मायि । दा३सायि । ऊत्सोदेवोहिरा
१ २ १ २ १ २ १ २ २
२ण्ययाउ ॥(१)ऊत्माः । दायिवो । हा३यिराण्या३याः ।
१ १र २ १ २ २
दुहा२नऊधर्हि वि । यम्मा२३धू । ऊम्मायि । प्रा३याम् ।
१ २ २ १ २ १ २
प्रात्नꣳसधस्थमा२सदाउ ॥(२)प्रात्नाम् । साधा । स्था३
१ २ २ १ १ र २
मासा३दात् । आपा२र्च्छंयन्धरुणम् । वाजा२३या ।

---

* ऊ० गा० ६प्र० १अ० ११सा० ।

ऊम्भायि । षा३सायि । नृभिर्वीतोविचा२क्षणाउ । वा
३४५ (ङ) ॥ १२* ॥ [८]

॥ निषेधम् ॥ पुनानःसोमा३धारया । अपोवसा ।
नोअर्षसा२यि । इहा३ । आरा३त्नाधाः । हाहो२३
४हा । योनिम्टता । स्यसीदा२३सायि । इहा३ । उ
त्सोऽ३दायिवाः । हाहो२३४हा । हिरा३ण्यापुया६५६ः ॥(१)
उत्सोदेवोहा३यिरण्यया: । उत्सोदेवो । हिरण्यया२: ।
इहा३ । इहा३नाऊ । हाहो२३४हा । धाहिवियाम् ।
मधुप्रा२३याम् । इहा३ । प्रात्ना३ऽसाधा । हाहो२३
४हा । स्थमा३सा५दाई५६त् ॥(२) प्रत्नऽसधस्था३मासदा
त् । प्रत्नाऽसधा । स्थमासदा२त् । इहा३ । आ
पा३च्छ्यायाम् । हाहो२३४हा । धारुणांवा । जियर्षा

* ऊ० गा० ६प्र० १अ० १२सा० ।

२३साथि। इन्द्राइ। नृमाश्यिंवौंनाः। हाचोर२३४हा।
विचा२ला५णाइ५इः। चे२३४५ (३) ॥ १३ * ॥ [१०]

॥ समन्तम् ॥ पुनानःसोमधारया। अपोवसानोअ
र्षसायि। आरत्नार२३धाः। योनिमृत। स्यसायिदामा।
औहोइ४वाहायि। उत। सोदार२३यिवा३ः। होवा३
हायि। हिरण्या२३या३४३ः ॥ १) उत्सोदेवोहिरण्ययाः।
उत्सोदेवोऽहिरण्ययाः। दुहाना२३ज। धार्हिवियम्।
मधूप्रायाम्। औहो३४वाहायि। प्र। त्नाꣳसा२३धा
३। होवा३हा। स्थमासा२३दा२४३त् ॥(२)प्रत्नꣳसधस्थ
मासदात्। प्रत्नꣳसधास्थमासदात्। आपृच्छा२३याम्।
धारुणांवाजियार्षासा। औहो३४वाहायि। नृ। भायि

* ज० गा० ५प्र० १ख० ११गा०।

२ १ २ २ १ २ १
हौ२३ता३:। होवा३हायि। विचक्षा२३णा३४३:। यो

२३४५ई। डा (३) ॥ २ * ॥ [११]

५ ४ २ ४ ५र ४ ५ १ र २
॥ अभीवर्त्तम् ॥ पुना३ना३:सोमधारयोवा। आपोव

र र १ २ १ २ २र
सा। नोआर्षा१सा२यि। आरत्नधा३१२३४:। योनि

४ ५ २ १ २ १ २ २ २
मृत। स्यसायिदा१सा२यि। उत्सोदा१यिवा२:। हिरा

१ ३ १ १ १ १ ५ ४ २ ४ ५ ४ ५
३ण्या२३४५। या२३४५: ॥(१) उत्सोदे३वोऽहिरण्ययोवा।

१ र २र १ २ १ र २ ३
ऊत्सोदेव:। हिराण्या१या२:। दुहानऊ३१२३४। ध

४ ५ २ १ २ १ २ ३
हिंवियम्। मधुप्रा१या२म्। प्रत्ना९सा१धा२। स्थ

२ १ ३ १ १ १ १ ५ ४ २ ४ ५र
मा३। सा२३४५। दा२३४५त् ॥(२) प्रत्ना३९सा३धस्थमा

४ ५ १ २ १ २ १ २
सदोवा। प्रात्न९सध। स्थमासा१दात्। आपृच्छिया

३ ४ ५र २ १ २ १ २
३१२३४म्। धरुणांवा। जियार्षा१सा२यि। नृभायि

३ २ १ ३ १ १ १ १
हौ१ता२:। विचा३। क्षा२३४५। णा२३४५:(३)॥१२ †॥[१२]

---

* ऊ० गा० ६प्र० २अ० २सा०।

† ऊ० गा० ८प्र० २अ० १२सा०।

५ ४ २ ४ ५ १ र
॥ घर्मीवर्त्तम् ॥ उत्सोऽ३देऽ३वोऽ२हिरण्ययोवा। उत्सो
२१ १ २ १ र र ३ ४
देवः। हिराण्या१या२ः। दूहानऊ३१२३४। धर्द्दिवि
५ २ २ १ २ ३ १
यम्। मधूप्रा१या२म्।(२) प्रत्ना७सा१धा२। स्थमा३।
१ ३ १ १ १ १
सा२३४५। दा२३४५त् (३)॥ १४ *॥ [१३]

५ २ ४ ५ ४र ५ २ १
॥ महाकालेयम् ॥ प्रत्न७सा३धस्थमासदात्। प्रत्ना
२ १ २ ३र २ १ २र ३ २ १
७सधा। स्थमासदा२३त्। आपृच्छियाम्। धा२३४।
३ ४ र ५ २ २ १ ३र २ २
कलांवाजिय। षा३सायि। नृभायिद्यौती। वा३४३यो
५ ४ ४
३४वा। विषा५त्तणाः। द्यो५ई। डा(३)॥ १५†॥ [१४]

१ ४र र ३र ४ ५ २ २ ३ ५
॥ वासिष्ठम् ॥ उत्सोदेवोहिर। ण्ययांओ२३४वा।
४ ५ २ १ १ र र र २
इयाहायि। ऊवेहो२यि। उत्सोदेवोहिराण्या१या२ः।
१ र र १ २ ५ २ १
दुहानऊधर्द्दिवियम्। मधूप्रा१या२म्। ई३या॥(२) प्रत्न

* ऊ० गा० प्र० १ ख० १४ सा०।

† ऊ० गा० प्र० १ ख० १५ सा०।

५ १ १४ २ १.१ १
ॳसा२३४धा। स्यमासा२३४५दा६५६त्। अवा३सा२३
१ १
४५यि (३) ॥ १६* ॥ [१५]

१ २ २ १ २ २ १ २
॥ महावैष्टम्भम् ॥ पुनानःसोहायि। मधारयोवा।
१२ १ २ २ १ २ १ २ २ २
आपोवसा। नोआर्षा१सा२३यि। होवा३हायि। आ
१ १ २ १ २
रत्नधायोनिमृत। स्यसायिदा१सा२३यि। होवा३हा
२ १ २ १ २ २ १
यि। उत्सोदा१यिवा२३ः। होवा३हायि। हिर। ण्या
२ ५२ २ १ २२२ १ २ १ २
२या२३४औहोवा ॥ (१) उत्सोदेवोहायि। हिरण्ययोवा।
१ २ २२ १ २ १ २ २ २
उत्सोदेवः। हिराण्या१या२३ः। होवा३हायि। दुहा
१ २२ १ २ १ २ १ २ २ १
नऊधर्हिवियम्। मधूप्रा१या२३म्। होवा३हायि। प्र
२ १ २ २ १२ २
त्नाॳसा१धा२३। होवा३हा। स्यमा। सा२दा२३४
५२ २ २ १ २ २ १ २ १
औहोवा ॥(२) प्रत्नॳसधोहायि। स्यमासदोवा। प्रा
२ १ २ १ २ २ २ १
त्नॳसध। स्यमासा१दा२३त्। होवा३हायि। आपृ

* ऊ० गा० ८प्र० २अ० १६सा०।

१ १ २ ८ १ १ १ २ १ १
कन्धरुणांवा। जियार्षा१सा२३यि। होवा३हायि। नृ
१ १ २ १ १ २
भायिद्धौ१ता२३:। होवा३हायि। विच। हा२था२३
५र र २ ५
४औहोवा। दी२३४आः (३)॥ १२ *॥ [१६]

५ र २ ४र ५ ४र ५ २ १ २ १
॥ कालेयम् † ॥ पुनाना३:सोमधारया। अपोवसा।
१र ३ १ १ १र ३ २ १ ३ ४
नोअर्षसा२३यि। आरत्नधा३:। यो२३४। निमृतस्य
५र २ १ १ ३ र१ २ ५ ४
सी। दा३मायि। उत्सोदेवौ। वा३४३ओ३४वा। हि°
५ र १ ४र ५ ४ ५ २ १ १र १
रापुण्ययाः ॥(१) उत्सोदा३यिवोहिरण्ययाः। उत्सोदेवो।
२ ३ २ १ २ ३र २ १ ३ ४ ५
हिरण्यया२३:। दुहानऊ३। धा२३४:। दिवियन्मधु।
१ २ १ ३ १ २ ५ ४
प्रा३याम्। प्रत्ना॰सधौ। वा३४३ओ३४वा। स्थमा५
५ १ ४ ५ ४र २ १ २ १
सदात् ॥(२) प्रत्न॰सा३धस्थमासदात्। प्रत्ना॰सधा।
१ ३र २ १ १र ३ २ १ ३र र
स्थामासदा२३त्। आपृच्छिया३म्। धा२३४। रुणांवा

* ऊ० गा० १२प्र० १ख० १२सा०।

† "महाकालेयम्"—इति ख० पु०।

५ २ २ १ ३र २ २ ५
जिय। षा३सायि। नृभांयिदौंतौं। वा३४३ओ३४वा।
४ ४
विचा५क्षणाः। होऽ५ई। डा(३)॥ १२ *॥ [१७]

॥ वषट्कारणिधनम्॥

४ र ३ ४र ३र ४ ५र र २
पुनानःसोमधारया। पुनाना
४र ५ ४र ५ २र र र ऽ १ ७ र १ २
३ःसोमधारया। अपोवसानो३आर्षसा२यि। नोआर्षा
१र ऽ २ र र र १
१सार३यि। ओमो३वा। आरत्नधायोनिमृतस्या३सायि
७ २ १ २ १र ऽ २ र
दसा२यि। स्यसायिदा१सा२३यि। ओमो३वा। उत्सो
र र १ ० २ १ २ १र
दे वोदो३राण्य१या२ः। हिराण्या१या२३ः। ओम्। ओ२।
३ ५र र ३ ५
वा२३४। औहोवा॥ ऊ२३४पा(१)॥ २०†॥ [१८]

॥ दैर्घश्रवसम्॥

२र र र र र र र
पुनानःसोमधारयाओहाओहा३
२ १र २र र १ २ ऽ २ ऽ २ २
ए। अपोवसानोअर्षसि। ओ३हा। ओ३हा३ए३४।
३र २ ३ २ १ २ १ र २ ऽ
आरा३४त्नधाः। योनिमृ। तस्यासीदसायि। ओ३

---

* ऊ० गा० १०प्र० १ख० १३गा०।

† ऊ० गा० १०प्र० १ख० २०गा०।

१ ५ १ २ ३ १ ३र १ २ १ ५
हा। ओ३हा३ए३४। उत्सो३४देवा३ः। हिरो२३४वा।

४ ५ १र र र र र र २
ण्या५योऽ६हायि॥(१) उत्सोदेवोहिरण्ययओहाओहा३ए।

१र १र१र २ १ १ ५ २ ५ २२ ३२
उत्सोदेवोहिरण्ययः। ओ३हा। ओ३हाए३४। दुहा

३२ १ २ १ २ ५ २ ५
३४नञ। धाहिंवि। यम्माधुप्रियाम्। ओ३हा। ओ

२ २ ३ २ ३ २ २ १ ५ ४
३हा३ए३४। प्रत्ना३४ऽसधा३। स्थमो२३४वा। सा५

५ २ र र र र २ १
दोऽ६हायि॥(२) प्रत्नऽसधस्थमासदोहाओहा३ए। प्रत्नऽ

२ १ २ १र २ ५ २ ५ २ २ ३र २
सधस्थमासदत्। ओ३हा। ओ३हा३ए३४। आपा३४

३ २ १ २ र १ २ ५ २
च्छियाम्। धारुणम्। वाजार्यर्षसायि। ओ३हा।

५ २ २ ३ २ ३र २ १ ५ ४
ओ३हा३ए३४। नृभा३४यिद्धौता३ः। विचो२३४वा। चा

५
५णोऽ६हायि(३)॥ १६ *॥ [१९]

१ र १ २ ३ २ ४ ५
॥ मैधातिथम्॥ पुनानःसोहायि। मधा३राया।

२ १र १ २ १ २ १ २
अपोवा२हो१यि। साओ३हो। नाआउवा। षासा

* ऊ० गा० ११प्र० २अ० १६सा०।

१२ २ र ३ २ २ १ २ १
उवा । धारलधायोनिमृताऔ३हो । श्वासाउवा । दा
२ १ २२ २ २ १ १२ १ १२
साउवा । उत्सोदेवाऔ३हो । हिरा । औहो । वा
५ ४ ५ २ २ २ १ २ ३
होर२३४वा । सवा५योई३हायि ॥(१) उोदेवोहायि । हि
२ ४ ५ २ १२ २ २ १
रा३ण्ययायाः । उत्सोदा२होश्यि । वाऔ३हो । हायि
२ १ २ १ २ २ ३ २
राउवा । एयायाउवा । दुहानऊधर्दि वियाऔ३हो ।
१ २ १ २ १ ३ २ १२
माधाउवा । प्रायाउवा । प्रत्नꣳसधाऔ३हो । स्थमा ।
२१ १ ३२ ५ ४ ५ २ १
औहो । वाहोर२३४वा । सा५दोई३हायि ॥(२) प्रत्नꣳसधो
२ ३ २ ४ ५ २१ १
हायि । स्थमा३सादात् । प्रत्नꣳसा२होश्यि । धाऔ
२ १ २ १ २ १२
३हो । स्थामाउवा । सादाउवा । आपृच्छ्यन्धरुणंवा ।
२ २ १ २ १ २ १ र २
औ३हो । जायाउवा । षासाउवा । नृभिर्धौताऔ३
२ १२ २२ १ ३२ ५ ४ ५
हो । विचा । औहो । वाहोर२३४वा । चा५णोई३हा
यि(३) ॥ ७ * ॥ [२०]

* ऊ० गा० १३प्र० १अ० ७गा० ।

१ २ २ २ १ १ १ २
॥ वरुणसाम ॥ पुनानःसोमधारयोवा। ओवा।
४ २१२ २ १ २ १ १ १
आपोवसा। नोआर्षा१आ२यि। आर२३रा। त्नार२३
२ १२ २ १ २ १ ऽ २ १ २
धाः। योनिमृत। स्यसा२३द्धायि। दसा३आ। उत्सो
१२१२ २ १ २ १ २ १ २ १ ऽ १
देवोहिरण्ययः। ऊर२३त्साः। दायिवोह्यिरौ३। हो३१
५ ४ ५ २ १ २२ १ २
२३४। वा। एया५योऽ६हायि॥(१)उत्सोदेवोहिरण्ययोवा।
१ २ १ २ २२ १ २ १ २
ओवा। ऊत्सोदेवः। हिरास्या१या२ः। दूर२३हा।
१ २ १ २ १ २ १ ऽ ५
नार२३ऊ। धर्हिवियम्। मधूर२३द्धायि। प्रियाऽ३मा।
१ २ १ २ १२ २ १ २ १ २ ऽ
प्रत्नꣳसधस्थमासदत्। प्रार२३त्नाम्। साधस्थमौ३।
२ ५ ४ ५ २ २
हो३१२३४। वा। सा५दोऽ६हायि॥ (२)प्रत्नꣳसधस्थमा
१ २ १ २ १ २ १ २
सदोवा। ओवा। प्रात्नꣳसध। स्थमासा१दा२त्।
१ २ १ २ १२ २ १ २ १ ऽ
आर२३पा। क्षार२३याम्। धरुणंवाजियार२३हा। षसा
२ १ १२१२ २ १ २ १ २ १ २ १
३आ। नृभिर्धौतोविचक्षणः। नृर२३भोः। धौतोवि
ऽ २ ५ ४ ५
चौ३। हो३१२३४। वा। क्षा५णोऽ६हायि(३)॥ १८* ॥[२१]

---

* ऊ० गा० १३प्र० १ख० १८सा०।

॥ वैयश्वम् ॥ पुनानःसोमधारयाइए। अपोवसा२ नोअर्षसार३यि। होवा३हायि। आरत्नधायोनिमृता २। स्यासा३हायि। दा२३४सायि। उत्सोदेवोहिरा२ ३हो। एयया। औ३होवा। होपुइ। डा(१) ॥ १५* ॥[२२]

॥ वषट्कारणिधनम् ॥ उत्सोदेवोहिरण्ययः। उ त्सोदा३यिवोहिरण्ययाः। उत्सोदेवोहो३राण्यया२ः। हि राण्यया२३ः। ओमो३वा। दुहानऊधर्दिवियम्मा३धू पिया२म्। मधप्रा१यार३म्। ओमो३वा ॥(२) प्रत्न९स धस्था३मासदा२त्। स्थमासा१दा२३त्। ओम्। ओ २। वा२३४। ओहोवा। ऊ२३४पा(३) ॥ १६† ॥[२३]

॥ पृश्नि ॥ पुनाना२३ःसोमधारयाहाउ। अपोवसा

* ऊ० गा० १३प्र० २अ० १५सा०।

† ऊ० गा० १३प्र० २अ० १६सा०।

र १ २ १र २ १ २ २ १
नोअर्षसि। आराला१धार२३ः। होवा३हायि। योनि

२ १ २ १ २ २ १
मृत। स्वसायिदा१सा२३यि। होवा३हायि। उत्सो

२ १ २ १ २ १
दा१यिवा२३ः। होवा३हायि। हायिरण्ययः। इडा

२ १र ४र र ५ १ र २र१र २
२३॥(१) उत्सोदा२३यिवोहिरण्ययोहाउ। उत्सोदेवोहिर

१ २ १ २ १ २ २ १ २
ण्ययः। दुहाना१ऊ२३। होवा३हायि। धार्हिवियम्।

१ २ १ २ २ १ २
मधूप्रा१या२३म्। होवा३हायि। प्रत्ना॒सा१धार३।

१ २ २ १ र २ १ २ १
होवा३हा। स्थामासदत्। इडा२३॥(२) प्रत्ना॒सा२३

४ र ५ २ १ २ १ २ १र २ १र २
धस्थमासदहाउ। प्रत्न॒सधस्थमासदत्। आपाच्छा१

१ २ २ १ २र १ २
या२३म्। होवा३हायि। धारुणंवा। जियार्षा१सा

१ २ २ १ २ १ २
२३यि। होवा३हायि। नृभायिद्धौ१ता२३ः। होवा३

२ १ २ १ २ १
हायि। वायिचक्षणः। इडा२३भा३४३। ओ२३४५इ।

डा(३)॥३*॥[२४]

---

* ऊ० गा० १५प्र० २ख० ९सा०।

२र र र र
॥ आभीशवोत्तरम्॥ पुनानःसोमधारयाप्र। ए।
र ३र१ ७ २ ३ ५ २ २ १ र
अपोवसा२नो अर्षसायि। आ२३४रा। हा३हा। त्नधा
र २ २ १ ५ २ २
योनिमृतस्यामो१दसायि। ऊ२३४त्साः। हा३हायि।
१ र २ १ ५ ४ ५ २ र र र
दायित्वोहिरो२३४वा। एय।५योई्हायि॥(१) उत्सोदेवोहिर
र र १र १ ७ २ ३ ५ २
एयए। ए। उत्सोदेवो३हायिरण्ययाः। दू२३४हा। हा
२ १ र ७ २ २ ५ १
३हा। नऊधहिंवियम्माधुप्रायम्। प्रा२३४त्नाम्। हा
२ १ २ १ ५ ४ ५ १
३हायि। साधस्थमो२३४वा। सा५दोई्हायि॥(२) प्रत्नं
र १ २ २ २
सधस्थमासददे। ए। प्रत्नंमधा३स्थामा१सदात्। आ
५ २ २ १ र ७ २ २
२३४पा। हा३हा। आप्रच्छ्यन्धरुणंवाजायर्षसायि। न्दे२३
५ २ २ १ र २ १ ५ ४
४भीः। हा३हायि। धीतोविचो२३४वा। सा५णोई्
५
हायि(३)॥ ४ *॥ [२५]

* ऊ० गा० १५प्र० २अ० ४सा०।

२ र १ १र १र २र र १
॥ पौषमुत्रम्॥ पुनानःसोमधारया। औहोवा। ए
१ र र १ र १ र १
हिया। हाउ। अपोवसा२नोअर्षसि। आरात्ना१धा
१ २ १ २ ३ ५ १
२ः। योनिमृतना३। स्थामायिदा२३४सायि। उत्सो।
२ ३ ५ २ २ ४
दायिवौवाओ२३४वा। हा३हायि। हिरा५ण्ययाः॥(१)
१ र २र१र २ १ २ र १ २ र
उत्सोदेवोहिरण्ययः। औहोवा। एहिया। हाउ।
र १र १ २ १ २ २
उत्सोदेवो२हिरण्ययः। दुहाना१ऊ२। धोर्दिवियाइम्।
१ २ ३ ५ १ १ ३ ५ २
माधुप्रा२३४याम्। प्रत्नाम्। साधौवाओ२३४वा। हा
२ ४ २१ २ १ २ १र २ र
३हा। स्थमा५मदात्॥(२) प्रत्नꣳसधस्थमासदत्। औ
१ २ र १ र१ २
होवा। एहिया। हाउ। प्रत्नꣳसधा२स्थमासदत्।
१र २ १ ९ १ २ ३ ५
आपाच्छ्रा१या२म्। धारुणंवा३। जायषा२३४सायि।
१ २ ३ ५ २ ४
नुभायिः। धौतौवाओ२३४वा। हा३हायि। विचा५च
५
णाः। हो५ई। डा(३)॥ १० *॥ [२६]

* ऊ० गा० १०प्र० १ख० १०सा०।

५ र २ ४र ५र ४
॥ आष्कारणिधनं काण्वम्॥ पुनाना३ःसोमऽधार

५ १ र२ र र १ २ र २१
या। आपोवसा। नोआ२३र्षसाउ। वा३२। आर

२ १ २र ३ ४ ५ २ १र ५ १ २
त्नधाः। योनिमृता। स्यसीदा२३४सायि। ऊ२३त्साः।

१र र २ १ ५ र २ ४र ५
देवोहि। रण्या२३४५या६५६ः॥(१) उत्सोदा३यिवोहिऽर

४ ५ १ र १र १ २
ण्यया:। ऊत्सोदेवः। हिरा२३ण्ययाउ। वा३२। दु

१र २ १ २ ३ २ १ २ १ ५ १ २
हानऊ। धर्हि वियाम्। मधुप्रा२३४याम्। प्रा२३त्ना

१ २ १र ५ २
म्। सधस्थम्। आसा२३४५दा६५६त्॥(२) प्रत्नꣳसा

४ ५र ४ ५ १ २ १ २
३धस्थऽमासदात्। प्रात्नꣳसध। स्थमा२३सदाउ। वा

र १ २ १ २ ३ ४ ५ २ १ ५
३२। आपृच्छियाम्। धरुणंवा। जियर्षा२३४सायि।

१ २ १र र २ १ ३ ११
नृ२३भोः। धौतोवि। चत्ता२३४५णा६५६ः। आ२३

११
४५ष्(३)॥ ११*॥ [२७]

१ र र१ १
॥ सोमसाम†॥ पुनानःसो२मधारया।· आपो२वा

* ऊ० गा० १७प्र० १ख० १सा०।

† "बृहतोसोमः"—इति क० पु०।

२ १ १ २ १
सा२। नोअर्षसी। आरा२त्नाधा२ः। योनिमार्त्ता
१र २ १ २
२। स्यसीदसी। उत्सो२दायिवा२ः। हिरण्यार२३यो
१ २ २ १ १
३४३ः॥(१) उत्सोदेवो२हिरण्ययाः। उत्सो२दायिवो२।
२ १ १ १
हिरण्ययाः। दूहा२नाऊ२। धर्हिवाया२म्। मधु
१ १र २
प्रियाम्। प्रात्ना२१साधा२। स्थमासार२३दा३४३तं॥(२)
१ २ १ १ १र
प्रत्नऽसधा२स्थमासदात्। प्रात्ना२ऽसाधा२। स्थमा
१ १ १
सदात्। आपा२च्छ्रीया२म्। धरुणांवा२। जियर्ष
१ १ २ १
सायि। नृभा२यिद्धौता२ः। विचक्ता२३णा३४३ः। ओ
२३४पूई। डा(३)॥१६*॥[२८]
१ २ १ २र १ २
॥बार्हदुक्थ्यम्॥ पुनानःसोम। धा२रया। अपो
२ २र १ २ १ ० १ ०
वसानोअर्षा२३सायि। आरत्नाधा२ः। योनिमार्त्ता२।
१र २ २ १ २
स्यसीदसायि। उत्सोदा२३यिवाः। हिरण्यार३या३४

* कं० गा० १७प्र० १ख० १६मा०।

१र २र १र २ १ र र र २ १
३: ॥(१) उत्सोदेवोहि। रा२ण्यया:। उत्सोर्देवोहिर

२ १ २ १ ७ १
ण्यार२३या:। दूत्वा१नाऊ२। धार्हिवाया२म्। मधु

२ १र २
प्रियाम्। प्रत्नंसार२३धा। स्थमासार२३दा३४३त्॥(२)

२१ २१ २ १ २ १र
प्रत्न२ंसधस्थम्। आ२सदात्। प्रत्नंसधस्थमासार२३

२ १ ० १ ७ १
दात्। आपृच्छाया२म्। धारुणांवा२। जियर्षसा

२ १ २ १
यि। नृभिर्द्धौ२३ता:। विचक्षा२३णा३४३:। औ२३४५ई।

•डा (३)॥ ७ *॥ [२९]

५ ४ २ ३र ४ र ५ १ र र र
॥ पृष्ठम्॥ पुना३नःसोमध्यारया। अपोवसानोअ

१ २र १ र र र
र्षसार३यिद्धोइया। आरत्नधाऽ निम्रतस्यसीदसार३यि

१ २ १र २ १ २
द्धोइया। उत्सोदा२३यिवा:। हिरण्यार२३या३४३:॥(१)

५ ४ २र २र ४ ५ १ र र र १
उत्सा३दे वाहिरण्यया:। उत्सदे वोहिरण्यया२३द्धोइया।

२ र १ र १ २ १ २
दुहानऊधर्हि वियम्मधप्रियार३०द्धोइया। प्रत्नंसार२३धा।

* ऊ० गा० १८प्र० १ख० ७सा०।

१र २ ५ ४ २ ३ ४ र ५
स्थमासोऽ२३दा३४३त् ॥(२) प्रत्ना३ॐसधस्थमासदात्।
१ र १ २र १ र
प्रत्नॐसधस्थमासदा२३ब्बोद्वया। आपृच्छ्यन्धरुणं वाजियर्ष
१ २ १ २ १ २
सा२३यिच्चोद्वया। नृभिर्द्धौ२३ताः। विचक्षा२३णा३४३ः।
१
ओ२३४५ई। डा (३) ॥ २० * ॥ [३०]

५ ४ २ ४र ५र १
॥ कौल्मलबर्हिषम् ॥ पुना३ना३ःसोमधारया। अ
र र र १ १र र र १ २ र
पोवसानोआ२र्षासा२३४यि। आरत्नधायोनिमार्त्ता। ऐ
१ १र र र र २ १
होयि। स्या२सीदसायि। उत्सदे वोहिरोवा३ओ२३
५ ४ ५ ५ ४ २ ४र ५
४वा। ष्या५योईहोयि ॥(१) उत्सो३दा३यिवोहिरण्यया।
१ र र र १ २ र र १ २
उत्सोद वोहिरा२ण्यया२३४ः। दुहानऊधर्द्दिवायाम्।
र १ १ २ १
ऐहोयि। मा२धुप्रियाम्। प्रत्नॐसधस्थमोवा३ओ२३४
५ ४ ५ ५ ४ २ ४ ५र
वा। सा५दोईहायि ॥(२) प्रत्ना३ॐसा३धस्थमासदात्।
१ १ २र १ २ र
प्रत्नॐसधस्थमा२सादा२३४त्। आपृच्छ्यन्धरुणांवा। ऐ

---

* ऊ० गा० १८प्र० १अ० २०सा०।

होयि। जा२यर्षसायि। नृभिर्धौतोविचोवा३यीर२३४वा। सापुणो६हायि (३)॥ २१ *॥ [३१]

॥ वाभ्रम॥ पुनानःसो। मधारा१या२। अपोव सानोआर्षा१सा२यि। आरत्नधायोनिम्ऋतस्यसायिदा१सा२यि। उत्सदा२३यिवा३ः। हा२यिरा२३४औहोवा। स्या२३४णाः॥(१) उत्सदेवाः। हिराण्या१या१या२ः। उत्सदेवोहिराण्या१या२ः। दुहानऊधर्दिवियम्मधुप्रा१या२म्। प्रत्नꣳसा२३धा३। स्था२मा२३४औहोवा। सा२३४दात्॥(२) प्रत्नꣳसधा। स्थमासा१दा२त्। प्रत्नꣳ सधस्थमासा१दा२त्। आपृच्छ्यन्धरुणंवाजियार्षा१सा२थि। नृभिर्धौ२३ता३ः। वा२यिचा२३४औहोवा। त्वा२३४णाः(३)॥ ३ †॥ [३२]

* ऊ० गा० १८प्र० १अ० २१मा०।
† ऊ० गा० १८प्र० २अ० ३मा०।

१ ४र ५ र २ १ ४र ५ ५
॥ मेधुच्छन्दसम्॥ पुनानःसो। हों। मधारयाइए।
२ ११ १ २ १ ५ २र १ र २र १ २
अपोवसा। नोअर्षा२३४ऽसायि। आरत्नधायोनिम्रत।
१ २ ३र १ ३र १ १ १
स्यसायिदासा। औहो३४वाहायि। उत्सोदायिवा।
३र २ १ २ १
औहो३४वाहायि। हिरण्या२३या३४३ः। ओ२३४५ई॥

डा (१)॥ २० *॥ [३३]

५ २र २ ४ ५
॥ गौरीवितम्†॥ उत्सः। देवो३। हिरण्ययाः।
१ र र र १ र २ ४
उत्सोदेवोहिरण्यया२३ः। दूहानऊ३१२३। धर्हिवियम्म
१ २ ४ ५ ४
धू५प्रियाम्। प्रत्न७सधा३१२३। स्थमोवा। सा५दो
५
६हायि(२)॥ १२ ‡॥ [३४]

२र र र र र
॥ उभयतस्तोभं गौतमम्॥ हाउपुनानःसोमधारया
१ र२ र र १ ७ २र २
हाउ। आपोवसा। नोआर्षसा२३४यि। हाहोयि।

---

* ऊ० गा० १९प्र० १ख० १०सा०। † "महागौरीवितम्"—इति ख० पु०।

‡ ऊ० गा० १९प्र० ३ख० १२सा०।

र १ र २र १ २ १ र २ ३र २ १
आरत्नधायेनिम्रतास्यासीदसा३४यि। हाहोयि। ऊ
र २ ३र १ २ १ ५ ४
त्सोदायिवा३४ः। हाहो३। हिंरो२३४वा। एया५योऽ६
५ २र र र र र १ र २र
हायि॥(१) हाउत्सोदेवोहिरण्ययोहाउ। उत्सोदेवः।
१ ७ ३र २ र १ र २ १ २
हिराण्यया२३४ः। हाहोयि। दुहानऊधर्दिवियम्।
१ २ ३र २ १ २ ३र २
माधुप्रिया३४म्। हाहोयि। प्रात्न१सधा३४। हाहो
२ १ ५ ५ २र
३। स्थमो२३४वा। सा५दोऽ६हायि॥(२) हाउप्रत्न१
र १ २ १ ०
सधस्थमासदद्धाउ। प्रात्न१सध। स्थमासदा२३४त्।
३र २ र १ २ १ २ र १ २ ७र
हाहोयि। आपृच्छयन्धरुणंवा। जायर्षसा३४यि। हा
१ २ ३र २ २ १ ५
होयि। नृभिर्द्धौता३४ः। हाहो३। विचो२३४वा।
४ ५
हा५णोऽ६हायि (३) ॥ ११ * ॥ [३५]

२ १र ४र ५र
॥ हिंहिङ्कारं वामदेव्यम्॥ पुनाना२३ःसोमधारया।
१ र र र र र र २ ३र २ १
आपोवसानोअर्षस्यारत्नधायोनिम्रताःस्यसीदो३। ऊम्भा

* ऊ० गा० २०प्र० २ख० ११सा०।

१ २ १ २ २ २ १ ३२ ७ १
२। दा२३सायि। उत्सोदेवोऽहिरौहो३। ऊम्मा२।

१ २ ४ ५ १ १२ ४२ ५
ण्यया। औ३होवा॥(१) उत्सोदा२३यिवोहिरण्यया:।

१ २ २ २ २ २ २ २ ३२ २ १
ऊत्सोदेवोहिरण्ययोदुहानऊधर्दिवियाम्मधौहो३। ऊम्मा

१ १ १ २ ३२ ७ १
२। प्रा२३याम्। प्रत्न॰सधास्थमौहो३। ऊम्मा२।

१ ४ ५ २ १ ४ ५२
सदात। औ२३होवा॥(२) प्रत्न॰सा२३धस्थमासदान्।

१ २ २ २ ३२ २ १
प्रात्न॰सधस्थमासदद्दापृच्छन्धरुणंवाऽजियौहो३। ऊम्मा

१ २ १ २ २ ३२ २ १
२। पा२३सायि। नृभिर्द्धौतोऽविचौहो३। ऊम्मा२।

१ २ ४ ५ ४
णा। औ३होवा। हो५ई। डा६॥२५*॥[३६]

५ २ २ ४२ ५ ४२ ५ १ २ २ २
॥द्वैगतम्॥ पुनाना३:सोमधारया। आपोवमा।

२ १ २ ३२ २ १ २ १ १ २ २
नोआर्षा१सा२यि। आरा३। हो३हो३वा। त्नधायो

२ १ १ २ ५२
निम्नतस्थामो१२मा२यि। उत्सो२३। दा२यिवा२३४औ

२ २ ३ १ १ १ १ ५ २ १
होवा। ए३। हिरा२ण्यया२३४५:॥(१) उत्सोदा३यि

* ऊ० गा० २८प० ‍ ऋ० २३मा०१।

वोहिरण्ययाः। ऊत्सोदेवः। हिराण्या१या२ः। दुहा३।
हौ३वो३वा। नऊधर्हि वियम्माधुप्राया२म्। प्रत्ना२३म्।
सा२धा२३४औहोवा। ए३। स्थमा२सदा२३४५त्॥(२)
प्रत्नꣳसा३धस्थमासदात्। प्रात्नꣳसध। स्थमासा१दा
२त्। आपा३। हौ३वो३वा। ऋग्न्यरुणंवाजायर्षा
मा२यि। नृभा२३यिः। धौ२ता२३४औहोवा। ए३।
विचा२चणा२३४५ः (३)॥ १६ *॥ [३७]

॥ अर्वापुष्पाद्यम्॥ पुनानःसोमधारया। ऊवे२३।
अपोवमानोअर्षसि। ऊवे२३। आरत्नधायोनिमृतस्यसी
दसि। ऊवे२३। उत्सोदेवोहिरण्ययः। ऊवे२३॥(१)
उत्सोदेवोहिरण्ययः। ऊवे२३। उत्सोदेवोहिरण्ययः।
ऊवे२३। दुहानऊधर्दिव्यम्मधुप्रियम्। ऊवे२३। प्रत्नꣳ

* ऊ० गा० २०प्र० २ख० १६गा०।

२ १ २ १२ २ १ २२ १ २ १ ७ २२ १ २
मधस्थमासदत् । ऊवे२३ । आपृक्षन्नन्धरुणंवाज्यर्ष सि ।
१ १ ३२ १२ ७ २ १ २ १ १
ऊवे२३ । नृभिर्द्धौतोविचक्षणाः । ऊवे२३ । ऊवे२३ ।
१ २ २ २ ५२ २ ० १२ २ २ ऽ
होवा२हा३ । हा३४ । औहोवा । अर्कोदेवानां२पर
१२ ३ १ १ १ १
मेवियो२मा२३४५न् (३) ॥ १७ * ॥ [३८]

२ ऽ २
॥ द्यौतानम् ॥ हा३ । ओ३हा३ । ओ३हा३ ।
१ १ २ २ ३ २ ३ ५ १ २ २
हायि । उत्सोदेवो२ । हिरण्या२३४याः । उत्सोदेवो
३ २ ३ ५ १ २ २ ३ २
२ । हिरण्या२३४याः । दुहानऊधर्द्दिवियार्२म् । मधु
२ ५ १ ३ २ ३ ५ २
प्रा२३४याम् । प्रत्नꣳसधा२ । स्थमासा२३४दात् । हा
२ ऽ २ २ ५२ २ १
३ । ओ३हा३ । ओ३हा३ । हा३४ । औहोवा । आ
१ १ १ १
इहो२३४५ (२) ॥ ८ † ॥ [३९]

१ २ १२ ४२ ५ ४ ५
॥ नौधसम् ॥ ऊ२३४त् । सोदेवोहिर । ण्यायाः ।

---

* ऊ० गा० १०प्र० २ख० १७सा०

† ऊ० गा० २१प्र० २ख० ८सा० ।

उत्सोदेवो। हाइयिराण्याश्याः। हूर३हा। माजधः।

दिवि। याम्। माधुप्रा२३४याम्। प्रा२३त्नाम्। सा

धंस्थमो२३४वा। सा२३४दात् (२) ॥ ५ * ॥ [४०]

॥ श्यैतम् ॥ उत्सोदेवोहिर। ण्यया२३४औहोवा।

ऊत्सोदेवः। हिराण्यया२३४ः। ओ६हा। दुहानऊ

धः। दायिवा२३याम्। मधू२। प्रा२३४याम्। प्रत्नꣳ

सधास्था३मा। ऊम्मायि। सा२दा२३४औहोवा। वा

२३४हु (२) ॥ ८ † ॥ [४१]

॥ कण्वबृहत् ॥ औहोपुनानःसो३ण। मधारा१यार

३४। हाहोयि। आपोवसानोअर्षसि। आरात्ना१धा

२३४ः। हाहोयि। योनिमृत। स्यसायिदा१सा२३४

---

* ऊ० गा० २०प्र० १ख० ५सा०।

† ऊ० गा० १६प्र० १ख० ८सा०।

२र २   १ २   २र २   १
यि। हाहोयि। उत्सोदा१यिवा२३४ः। हाहो। हि
२ १   ५ ५   १र र
रा३। ण्या२३४याः। उङ्कवा६हाउ। वा॥(१) औहो
१र र २   १   ३र १   १ र
उत्सोदेवा३ए। हिराण्या१या२३४ः। हाहोयि। उत्सो
२र र   १ २   १र २   १ २
देवोहिरण्ययः। दुहाना१ऊ२३४। हाहो। धार्हिवि
१ २   १र २   १ र २ र
यम्। मधूप्रा१या२३४म्। हाहोयि। दूहानऊ।
१ २   १र २   १ २
धर्हीयिवा१या२३४म्। हाहोयि। मधूप्रा१या२३४म्।
१र २   १ २   ३र २   ३ २   १
हाहोयि। प्रत्ना३सा१धा२३४। हाहो। स्थमा३। सा
५ ५   १र र
२३४दात्। उङ्कवा६हाउ। वा॥(२) औहोप्रत्न३सधा
२   १ २   १र २   १ २
३ए। स्थमासा१दा१दा२३४त्। हाहोयि। प्रत्न३सध
र   १र २   ३र १   १
स्थमासदत्। आपार्क्षा१या२३४म्। हाहोयि। धारु
१ र   १ २   १र १   १ २
णंवा। जियार्षा१सा२३४यि। हाहोयि। आपृक्चम्।
१ २   ३र २   १ २
धरुणा१वा२३४। हाहोयि। जियार्षा१सा२३४यि।

३र २ १ २ ३र २ ३ २
हाहोयि । नुभायिद्यौ३ता२३४ः । हाहो । विचा३ ।
१ ५ ५
ना२३४णाः । उहुवा६हाउ । वा (३) ॥ ८ * ॥ [४२] ९

तृतीय-तृचे—प्रथमा ।

१ ०र ३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १र २र
प्रतुद्रवपरिकोशन्निषीदनृभिःपुनानोअभिवाजमर्ष ।
२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अश्वन्नत्वावाजिनंमर्जयन्तोच्छावर्हीरशनाभिर्नयन्ति ॥१ †॥

हे सोम ! "तु" चिप्रं "प्रद्रव" अभियज्ञं प्रकर्षेणागच्छ । गत्वा च "कोशं" द्रोणकलशं "परि निषीद" निषण्णो भव । "नृभिः" नेतृभिः "पुनानः" पूयमानः सन् "वाजम्" अन्नं हवीरूपं त्वम् "अभ्यर्ष" अभिगच्छ । "वाजिनं" बलवन्तं "अश्वं न" अश्वमिव तं यथा मार्जयन्ति । तद्वद्वाजिनं त्वां "मर्जयन्तः" शोधयन्तः अध्वर्यु-प्रमुखा ऋत्विजः "बर्हिः" "अच्छ" अस्मदीयं यज्ञं प्रति "रशनाभिः" रशनावदाय ताभिरङ्गुलीभिः "नयन्ति" ॥ १ ॥

* ऊ० गा० २२प्र० २ख० ८गा० ।

† ऋ० आ० ६, १, ४, १ (२भा० १०६ पृ०)=ऋ० ७, ३, २२, १ । ऋ० त्रिष्टुप् एषमेवोत्तरः ।

अथ द्वितीया ।

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
स्वायुधःपवतेदेवइन्दुरशस्तिहावृजनारक्षमाणः ।
३ २ ३ १ २ ३ २ ३ २ २
पितादेवानाञ्जनितासुदक्षो
३ २ ३ २ ३ १ २ ३ २
विष्टम्भोदिवोधरुणःपृथिव्याः ॥ २ * ॥

"स्वायुधः" शोभनायुधः † "इन्दुः" "सोमः" देवः "पवते" ‡ स च देवः "अशस्तिहा" रक्षोहा ¶ "वृजना" वृजनानि उपद्रवाणि परिहृत्येति शेषः, "रक्षमाणः" § "पिता" "पालकः" "देवानां" "तथा" "जनिता" उत्पादकः "सुदक्षः" शोभन-बलः "दिवः" "विष्टम्भः" विशेषेण स्तम्भयिता "पृथिव्याः" च "धरुणः" धारकः ‖ । एवं महानुभावः पवते । "वृजना"—"वृजन्" —इति पाठौ ॥ २ ॥

---

* ऋ० वे० ७. ३, २२. २ ।

† 'स्वायुधः असि खड्ग परशु प्रासादिभिरायुधैः स्वायुधः । अथवा वज्र-स्रुव स्रुक् शम्याक प्रभृतिभिर्यज्ञायुधैः स्वायुधः' इति वि० ।

‡ 'पवते पूयते' इति वि० ।

¶ 'अशस्तिहा अशस्तयः शत्रवः । अथवा अशस्ता वाचः अशस्तानि वा कर्माणि ये कुर्वन्ति तेषां हन्ता'—इति वि० ।

§ 'वृजना रक्षमाणः । वृजनं बलम् अथवा वृजनं वर्जनं कुत्सितं कर्म तेभ्यो रक्षमाणः' —इति वि० ।

‖ अतएवोक्तं मनुना—'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः (३अ० ७६श्लो०)' —इति ।

अथ तृतीया।

२ ३ १ २ ३ १ र २ र ३ १ र २ र ३ २ ३ १ २

ऋषिर्विप्रःपुरएताजनानामृभुर्धीरउशनाकाव्येन।

१ २र ३ १ २ ३ १ २ ३

सचिद्विवेदनिहितंयदासामपी

२ २ ३ २ १ २

च्याऽ३ङ्गुह्यन्नामगोनाम् ॥ ३ * ॥ १०

"ऋषिः" अतीन्द्रियद्रष्टा † "विप्रः" मेधावी "पुरएता" पुरतो गन्ता "जनानां" मनुष्याणां "ऋभुः" उरुभासमानः ‡ "धीरः" धीमान् ¶ "उशनाः" एतन्नामकः ऋषिः यः "सचित्" स एव § "काव्येन" स्तोत्रेण "विवेद" लभते। किमिति?

---

* ऋ० वे० ९, ३, २७, ३।

† "साक्षात्कृतधर्माण ऋषयो बभूवुः तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषु वेदञ्च वेदाङ्गानि च। बिल्मं भिल्मं भासनमिति वा एतावन्तः समानकर्माणो धातवः"—इति निरु० नै० १, २०।

‡ 'पुर एता जनानाम्। पुरत अग्रतः एति सोम अथवा पुरत एता जनानां मना। ऋभुर्विभुः'—इति वि०।

¶ 'धीर धैर्यसम्पन्न'—इति वि०।

§ 'चित शब्द च शब्दस्यार्थे द्रष्टव्य'—इति वि०। "चिदित्येषोऽनेककर्मा—आचार्यश्चिदिदं ब्रूयादिति पूजायाम्। ० ० ०। दधिचिदित्युपमार्थे। कुल्माषांश्चिदाहरेत्यवकुत्सिते ० ० ०।"—इति निरु० नै० १, ४।

उच्यते। "आसां" "गोनां" गवां सम्बन्धि * "यत्" "अपीच्यम्" [अन्तर्हितनामैतत् †] अन्तर्हितं "नाम" नामक मुदकं पयोलक्षणम्। कीदृशम्? "गुह्यं" गोपनीयम् ॥ २ ॥ १० ‡

१ २ १ र २
॥ औशनम् ¶ ॥ प्राहू। द्रवापरिकोशाम्। निषीइ

२ १ २ १ २ १ १ ३ ४ ५ १
दा। नृभाइःपुना। नो३अभि। वाजमर्षा। अश्वन्न

र र ७ २ १र २ १ २ १ र
त्वावाजिनम्मा। जया२३न्ताः। अच्छाबर्हीइः। रशना।

२ २ ४ १ २ १
भा३४३इः। ना३यापुन्ताई५ईइ ॥(१) स्वा। युधाःप

र ७ २ १ २ १ २ १ र २ ३ ४
वतेदाइ। वईइन्द्र। अशास्तिहा। वृजना। रक्षमा

५ १र र र र ७ २ १ २र
णाः। पितादेवानाञ्जनिता। सुदा२३क्षाः। विष्टम्भो

१ २ १ २ २ ४
दाइ। वो३धरू। णा३४३ः। पा३र्थो५इव्याई५ईः ॥(२)

---

* "आसां गोनां गवामादित्यरश्मीनां वा"—इति वि०। "गोः पादान्ते (७, १, ५७)" इति नुटि रूपम्।

† "*. *. *. *. अपीच्यमिति निर्णीतान्तर्हितनामानि"—इति निघ० ३, २५। "निर्णीतं कस्मान्निर्णिक्तं भवति"—इति यास्ककृतं तद्व्याख्यानम् ३, १९। "अपीच्य मपगत मपचित मपिहित मन्तर्हितं वा"—इति निरु० नै० ४, २५।

‡ इद माध्यन्दिनपवमानं तृतीयम्। 'उक्तो माध्यन्दिनः पवमानः' इति वि०।

¶ "विष्टुबौशनम्"—इति ख० पु०।

१ २ १ २ २ २ १ २र १
आर्षाः। विप्राःपुरएता। जना३नाम्। ऋभूर्धीराः।

२ १ र २ १ ४५ १ र ७
उशना। कावियेना। सचिद्विवेदनिहिताम्। यदा२३

२ १ २ १ २ २
साम्। अपाइचियाम्। गुह्यियम्। ना३४३। मा३

४
गो५नाई५६म् (३)॥ ४ *॥ [१]

२ १ २ १ र २ ३ ४
॥ वैश्वज्योतिषाद्यम्॥ प्रतुद्रवा। परिको। शनिषी

५ २ १ २ १ २ ३ ४ ५ २ १
दा। नृभिःपुना। नो३अभि। वाजमर्षा। अश्वन्नत्वा।

२ १ २ ३ ४ ५ २ १र २ १ र
वा३जिनम्। मर्ज्जयन्ताः। अच्छाबर्हायिः। रशना।

२ २ ४ २ १र १
भा३४३यिः। ना३या५न्ताई५६यि॥(१) स्वायुधाः। प

१ र २ ३ ४ ५ २ १ २ १ र २ ३ ४ ५
वते। देवइन्दुः। अशस्तिहा। वृजना। रक्षमाणः।

२ १र र २ १ २ ३ ४ ५ २ १ र
पितादेवा। ना३ञ्जनि। तास्तुदक्षाः। विष्टम्भोदायि।

२ १ २ २ ४ २ १
धा३धरुः। णा३४३ः। पा३र्था५पृथिव्याई५६ः॥(२) ऋषि

२ १ २ २ ३ ४ ५ १ १र २ १ र
विप्राः। पुरएै। ताजनानाम्। ऋभुर्धीराः। उशना।

---

० ऊ० गा० १प्र० १अ० ४मा०।

२　१ २ ४ ५　　२ १　　२　१　　२ ३ ४　५
काविंयेना। सचिद्दिवे। दाशनिह्यि। तंयदासाम्।
२ १ ८　　२ १　　१　　२　४
अपीचियाम्। गुह्यियम्। ना३४३। मा३गोपूना६५
६म् (३) ॥ ७ ॥ [२] १०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य
तृतीयः† खण्डः ।

---

अथ चतुर्थखण्डे,
प्रथम-सूक्ते—प्रथमा ॥

३ १ २　　३ १ २　　३ १ २
अभित्वाशूरनोनुमोदुग्धाइवधेनवः।
१ २　३ १८　२८　३　२ ३ १ २　　३ १
ईशानमस्यजगतःस्वर्हृशमीशानमिन्द्रतस्थुषः ॥ १‡ ॥

हे "शूर" विक्रान्तेन्द्र! "त्वा" त्वाम् "अभि नोनुमः" वयं भृश मभिष्टुमः। तत्र दृष्टान्तः—"अदुग्धा इव धेनवः" अकृतदोहा गावः आदरेण वत्सान् प्रति हम्भारवं कुर्वन्ति तद्वत् वयं स्तुमः

---

* ऊ० गा० १९प्र० १अ० ७सा० ।

† अत्र स्तोभो न विद्यते। एषां छन्दसयानां यथाश्रुतएव पाठो व्यवह्रियते।

‡ छ आ० ३, १, ५, १ ( १ भा० ४७८ पृ० ) = ऋ० वे० ५,३,२१,२। छ० बृहती। ऋ० वशिष्ठः। दे० इन्द्रः। एवमेवाप्योत्तरत्र। 'इदानीं प्रश्नानि इन्द्रस्य निष्केव ल्यानि, बार्हतान्येव गायत्रकाणि'—इति वि०।

इत्यर्थः । कीदृशम् ? "अस्य" "जगतः" जङ्गमस्य "ईशानम्" ईश्वरं "तस्थुषः" स्थावरस्य "ईशानं" "स्वदृश" सर्वदृशं सर्वज्ञ मित्यर्थः ॥ १ ॥

अथ द्वितीया ।

१र २र ३ २ ३ ११ २र ३ २ ३ १र २र
नत्वावाꣳअन्योदिव्योनपार्थिवोनजातोनजनिष्यते ॥

३ १ २ ३ १ २ ३ १ २
अश्वायन्तोमघवन्निन्द्रवाजिनोगव्यन्तस्त्वाहवामहे॥२*॥११†

हे "मघवन्निन्द्र !" "दिव्यः" दिवि भवः "त्वावान्" त्वत्सदृशः "अन्यः" न जायते । "पार्थिवः" पृथिव्यां भवोऽपि त्वावान् "न जातः" जायते दिव्यः पार्थिवो वा त्वावान् न जातः न च "जनिष्यते" नोत्पत्स्यते लोकद्वयेऽपि त्रिष्वपि कालेषु‡ त्वादृशः कश्चिन्नास्ति त्वमेव समर्थो भवसीत्यर्थः । "अश्वायन्तः" अश्वानिच्छन्तः "वाजिनः" वाज मन्न मिच्छन्तः [इच्छाया मिन् प्रत्ययः] हविष्मन्तो वा "गव्यन्तः" गाइच्छन्तश्च वयं हे इन्द्र ! "त्वा" त्वां "हवामहे" आह्वयामः ॥ २ ॥ ११

* ऋ० वे० ५, ३, २१, ३ । † 'रथन्तरं पृष्ठम्'—इति वि० ।

‡ 'भूतभविष्ये उक्ते वर्त्तमान मपि लभ्यते'—इति वि० ।

२र १र २र १र २ १ २ १ र

॥ कण्वरथन्तरम् ॥ अभित्वाशूरनोनुमाः। अदुग्धा

१ १ २ २ रर ३

आयि। वा३धायिना३वाः। ईशानमस्यजगतःसुवर्दृ। शा

५र २र२र ५ १ १ २

२३४नैहो। ईशाना२३४मी। इन्द्र३आउवा२३। ए३।

२ ५ २ र र १ २ १ २ १ २र१र

स्थुषषा ॥(१) आयिशानमिन्द्रस्तुस्थुषाः। ईशानमायि।

२ १ २ २ र र र र र ३ ५र

द्रा३स्तस्थु३षाः। नत्वावाँ३अन्योदिवियोनपार्थिवा२३४ऐ

२१र ५ २ २ २१

ही। नजातो२३४ना। जना३१उवा२३। ए३। ष्यत.

२ र र १र २ १ २१र र २

आ ॥(२) नाजातोनजनिष्यतायि। नजातोना। जा३.

१ २ २ र र र ३ ५र

नायिष्या३तायि। अश्वायन्तोमघवन्निन्द्रवाजिना२३४ऐ

२ १ ५ २ २ २

ही। गव्यन्ता२३४स्त्वा। हवा३१उवा२३। ए३। म

३ २

हआ(३) ॥ १८ * ॥ [१]

२र १र २र १र १ १

॥ ककुबुत्तरेकण्वरथन्तरम् ॥ अभित्वाशूरनोनुमाः।

२ १ र २ १ २ १ रर

अदुग्धाआयि। वा३धायिना३वाः। ईशानमस्यजगतः

* ऊ० गा० १२प्र० १ख० १९सा०।

३ ५र २र१र ५ २ १
सुवर्हशा२३४मैहो। ईशांना२३४मी। इन्द्र३आउवा२३।

१ २ ३ २ २र र २ १ १ २ २ १
ए३। स्थुषश्रा॥(१) आयिशानमिन्द्रसुस्थुषाः। नाश्त्वा

२ २ र र र ३ ५र २१र
वा३ॅ आन्। योदिवियोनपार्थिवा२३४ऐही। नजातो

५ १ २ १२२ र
२३४ना। जना३१उवा२३। ए३। ष्यतश्रा॥(२) ना

र १र २ १ १ १ २ २ १
जातोनजनिष्यतायि। आ३श्वायाउन्ताः। मघवन्निन्द्र

र ३ ५र २१ ५ २
व्राजिना२३४ऐहो। गव्यन्ता२३४स्त्वा। हवा३१उवा२३।

१ २ ३ २
ए३। मद्वश्रा (३) ॥ १ * ॥ [२]

१ र र र १ २
॥ वारवन्तीयम् ॥ अभित्वाशाश्रौहोहायि। रानो

३ ५ २ र र१ ५ १ १र
नू२३४माः। अदुग्धाइवधेनावो२३४हायि। ईशानमस्य

२ ३र ४ र५ १ ३ ५ १ ३
जगतःसुवर्हं३४। औहोवा। इहा२३४हायि। उज्ञवा

५ २र१र२ १ ० २ ३र ४र
२३४शाम्। ईशानम्। आयिन्द्रसुस्थू३४। औहो

५ १ ३ ३र २ १ ३ ५
वा। इहा२३४हायि। औहोवा। इहा२३४हायि।

* ऊ॰ गा॰ ९२प्र॰ १ख॰ १सा॰।

३र २   ५र ५   १र र र र
औहो३१२३४ । षाः । एहियाई्हा ॥(१) ईशानमाऔ

१ १   ३ ५   २ १   ५
होहायि । द्रास्तुस्थू२३४षाः । नत्वावा२३४हायि ।

१ र र २ र २   ३र ४र ५   १ ३   ५
अन्योदिवियोनपार्थो३४ । औहोवा । इहा२३४हायि ।

२ ३ ५   ३ १र   १ ० २   ३र ४र ५
उरुवा२३४वाः । नजातः । नाजनिष्या३४ । औहोवा ।

१ २ ५   ३र २   ५र
इहा२३४हायि । औहो३१२३४ । तायि । एहियाई

५   २ र र र र १ २   ३ ५
हा ॥(२) नजातोनाऔहोहायि । जानायिष्या२३४ता

२ १ ५   १र   र २   ३र*
यि । अश्वायार३४हा । तोमघवन्निन्द्रवाजा३४ । औ

४र ५   १ २ ५   २ २   ५   २ १ २
होवा । इहा२३४हायि । उरुवा२३४ । नाः । गव्यन्तः ।

१ ०र २   ३र ४र ५   १ २   ५   ३र २
त्वाहवामा३४ । औहोवा । इहा२३४हायि । औहो३

५र
१२३४ । हायि । एहियाई्हा (३) ॥ १२ * ॥ [३] ११

द्वितीय-तृचे प्रथमा ।

१ २   ३ १र   २र ३ २ ३ १ २ ३ १ २
कयानश्चित्रआभुवदूतीसदावृधःसखा ।

२ ३ १ २   ३ २
कयाशचिष्ठयावृता ॥ १ † ॥

* ऊ० गा० २२प्र० १ख० १२सा० ।

† छ० आ०२,२,९,५ ( १ भा० ३८४ पृ० ) = ऋ० वे० ३. ६, २४, १ । 'गायत्र'

"सदावृधः" सदा वर्द्धमानः "चित्रः" चायनीयः पूजनीयः "सखा" मित्रभूतः इन्द्रः "कया" "ऊती" ऊत्या तर्पणेन "नः" अस्मान् "आ भुवत्" आभिमुख्येन भवेत् ? "शचिष्ठया" प्रज्ञावत्तमया प्रज्ञासहितानुष्ठीयमानेन। "कयावृता ?"—केन वर्त्तनेन कर्मणा च अभिमुखो भवेत् ॥ १ ॥

अथ द्वितीया।

१ २ ३ १र २र ३ १ २ ३ १ २
कस्त्वासत्योमदानाम्मꣳहिष्ठोमत्सदन्धसः।

३ १ २ ३२३१२
दृढाचिदारुजेवसु ॥ २ † ॥

"मंहिष्ठः" पूजनीयः "सत्यः" सत्यभूतः "मदानां" मादयितॄणां मध्ये "कः"‡ मदकरः ? "अन्धसः" सोमलक्षणस्यान्नस्य रसः¶। "दृढाचित्" दृढ मपि "वसु" शत्रु-सम्बन्धि गवादिकं

साम। सर्वदेवत्यं वामदेव्यं वा ; यत्कवतीषु तेन प्राजापत्यं, कोहि प्रजापतिः। यदनिरुक्तासु तेन प्राजापत्य, अनिरुक्तोहि प्रजापतिः ; यद् गायत्रीषु तेनाग्नेयं गायत्रीच्छन्दोह्यग्निः, यत्पृष्ठं प्रत्यदधु तेनैन्द्रम् ; —एवं सर्वदेवत्यं वामदेव्यम्—इति वि० एवमेवावोचरत।

† ऋ० वे० ४, ६, २४, २।

‡ 'कः प्रजापतिः'—इति वि०।

¶ 'अन्नस्य चरुपुरोडाशादि-लक्षणस्य'—इति वि०।

धनं "आरुजे" आ समन्तात् भङ्क्तु* हे इन्द्र! "त्वा" त्वाम् "मत्सत्". मादयेत् ॥ २ ॥

अथ तृतीया ।

१ २उ ३ २ ३ २ ३ २
अभीषुणःसखीनामविताजरितॄणाम् ।

३ १ २ ३ १२
शतम्भवास्यूतये ॥ ३ † ॥ १२ ‡

हे इन्द्र! "सखीनां" समानख्यातीनां "जरितॄणाम्" "अविता" रक्षिता त्वं "नः" अस्माकं "शतं" शत-सङ्ख्याकम् ऊतये रक्षायै ¶ "सु" सुष्ठु "अभि भवासि" अभिमुखो भव § । "शतम्भवास्यूतये"—"शतम्भवास्यूतिभिः"—इति पाठौ ॥ ३ ॥१२॥

३ र ४ २ ४र
॥ महावामदेव्यम् ॥ काऽ५या । नश्चा३इत्रा३आभु

५ १ र २ १र २ १ २ र २
वात् । ऊ । तीसदावृधःस । खा । औ३होहाइ ।

१ २ ३ र २ १
कया२३शचाइ । ष्ठयौहो३ । ऊम्मा२ । वा२र्त्तो३ऽ५

* 'इष्टा इष्टानि । चिदिति पूरणः । इष्टानि यानि वस्तूनि तान्येव दृढे, दृढो भङ्क्ते । भङ्क्त्वा, तानि मम प्रयच्छ'—इति वि० ।

† ऋ० वे० ३, ६, २४, ३ । ‡ 'मैत्रावरुणं पृष्ठम्'—इति वि० ।

¶ 'ऊतये चतुर्थ्येकवचनमिदं तृतीया-बहुवचनस्य स्थाने द्रष्टव्यम् ऊतिभिः सम बहुभिः पालनैरित्यर्थः'—इति वि० ।

§ 'शतम्भवासि शतशब्दो बह्वर्थी । एतस्मादेव पदात् यत् बहुदैवत्य सूक्तं पदं तेन वैश्वदेव मित्युक्तम् । शतम्भवासि बहु दीर्घजन्म—शतं भवसि'—इति वि० ।

हाइ ॥(१) काऽ५स्त्वा। सत्योऽ३माऽ३दानाम्। मा।
हिष्ठोमात्सादन्ध। सा। औऽ३होवाइ। हढाऽ२ऽ३चिदा।
रुजौवो३। ऊम्मा२। वाऽ३सोऽ३ऽ५हायि॥(२) घाऽ५
भी। घुणाऽ३:साऽ३खीनाम्। आ। विताजरायितृ।
णाम्। औऽ२ऽ३होवायि। ग्रताऽ२ऽ३भवा। सियौवो३।
ऊम्मा२। नाऽ२योऽ३ऽ५हायि॥ ५ * ॥ [१]

॥ स्वारसौपर्णम्॥ कया नश्चित्रआ। भूऽ३वात्। ऊ
तीसदावृधाः। ऊम्। साऽ२ऽ३ऽ४खा। कायाऽ३उवा।
शचि। ष्ठयोऽ२ऽ३ऽ४वा। वा५र्त्तोऽ६हायि॥(१) कस्त्वास
त्योमदाऽ३नाम्। मꣳहिष्टोमत्सदा। ऊम्। धाऽ२ऽ३ऽ४
साः। दार्ढाऽ३उवा। चिदा। रुजोऽ२ऽ३ऽ४वा। वा५सो
ईहायि॥(२) अभिषुणःसखीऽ३नाम्। अविताजरा।

* ऊ० गा० १प्र० १ख० ५गा०।

१ २ ५ १ २ २ १र २ १
ऊम्। हु२३४णाम्। आताऽ३उवा। भवा। सियोऽ२
५ ४ ५
३४वा। ता५योऽ६हायि॥८*॥[२] १२

अथ प्रगाथरूपे तृतीय सूक्ते—

प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १र ३१र
तंवोदस्ममृतीषहंवसोर्मन्दानमन्धसः।

३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अभिवत्सन्नस्वसरेषुधेनवइन्द्रङ्गीर्भिर्नवामहे ॥ १ † ॥

नोधा नाम ऋषिरिन्द्रं स्तौति। हे ऋत्विग्यजमानाः! "दस्मं" दर्शनीयं "ऋतीषहम्" ऋतयो बाधकाः शत्रवः तेषा मभिभवितारं; पुनः कीदृशम्? "वसोः" वासयितुर्दुःखस्य विवासयितुर्निवारयितुः; यद्वा वसोः पार्श्वे निवसतः स्थितस्य तादृशस्यान्धसः सोम-लक्षणस्यान्नस्य पानेन "मन्दानं" मन्दमानं मोदमानं "वः" षष्ठ्यर्थत्वेन युष्मत्सम्बन्धिनं तं तादृश मिन्द्रं "गीर्भिः" स्तुतिलक्षणाभिर्वाग्भिः "नवामहे" [णु स्तवने, शब्दे वा] अभिष्टुमः। कुत्रेति "स्वसरेषु"। [अत्र यास्कः—"स्वसराण्यहानि स्वयं सारीणि अपिवा स्वरादित्यो भवति स एतानि सारयतीति] (निरु० नै० ५, ४) सूर्य-नेतृकेषु दिवसेषु वयम् "अभिष्टुमः" अभितः

---

* ऊ० गा० १०प्र० १ख० ८गा०।

† छ० आ० ३, १, ५, ४ (१भा० ४८५ पृ०) ऋ० वे० ६, ६, २, १। नोधाः काक्षीवत आर्षम्। इन्द्रो देवता।

शब्दयाम:। तत्र दृष्टान्तः—"वत्सं न" यथा धेनवो नव-प्रसूतिका गावः स्वसरेषु सुष्ठु अश्यन्ते प्रेयन्ते गावोऽत्रेति स्वसराणि गोष्ठानि तेषु वत्स मभिलक्ष्य शब्दयन्ति तद्वत् ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १र १र३१ २
द्युक्षꣳसुदानुन्तविषीभिरावृतङ्गिरिन्नपुरुभोजसम्।
३२ ३१ २ ३ ११ ३ १ २ ३१र ३र
क्षुमन्तंवाजाꣳशतिनꣳसहस्रिणंमक्षूगोमन्तमीमहे॥२*॥१३†

"द्युक्षं" दीप्तिमन्तं निवासस्थानम् अतिशयितदीप्ति मित्यर्थः। यद्वा, द्युक्षं दिवि द्युलोके क्षियन्तं निवसन्तं "सुदानु" शोभन-दानं "तविषीभिः" बलै"रावृतम्"आच्छादितम्‡। पुनः कीदृशम्? "पुरुभजस" सोमादि-हविः-प्रदानेन बहुभिर्यजमानैर्भोजयितव्यम्। यद्वा, बहूनां पालयितारम् इन्द्रम्¶ "क्षुमन्तम्" [टु क्षु शब्दे] शब्दवन्तम् अनेन पुत्रादिकं लक्ष्यते; स्तोत्रादीनि कुर्वाणं "शतिनं सहस्रिणं" शत-सहस्र-सङ्ख्याक-धन-युक्तं "गोमन्तम्" गवादि-युक्तं "वाजम्" अन्नं "मक्षु" शीघ्रं "ईमहे" याचामहे। यद्वा, पूर्वार्द्धो वाज-विशेषणत्वेन योजनीयः—प्रदीप्तं शोभन-दान-योग्यं बलादियुक्तं बहुभिः पुत्रमित्रादिभिर्भोक्तव्य-शब्दादि-युक्तम् अन्नम् इन्द्रं याचामहे इति ॥ २ ॥ १३

---

* ऋ० वे० ६, ६, २, २।          † अत्र नौधसं साम।

‡ 'तविषीभिराहतम्। तव श्रव इति बलनाम, बलवद्भिः सखायैराहतम्। अथवा तविषीभिः स्तोतुमिच्छद्भिः मनुष्यजातिभिराहतम्'—इति वि०।

¶ 'गिरिं न पुरुभोजसम्। न शब्द उपरिष्टादुपचारत्वादुपमार्थीयः, गिरिमिव बहुभोजसम्। गिरौ पर्वते बहुभोजन-तृणकाष्ठान्युपजीवन्ति। अथवा गिरिर्मेघः तं सर्वं जगदुपजीवति'—इति वि०।

॥ नौधसम् ॥ ता२३४म्। वोदस्मम्हतौ। षाहाम्। वसोर्मन्दा। नाइमान्धाउसाः। आ२३भी। वात्सन्न। स्वस। रायि। पूर्धेना२३४वाः। आ२३यिन्द्राम्। गा यिर्भिर्न्नवो२३४वा। मा२३४च्चे ॥(१) आ२३४यि। द्र क्षीर्भिर्न्नवा। माहायि। इन्द्रगीर्भीयिः। नाइवामाइ हायि। द्यू२३क्षाम्। स्वदानुम्। तवि। षायि। भायिरावा२३र्त्ताम्। गा२३यिरीम्। नपुरुभो२३४वा। जा२३४साम् ॥(२) गा२३४यि। रिन्नपुरुभो। जासास्। गिरिवपू। रूइभोजाइसाम्। चू२३मा। तंवाजम्। प्राति। नाम्। साहस्रा२३४इणाम्। मा२३चू। गो मन्तमो२३४वा। मा२३४च्चे ॥ ६ * ॥ [१]

॥ अभीवर्त्तम् ॥ तंवोइदाइस्माऽम्हतीषहोवा। वा

---

* ऊ० गा० १प्र० १ख० ६सा०

२ र १ २ १ २
सोम्मिन्द्रा। नमाधा१सा२ः। आभिवत्सा३१२३४म्।
२ ४५र २१ २ १२ २
नस्वसरे। धुधायिना१वा२ः। इन्द्राङ्गा१यिभी२ः। न
२ १ २ १ १ १ १ ५ ४ १ ७ ४
वा३। मा२३४५। हा२३४५यि॥(१) इन्द्रा३ङ्गा३यिभि
५र ४ ५ १ २र १२ १
र्नवामहोवा। आयिन्द्रगोभिः। नवामा१हा२यि। द्यु
२ २ ४५र २ १ २
च्छुदा३१२३। नुक्तविषी। भिरावा१न्ता२म्। गि
१ २ ३ २ १ १र१ १ १ १
रायिन्ना१र्पूर। रूभो३। जा२३४५। सा२३४५म्॥(३)
५ ४ २ ४ ५र ४ ५ १ १ १ २
गिरा३यिन्ना३पुरूभोजसोवा। गायिरिन्नपु। रुभोजा१
१ १ २ ४५ २ १
सा२म्। चूमन्तवा३१२३४। ज्ञ्यातिनम्। सहा
१ १ २ १ २ १
स्रा१यिणा२म्। मचूगो१मार। तमा३यि। मा२३
२ १ १ १ १
४५। हा२३४५यि॥ १४ *॥ [२]

५ र २ ४ ५ ४र ५ २ १
॥ जनित्राद्यम्॥ तंवोदा३स्म५ऽम्हतीषहाम्। ऊवे
१ र र २ १
हो२यि। वसोम्मन्दानमान्धा१मा२ः। अभिवत्सन्नस्व

* क० ग्रा० ४प्र० १ अ० १४सा०।

२ १ ३ ५ १ २ १ र
सरा२यि। पुर्धायिमा२३४वाः। इन्द्रा३ऽ२होयि। गी

२ १ २ १र ३ ५र र ५ २
र्भी१यिर्ह्वी। नवा। मा२हा२३४औहोवा॥(१) इन्द्रङ्गा

४ ५ ४र ५ २ १ १ र २
३यिर्भिर्नवामहायि। ऊवेहो२यि। इन्द्रगीर्भिर्नवामा

१ र ३ २ ३
१हा२यि। द्युक्षऽ२सुदानुन्तविषार्यि। भिरावा२३४

५ १ २ १ २ १ २ १र
र्ताम्। गिरा३यिऽ२होयि। नपू३हो। रुभो। जा२

३ ५र र ५ २ ४ ५ ४र ५ २ १
सा२३४औहोवा॥(२) गिरिन्ना३पुरुभोजसाम्। ऊवे

१ २ १ र
हो२यि। गिरिन्नपुरुभो१जामा२म्। क्षुमन्तंवाजऽ२

३ २ ३ ५ १ २ १ र
शतिना२म्। सहस्रा२३४यिणाम्। मक्षू३होयि। गो

२ १ २ १र ३ ५र र २ १ १ १
मा३हो। तमी। मा२हा२३४औहोवा। जनित्रा२३

१ १
४५म्॥ ५ *॥ [३]

१ र २ १ २र १ र
॥ पृष्ठापृष्ठीयाद्यम्॥ तंवोदस्ममृतीषहाम्। वसो

र २ १ २ १ र २ १र २
र्मन्दानमन्धा२३साः। अभिवत्सन्नस्वसरेषुधेना२३वाः।

* ऊ० गा० १६प्र० १ख० ५गा०।

१ २ १ २र २ ५र र ३
इन्द्रग्नाऽ२३यिर्भा३यिः । नाऽ२ । वामा३४औहोवा । हा
१ १ १ १ १ २र १ २र १ र १ १र
१३४५यि ॥(१) इन्द्रगीर्भिर्नवामहायि । इन्द्रगीर्भिर्नवा
२ १ र र १ १र २
माऽ२३हायि । द्युक्षᳬसुदानुन्तविषीभिरावाऽ२३र्त्ताम् । गि
१ २ १ २र २ ५र र २ १ १ १ १
रिन्नाऽ२३पू३ । रु२ । भोजा२४औहोवा । सा२३४५म् ॥(२)
२ १ २ १र२ १ २ १र २ १
गिरिन्नपुरुभोजसाम् । गिरिन्नपुरुभोजाऽ२३साम् । सु
र २ १ २ १र २
मन्तवाजᳬशतिनᳬसहस्राऽ२३यिणाम् । मक्षूगोऽ२३मा३ ।
१ ३र २ ५र र २ १ १ १ १
ताऽ२म् । ईमा३४औहोवा । हाऽ२३४५यि ॥ ८ * ॥

३ ४र २ ४ ५र ३ २ ४ ५
॥ जनित्रोत्तरम् ॥ तवोदस्ममृती । षहाऽ३म् । वसो
र १ र ७ ३
र्मा । होयि । होयि । दानामन्धामाऽ२३४ः । अभि
४ ५ ४ ५र ३ २ ४ ५ १ २र ५
वत्सन्नस्वसरे । धुधा३यिनावाः । आयिन्द्रगीर्भिर्नवौ३ ।
३ ३ ५र र २ ४ र ३ ४ ५र
हौ३१यि । माऽ२हाऽ२३४औहोवा ॥(१) इन्द्रगीर्भिर्नवा ।
१ २ ४ ५ १ २
महा३यि । इन्द्रग्नायि । होयि । होयि । भिर्नावा

* क० ग्रा० १३प्र० १ख० ८सा० ।

२ ४ ३र ४ ३ ४ ५र ३ २ ४ ५
३माहार२३४यि। द्युक्षᳪसुदानुन्तविषी। भिरा३वात्ताम्।
१ २ ५ २ २ ५र र
गायिरिन्नपुरुभौ३। हो३१यि। जा२सा२३४औहोवा ॥(२)
४ ३ ४ ५ र ३ २ २ ५ १
गिरिन्नपुरुभो। जसा३म्। गिरिन्ना। होयि। होयि।
२ ४ ३ ४ २र ४ ५ ४ ५ २ २
पुरुभो१जासा२३४म्। क्षुमन्तंवाजᳪशतिनम्। सहा३
४ ५ १ र २र ५ २ २
स्रायिणाम्। मातूगोमन्तमौ३। हो३१यि। मा२हा
५र र २ १ १ १ १ १
२३४औहोवा। जनी३त्वा२३४५म् (३) ॥ १० * ॥ [५]

५ ४ २ ४ ५र ४ ५ १ र
॥ सौभरम् ॥ तंवो३द्रा३स्मा ऽ म्हतीषहोवा। वसोर्म
र र १ ० १ २
न्दानमन्धसोभिवत्सन्नस्वसा२रायिषुधा२३। होयि। ना
५ १ र ५ २ १ २
२३४वाः। इन्द्रङ्गीर्भिः। नवा३हा३यि। मा२हा२३४
५र र ५ ४ २ ४ ५र ४ ५ १ र
औहोवा ॥(१) इन्द्रा३ङ्गा३यिर्भिर्न्नवामहोवा। इन्द्रङ्गी
र र र १ ० १
र्भिर्न्नवामहेद्युक्षᳪसुदानुन्तवा२यिषायिभिरा२३। हो।
२ २ ५ २ १ २
वा२३४त्ताम्। गिरिन्नपु। रुभो३हा३यि। जा२सा२

* ऊ० गा० १५प्र० १ अ० १० सा०।

५र र १ ४ २ ४ ५र ४ ५ १
३४औहोवा ॥(२) गिरा३इविन्ना३पुरुभोजसोवा। गिरि

र र १ ० १
न्नपुरुभोजसंक्षुमन्तंवाजꣳशता२यिनाꣳसहा२३। हो।

२ ५ १ र र ऽ१ १ २
स्रा२३४यिणाम्। मक्षूगोम। न्तमा३हा३यि। मा२हा

५र र १ १ १ १ १
२३४औहोवा। ज२३४५ (३) ॥ ४ * ॥ [६]

५ र २ ४ ५र ४ ५
॥ आष्कारणिधनं काण्वम्॥ तंवोदा३स्मम्ऽतीषहा

१ र २ र १ १ १ २ १
म्। वासोमंन्दा। नमा२३न्धसाउ। वा३२। अभिवत्साम्।

२ ३ १ १ २ १र ५ १ २ १र
नस्वसरायि। धुधेना२३४वाः। भा२३यिन्द्राम्। गीर्भि

२ १र ५ २ ४
र्न। वामा२३४५हा६५६यि ॥(१) इन्द्रक्षा३यिर्भिर्न

५र ४ ५ १ १र १ २
वामहायि। आयिन्द्रक्षीर्भिः। नवा२३महाउ। वा३२।

१ २ १ २ ३ २ १ २ १र ५
द्युक्षꣳसुदा। नुन्तविषायि। भिरावा२३४र्त्ताम्।

१ २ १ २ १र
गा२३यिरीम्। नपुरु। भोजा२३४५सा६५६म् ॥(२)

१ २ ४ ५र ४ ५ १ २ १ २
गिरिन्ना३पुरुऽभोजसाम्। गायिरिन्नपु। रुभो२३जसा

---

* क० मा० २१प्र० १ष० ४सा०।

१ २ १ २ २ १ १ २ १

उ। वा३२। सुमन्तंवा। जं९श्रतिनाम्। सहस्रा

५ १ १ १र २ १र

२३४यिणाम्। मा२३च्। गोमन्तम्। ईमा२३४५हा

१ १ १ १ १

६५६यि। आ२३४५ष् (३) ॥ ८ * ॥ [७]

१ २ ५ ४ ५ र

॥ ककुबुत्तरनौधसम् ॥ ना२३४म्। वोदसम्नी।

४ ५ १ र २ १ १ २ १ १

षाद्दाम्। वसोर्मन्दा। ना३मान्धा३साः। आ२३

५ १ २ १ २ १ २ ३ ५ १

भी। वात्सन्न। स्वस। रायि। षूर्धेना२३४वाः। आ

२ १ २ १ ५ २ ५

२३यिन्द्राम्। गायिर्भिर्नवो२३४वा। मा२३४चे ॥(१)

१ ५र ४ ५ र ४ ५ १ १ २

आ२३४यि। न्द्रङ्गोर्भिर्नवा। माद्दायि। द्यू३चा९ष्ट

२ १ २ १ २ ३ ५

३दा। नू२३न्ता। वि। षायि। भायिरावा२३४त्ताम्।

१ २ १ २१ ५ ४ ५

गा२३यिरीम्। नपुरूभो२३४वा। जा२३४साम् ॥(२)

१ ५ ४र ५ २ १ २ २

गा२३४यि। रिन्नपुरूभो। जासाम्। चू३मान्ता३वा।

---

* ऊ० गा० २१प्र० १अ० ९षा०

जा२३७९श्या। ति। नाम। साहसा२३४यिणाम्। सा
२३चू। गोमन्तमो२३४वा। मा२३४द्दे(३)॥ १७* ॥ [८]

॥ वाङ्निधनं क्रौञ्चम्॥ तंवोदास्मा३१२३४म्। ऋती।
षहा३म्। वसोर्म्मन्दा३१२३४। नम। धसा३ः। अ
भीवात्सा३१२३४म्। नस्वसरेषुधे। नवा३ः। इन्द्राङ्गा
यिर्भा३१२३यिः। नवा५मद्दाउ॥(१) इन्द्राङ्गायिर्भा३१
२३४यिः। नवा। मद्दा३यि। इन्द्रङ्गीर्भा३१२३४यिः।
नवा। मद्दा३यि। द्युत्ता७सूदा३१२३४। नुन्तविषी
भिरा। वृता३म्। गिरायिन्नाप्३१२३। स्भो५जसा
उ॥(२) गिरायिन्नाप्३१२३४। स्भो। जसा३म्।
गिरिन्नप्३१२३४। स्भो। जसा३म्। नुमान्तांवा

---

ऊ० गा० २१प्र० १अ० १०सा०।

२ ४५ ३२ २१ १
३१२३४। ज॰ग्रतिन॰सद्व। स्त्रिणाइम। मचूगोमा
४
३१२३। तमापुयिमद्वाउ (३)॥ १४ *॥ [९] १३

चतुर्थे प्रगाथे—प्रथमा॥

१२ ३१२३ १२ ३१ २३१२
तरोभिर्वोविदद्वसुमिन्द्र॰सबाधऊतये।
३१र २र ३१२ ३२३२उ३ २३ १२
बृहद्गायन्तःसुतसोमेअध्वरेहुवेभरन्नकारिणम्॥ १†॥

हे ऋत्विजः! "वः" यूयं "तरोभिः" वेगैरश्वैरुपेतं वेगै रेव वा "विददसु" वेदयद्वसुं धनावेदकम् "इन्द्रं" "सबाधः" बाधासहिताः "ऊतये" रक्षणाय "बृहद्गायन्तः" बृहत्संज्ञकं साम गायन्तः सन्तः परिचरतेति शेषः। कुत्र? इति, तदुच्यते—"सुतसोमे" अभिषुत-सोमके "अध्वरे" यज्ञे सोम-यागे; अहञ्च स्तोता युष्मदर्थं "हुवे" आह्वयामि। कमिव? "भरं न" भरं भर्त्तारं कुटुम्बपोषकं "कारिणं" स्वहित-करण-शीलं यथा स्वहित-करणायाह्वयन्ति पुत्रादयस्तद्वत्, तथा भूत मिन्द्रं हुवइति॥ १॥

अथ द्वितीया।

२उ ३१र २र३२ ३२उ ३१२ ३१र २र
नयन्दुध्रावरन्तेनस्थिरामुरोमदेषुशिप्रमन्धसः।
२३१२ ३१२ ३१र २र १२३र २र
यआदृत्याशशमानायसुन्वतेदाताजरित्रउक्थ्यम्॥२‡॥१४¶

* ऊ० गा० २२प्र० १ख० १४सा०।

† छ० आ० ३, १, ५, ५ (१भा० ४९९ पृ०)=ऋ० वे० ६, ४, ४७, १।

‡ ऋ० वे० ६, ४, ४७, २।

¶ "अत्र कालेयं साम"—इति वि०।

"सुशिप्रं" शोभन-हनुकं शोभन-नासिकं वा ["शिप्रे हनूनासिके वा (६,१७)—इति यास्कः] "यम्" इन्द्रं "दुध्राः" दुर्धराः असुरादयः "न वरन्ते" सङ्ग्रामे न वारयन्ति, तथा "स्थिराः" देवाः "न" वरन्ते, किञ्च "मुरः" मरणशीला मनुष्याः न वरन्ते, "यः" च इन्द्रः "अन्धसः" सोमलक्षणस्यान्नस्य "मदे" मदाय सोमपानजनिताय* "आदृत्य"†, "शशमानाय" शंसमानाय‡ "सुन्वते" अभिषवं कुर्वते "जरित्रे" स्तोत्रे च¶ "दाता" भवति। किम्? "उक्थ्य" स्तुत्यं धनम्§, तं हुवे इति पूर्वेण सम्बन्धः॥

"मदेषुशिप्रं"-"मदेसुशिप्रम्"—इति षकार-सकारौ पाठौ॥ २॥ १४

---

* मूले "मदेषुशिप्रम्"—इति संहितापाठः, तत्र सायणेन 'मदे' इत्येकं पदं छित्वा सुशिप्रमिति द्वितीयं स्वीकृतम् अत एव 'मदे' मदाय, 'सुशिप्रं' शोभनहनुकमित्यादि व्याख्यातम्। विवरणकारस्तु "मदेषु" इति छित्वा शिप्रमिति द्वितीयं चिच्छेद, यथाहि—'मदेषु मदनीयेषु सोमेषु सन्निधानभूतेषु, सन्निधान-सप्तम्येषा, अथवा मदेषु पुरतोऽवस्थितेषु'—इति वि०। पदकारकृत-पदपाठोऽपि विवरणकार-नय-पोषकः।

† संहितापाठस्तु "आदृत्या"—इति, तत्र "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति दीर्घः। आदृत्य आदरं कृत्वेत्यर्थः।

‡, ¶ वैदिकी स्तुतिस्तु द्विधा भवति, शस्त्रैर्मन्त्रैः स्तोत्रैर्मन्त्रैश्च, तथा चात्र अप्रगीतमन्त्रात्मक-शस्त्रैः स्तुतिं कुर्वाणः शंशमान उच्यते, तस्मै; किञ्च प्रगीतमन्त्रात्मक-स्तोत्रैः स्तुतिकारी स्तोता, तस्मै चेति विवेकः।

§ 'उक्थ्यो नाम क्रतुः, तमुक्थ्यम्; अथवा उक्थ्यानि सामानि तैर्यः सम्भजते स उक्थ्यः, तमुक्थ्य सामवन्तं क्रतु मित्यर्थः'—इति वि०।

५ र १ ४र ४ ४ ५ ११
॥ महाकालेयम् ॥ तरोभाइर्वोविदद्वसुम् । इन्द्राᳪ

२१ १ २र२ १ १ २ २ र २ १ २
सबा । धऊतयार२३इ । बृहद्गायाइ । ता२३४ः । सुत

४र ५र २ २ १ २ २ २ ५ ४
सोमेच । ध्वाइराइ । ऊवाइभरो । वा३४३ओ३४वा । न

५ र २ ४ ५ ४र ५ २ १ २
काऽ५रिणाम् ॥(१) ऊवेभाइरन्नकारिणाम् । ऊवाइभ

१ २ २र २ १ १ २ २ १ र
राम् । नकारिणा२३म् । नयन्दुभ्राइः । वा२३४ । रन्तो

३ ४ ५र २ २ १ २ २ २ ५
नस्थिराः । मूइराः । मदाइषुष्मौ । वा३४३ओ३४वा ।

४ ५ र २ ४ ५ ४ ५ २ १ २ १
प्रमाऽ५न्धसाः ॥(२) मदेषूइश्राइप्रमन्धसाः । मदाइषुश्रा

२ २ २ १ २ २र २ १ र ३र
इ । प्रमन्धसा२३ः । यश्राहत्याइ । श्रा२३४ । शमाना

४ २ १ १र २ २ २ ५ ४
यसु । ध्वाइताइ । दाताजरौ । वा३४३ओ३४वा । च

४
ऊऽ५क्थियाम् । चोऽ५इ । डा(३) ॥ ७ * ॥ [१]

२ र र र १ २
॥ वारवन्तीयोत्तरम् ॥ तरोभिर्वाओवोहायि । वा

---

* ऊ० १गा० १प्र० १ख० ७सा०

३ ५ २ २ २ १ ५ १
यिद्दा२३४इम्। इन्द्रꣳसबाधऊतायो२३४हायि। बृ

२ २ २ १ ३२ ४२ १ २ ५
हद्गायन्तःसुतसोमेअध्वा३४। औहोवा। इहा२३४हा

२ ३ ५ २ १२ २ १ ७ २ २ ३२
यि। उऊवा२३४रायि। ऊवेभ। रान्नकारा३४। औ

४२ ५ १ २ ५ ३२ २ ५२
होवा। इहा२३४हायि। औहो३१२३४। णाम्। एहि

५ २ २ २ २ १ २ ३ ५
या६हा॥(१) ऊवेभराऔहोहायि। नाकारा२३४यिणाम्।

२२ २ १ १ २ २ २
ऊवेभरन्नकारायिणो२३४हायि। नयन्दुध्रावरन्तेनस्थिराम्

३२ ४२ ५ १ ३ ५ २ ३ ५
३४। औहोवा। इहा२३४हायि। उऊवा२३४राः।

२ १२ २ १ ७ २ ३२ ४२ ५ १ ३ ५
मदेषु। शायिप्रमन्धा३४। औहोवा। इहा२३४हायि।

३२ २ ५२ ५ २२ २२ १
औहो३१२३४। साः। एहियाई्हा॥(२) मदेषुशाऔहो

२ ३ ५ २२ १ ५
हायि। प्रामन्धा२३४साः। मदेषुशिप्रमन्धासो२३४हायि।

१२ २ २ २ २ ३२ ४२ ५ १ ३२ ५ २
यआहत्याशशमानायसुन्वा३४औहोवा। इहा३हायि। उ

३ ५ २२ १२ २ १ ७ २ ३२ ४२
ऊवा२३४तायि। दाताज। रायिनउक्था३४। औहो

५ १ ३ ५ ३र १ ५र
वा । इवा२३४वायि । औवाँ३१२३४ । याम् । एवि

५ ५
याईहा । वोपूई । डा (३) ॥ १५ * ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य

चतुर्थखण्डः † ॥ ४ ॥

---

पञ्चमखण्डे ‡,

प्रथम तृचे—प्रथमा ।

१ २ ३ १ २ . २ १ २ ३ १ १ ३
स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ।

१ २ ३ १ २ ३ १
इन्द्रायपातवेसुतः ॥ १ ¶ ॥

हे "सोम !" "इन्द्राय" "पातवे" पातुं "सुतः" अभिषुतः त्वं "स्वादिष्ठया" स्वादुतमया "मदिष्ठया" अतिशयेन मादयित्र्या "धारया" "पवस्व" क्षर ॥ १ ॥

---

* ऊ० गा० १० प्र० १ ख० १५ सा० ।

† 'इदानीं मार्भवः पवमानः । तत्र बहूनि छन्दांसि—गायत्रीककुबुष्णिगनुष्टुब्जगतीति छन्दांसि । पुष्कलोऽग्निः संचितः शफः श्यावाश्वः चान्येऽपि ऋषयः इत्यार्षाणि । सोमः सोमदेवता । सामदेवता नोच्यते विस्तरभयात्'—इति वि० ।

‡ 'उक्तो माध्यन्दिनः पवमानः'—इति वि० ।

¶ ऋ० सं० ५, १, ४, २ (२ भा० ७ पृ०=ऋ० वे० ७, ७, १६, १ ।

अथ द्वितीया।

२ १ २ १ २ १ २उ २ १ २
रक्षोहाविश्वचर्षणिरभियोनिमयोहते।
१ २ ३ २ ३ १ २
द्रोणेसधस्थमासदत्॥ २ *॥

"रक्षोहाः" रक्षसां हन्ता "विश्वचर्षणिः" विश्वस्य द्रष्टा सोमः "अयोहते" अयसा हिरण्येन हते [ तथा च श्रूयते— "हिरण्यपाणिरभिषुणोति"--इति ] "द्रोणे" द्रोणकलशेन अधिषवण-फलकाभ्यां वा† "सधस्थं" सहस्थानं "योनिम्" अभिषवस्थानम् "अभ्यासदत्" आभिमुख्येनासीदति॥

"अयोहते"—"अयोहत","द्रोणे"—"द्रुणा"—इति च पाठौ॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ १ २
वरिवोधातमोभुवोमꣳहिष्ठोवृत्रहन्तमः।
२ ३ १ २ ३ १ २
पर्षिराधोमघोनाम्॥ ३ ‡॥ १५

* ऋ० वे० ७, ७, १९, २।

† सोमाभिषवे प्रथमं तावत् चतुष्कोणमुख×रथाकारं फलकद्वयं स्थाप्यते, तदुपरि कृष्णमृगचर्म विस्तीर्य तत्र सोमोऽभिषूयते। ये अधिकृत्य सूयते सोम ऋत्विग्भिः, ते अधिषवणे, अधिषवणे च ते फलके, ताभ्याम्; अधिषवणनामक-फलकाभ्या मित्यर्थः। सप्तमीस्थाने तृतीया।

‡ ऋ० वे० ७, ७, १९, ३।

हे सोम ! त्वं "वरिवोधातमः" अतिशयेन धनानां दाता* "भुवः" भव † [ 'वेदः', 'वरिवः'—इति धननामसु ( निघ० २, १०,४·५) पाठात् ] "मंहिष्ठः" दातृतमश्च ‡ भव [ सर्वदातृत्व मवोच्यते इत्यपुनरुक्तिः ] "वृत्रहन्तमः" अतिशयेन शत्रूणां हन्ता च भव । किञ्च "मघोनां" धनवतां शत्रूणां ¶ "राधः" धनञ्च "पर्षि" अस्मभ्यम् प्रयच्छ § ॥

"भुवः"-"भव"—इति पाठौ ॥ ३ ॥ १५

॥ सञ्जितम् ॥ स्वादिष्ठयाम । दा२इष्ठया । पवा२ । स्वार३सो । मधा२राया । आर३इन्द्रा । या२पा । तवार३ । हाउवा३ । ह२३४ता: ॥(१) रक्षोहा विश्व । चा२र्षणाई: । अभा२इ । यो२३नीम् । अयो२हाताइ । द्रो२३णे । सा२धा । स्थमा२३ ।

* 'वरिव' वरिष्ठः भवः । धातमः धेङ् पाने, पातृतमः । एकः पानभूतः, एक पानतरः, अन्यः पानतमः । अथवा धाता दाता, स्थापिता वा'—इति वि० ।

† 'भुवः भूर्लोकस्य'—इति वि० ।

‡ 'मंहिष्ठः मंहनीयतमः'—इति वि० ।

¶ 'मघोनां धनवतां यजमानानाम्'—इति वि० ।

§ 'पर्षि परिसिञ्चते'—इति वि० ।

हाउवा३। सा२३४ दांत्॥(२) वरिवोधात। मो२ भुवाः। मᳲहा२इ। ष्ठो२३वा। त्रहा२न्तामाः। प्रा२३र्षो। रा२धो। मा२३। हाउवा३। घो२३४ नाम्(३)॥ ८ *॥ [१]

॥ चुल्लकवैष्टम्भम्॥ स्वादाऽ५यिष्ठ। या३मदिष्ठया। पावस्वसो। मधारा१या२३। होवा३हायि। इन्द्राया १पा२३। होवा३हा। तवे। सू२ता२३४औहोवा॥(१) रक्षोऽ५हा। वा३यिश्वचर्षणायिः। आभियोनिम्। अ योहा१ता२३यि। होवा३हायि। द्रोणेसा१धा२३। होवा३हा। स्थमा। सा२दा२३४औहोवा॥(२) वराऽ५यिवः। धा३तमोभुवाः। माᳲहिष्ठो३। त्रहान्ता१मा२३ः। होवा३हायि। पर्षायिरा१धा२३ः। होवा३

* ऊ० गा० १प्र० १अ० ८सा०

१ १ २ ५र र २ ५
चायि। मघोर। ना२३४औहोवा। दो२३४श्वाः (३)
॥ २० ॥ [२]

२र १ २ १ २ १ २
॥ जराबोधीयम् ॥ स्वादिष्ठयोवा। मादिष्ठया। प
१ २ र १ २ ४ ५र
वास्वार२३सो। मधाराया। इन्द्राया१पार२३ता५। वे।
२ २ २ र र १ २ १ २ १
सुतो३४५ई। डा ॥(१) रक्षोहावोवा। श्वाचर्षणायिः।
२ १ २ र १ र २ ४
अभायियोर२३नीम्। अयोहातायि। द्रोणेसा१धार२३स्था
५र ३ १ २ र १ २
म्। आ। सदो३४५ई। डा ॥(२) वरिवोधोवा।
१ र २ १ २ १ २ १
तामोभुवाः। मꣳहायिष्ठोर२३वा। वृत्रहन्तामाः। पर्षा
२ ५ ३र २
यिरा१धार२३ः। म। घोनो३४५ई। डा(३)॥ १०१॥ [३]

२र र र र १ २ १
॥ हाविष्कृतम् ॥ स्वादिष्ठयामदाहाउष्ठाया। पव
१ र २ १ २
स्वसो। मधारार२३या। इन्द्रा२हो१। या२३पा। त
१र २ ५र र २ र र र र १
वे। सुरता२३४औहोवा ॥(१) रक्षोहाविश्वचाहाउर्षा

२ १ र र १ १र
णायिः। अभियोनायिमं। अयोहा२३तायि। द्रोणे२

२ १र ३ १रर
हो१यि। सा२३धा। स्थमा। सा२दा२३४औहोवा॥(२)

१ र र र र १ २ १ र
वरिवोधातमोहाउभूवाः। मः्ंहिष्ठोवा। अहन्ता२३

२ १ २ १
मा२३माः। पर्षा२हो१यि। रा२३धाः। मघो२।

३ ५र र २ १ १ १ १ १ १
ना२३४औहोवा। हविष्कृते२३४५ (३)॥ ७ *॥ [४]

१र १ र १ १ र १र
॥ इडानिधनं मौक्षम्॥ स्वादिष्ठयामदिष्ठया। औ

१र १ १ १ २ १र र
होवा। इहश्रुधायि। पवस्वा२३सो। मधारया। इन्द्रा

२ १ १ १ १र
या२३पा३। होवा३हा। तवेसू२३४५ताई५६ः॥(१)

२ र १र २ १ २ १र १र १ २ १
रक्षोहाविश्वचर्षणिः। औहोवा। इहश्रुधायि। अभि

२ १र र र २ १ २
योर३नीम्। अयोहतायि। द्रोणेसा२३धा३। होवा

२ १र २ र १र १र
३हा। स्थमासा२३४५दाई५६त्॥(२) वरिवोधातमो

१र १र १ १ १ २
भुवः। औहोवा। इहश्रुधायि। मंःहिष्ठो२३वा।

* ऊ० गा० ११प्र० २ख० ७सा० ।

१ २ . १ १ २ १
चक्षमाः । पर्षिरा२३धा३ः । होवा३हायि । मघो

१ १ १ १ १ १ १
२३४५नाइ५६म् । इत्ता३या२३४५ (३) ॥ ४ * ॥ [५]

१र २ र १ र र २
॥ गौषूक्तम् ॥ स्वादिष्ठयामदौ । हौहोवाहायि ।

१ र १ १ १
ष्ठया । पवस्वसोमधौ२ । ऊवायि । ऊवा२यि । रा

१ र र १ १ १
या२ । इन्द्रायपातवौ२ । ऊवायि । ऊवा२यि । सु

१ ३ ५र २ १ १र १ २ १ १
ता २ ३ः । चो२वा २ ३ ४ औहोवा । अग्निराऊता २ ३

१ १
४ ५ः(१)॥ ८ † ॥ [६]

२ र १र १ २ १
॥ कक्रूपोत्तरम् ॥ रत्नोहावौहो२ । इया । स्वचर्षा

१ १र १ २ र १
णा२यिः । अभियोनौहो२ । इया । अयोहाता२यि ।

२र र १ १ १र १ १
द्रोणेसधौहो२ । इया । स्थमासा२३दा३४३त् । ओ२

३४५ई । डा(२) ॥ १२ ‡ ॥ [७]

---

* ऊ० गा० २प्र० २ख० ४गा० । † ऊ० गा० १३प्र० १ख० ८गा०

‡ ऊ० गा० १३प्र० २ख० १२गा० ।

५र २ ४र ५ २ १ २ १ १
॥ काक्षीवन्तम् ॥ स्वादिष्टा३यामदिष्ठया । पवास्व

१र २ १ ऽ २ ३र २ १ १
सो । मधारया३ । ओ३४ । हाहोयि । इन्द्राया२३पा ।

३र २ ३र १ ५ ४ ५ ५ र
तवौहोयि । औहो२३४वा । सू५तोई हायि ॥(१) रक्षो

२ ४ ५ २ १ २र १ २ र १ ऽ
हा३विश्वचर्षणायिः । अभायियोनिम् । अयोहता३यि ।

२ ३र २ १र ऽ २ ३र २
ओ३४ । हाहोयि । द्रोणेसा२३धा । स्थमौहोयि ।

३र १ ५ ४ ५ ५ २ ४र ५र
औहो२३४वा । सा५दोई हायि ॥(२) वरिवो३धातमो

२ १ ५र १ २ १ ऽ २
भुवाः । मꣳहायिष्ठोवृ । त्रहन्तमा३ः । ओ३४ ।

३र २ १ २ ३र २ ३र १
हाहोयि । पर्षायिरा२३धाः । मऔहोयि । औहो२३

५ ४ ५
४वा । यो५नोई हायि(३) ॥ १५* ॥ [८]

५र २ ४ऽ ५ ४ ५ १
॥ भासम ॥ स्वादि । ष्ठा३यामा । दूया । दायि

२ १ १ र ऽ २र ३र १ १
ष्ठा१या२ । पावस्वसो । म । धौ३र्हो । वाहायि । र

१ १ ३ ५र र २१ ३ २
या२ । इन्द्रा२३ । या२पा२३४औहोवा । तवेसुना१ ॥(१)

---

* ऊ० गा० १८प्र० १ख० १५सा० ।

५ २ ४ऽ ५ऽ ४ ५ १ २
रक्षः । हाऽ३वायि । श्वा । ईया । चार्षाश्णा२यिः ।
१ १र ऽ २र ३र २ १
स्वाभियोनिम् । ऋ । यौ३हो । वाहायि । हता२
१र १ ३ ५र र २ र ३ २
यि । द्रोणे२३ । सा२धा२३४औहोवा । स्थमासदा
५ २ ४ऽ ५ऽ ४ ५ १ २
१त् ॥(२) वरि । वो३धा । ता । ईया । मोमू१वा२ः ।
१ २र ऽ १र ३र २ १ १
मा९९हिष्ठावृ । त्र । हौ३हो । वाहा । तमा२ः । पर्षा
१ ३ ५र र २ ३र २
२३यि । रा२धा२३४औहोवा । मघोना१म्(३) ॥ १६* ॥[९]

२र र १ १ १ र र
॥ श्रैश्रवम् ॥ स्वादिष्ठयामदिष्ठाया । पवस्वसोमधा
२ १र ५ ३ २ ४
रया । इन्द्रायार३४पा । तवा३यिस्व५ता६५६ः ॥(१)
२ र र १ २ १ र र २र
रक्षोहाविश्वचर्षणायिः । अभियोनिमयोहतायि । द्रो
१र ५ १ २ ४ २ र र
णेसा२३४धा । स्थमा३सा५दा६५६त् ॥(२) वरिवोधात
र १ २ १ र २ १ ५
मोभुवाः । म९९हिष्ठोवृत्रहन्तमाः । पर्षिरा२३४धाः
२ ४
मा३घोपुना६५६म् (३) ॥ १८ † ॥ [१०]

---

* ऊ० गा० १८प्र० १ख० १६सा० ।  † ऊ० गा० १६प्र० २ख० १८सा० ।

२र १र ४ ५ र २
॥ आग्नसूक्तम् ॥ आओ३होवाहायि। स्वादिष्ठया। म
१ २ २र १र २ २ र १ र २र
हायि। ष्ठया। ऐहीयैही१। पावस्वसोमधारया। ऐ
१र २ १ १ १र
हीयैहो१। आ २यि। आयिन्द्रा २यापा २। तवे। सू
३ ५र र २ १ र २ ३ १ १ १ १
२ता२३४औहोवा। प्रुक्रआऊता२३४५: (१) ॥ २०*॥[११]

२ १ र र र
॥ सत्रासाहीयम् ॥ वरा३४यि। वोधातमोभुवः।
५ ५ १ र १ १
ओ२इवा। मꣳहिष्ठोवृत्रहन्ता २माः। पा २र्षायि। रा
२ १ ऽ २र १र २ १ ५ ५
२३धाः। मओ३वा। वाहा२४३यि। घो२३४ना६हा
यि(३) ॥ ६ † ॥ [१२]

१र र २ १ ४र र
॥ स्वारकौत्सम् ‡॥ स्वादोषिष्ठा२३। यामदिष्ठयाई
५ १ २ र १र १र १ २ र १र २
या। पवस्वसोमधारया। पावस्वसो। मधारा२३या।
१ २ २ १ २ २ १र २ १ र
आयिन्द्रा३हा। यापा३हा। तवेसू२३ता२४३ः ॥(१) रक्षो
१र १ ४ ५ २ १ र २ १ र २ र १
हीहा२३। विश्वचर्षणिरोया। अभियोनिमयोहते। आ

● ऋ० मा० १०म० २ख० १०साम। † ऋ० मा० ११म० १ख० ६सा०।

‡ "ऐन्द्रकौत्सम"—इति क० पु०।

२र १र २ १ २ २ १ २
भियोनिम्। भयोहा२३तायि। द्रोणे३ चायि। साधा

२ १र २ १र २र १ ४र
३हा। स्थमासा२३दा३४३त्॥(२) वरीचोवो२३। धा

र ५ १ २र १ २ १ २र
तमोभुवईया। मंहिष्ठोवृत्रहन्तमः। मांहिष्ठोवृ।

१ २ १ २ २ १ २ २ १
त्रहन्ता२३माः। पार्षा३यिचायि। राधो३हायि। मघो

२ १
२३ना३४३म्। ओ२३४५ई। डा (३)॥ २० *॥[१३]१५

अथ प्रगाथरूपे द्वितीय-सूक्ते—

प्रथमा।

१ २ ३ १ २ ३ १ २ २ १ २ ३ १ २
पवस्वमधुमत्तमइन्द्रायसोमक्रतुवित्तमोमदः।

१ २ ३ १ २ ३ १ २
महिद्युक्षतमोमदः॥ १ †॥

हे "सोम!" "मधुमत्तमः" अतिशयेन माधुर्योपेतस्त्वम् "इन्द्राय" इन्द्रार्थं "मदः" मदकरः सन् "पवस्व" क्षर। कीदृशः? "क्रतुवित्तमः" अत्यन्तं प्रज्ञायाः कर्मणो वा लम्भकः, "महि" मंहनीयः "द्युक्षतमः" अत्यन्तं दीप्तः "मदः" मदहेतुः॥ १॥

---

* ऊ० गा० ११प्र०१अ० २० सा०।

† छ० आ० ६, २, ४, १ (१भा० ११२५० )=ऋ० वे० ७, ५, १७, १।

अथ द्वितीया ।

१२ ३१ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २
यस्यतेपीत्वावृषभोवृषायतेऽस्यपीत्वास्वर्विदः ।
२ ३ १ २ ३क २र ३ २र ३ २ ३ १ २
ससुप्रकेतोअभ्यक्रमीदिषोऽच्छावाजन्नैतशः ॥ २ *॥ १६

"वृषभः" कामानां वर्षकः इन्द्रः, हे सोम ! "यस्य" यं "ते" त्वां "पीत्वा" "वृषायते" वृषभ इवाचरति, किञ्च "स्वर्विदः" सर्वं जानतः "अस्य" तव † "पीत्वा" पाने सति "सु प्रकेतः" शोभन-प्रज्ञः ‡ "सः" इन्द्रः वृषभः शत्रूणाम् अन्नानि "अभ्यक्रमीत्" अभिक्रामति । तत्र दृष्टान्तः—"न" "एतशः" [—इत्यश्वनाम ( निघ० १, १४, १० ) ] यथा अश्वः "वाजं" सङ्ग्रामम् अभि गच्छति तद्वत् ॥

"स्वर्विदः"—"स्वर्दृशः"—इति पाठौ ¶ ॥ २ ॥ १६

२ १ २ ४ ५ २ ३ ५ २ १र २
॥ सफम् ॥ पवस्वा३मधु । मत्ता२३४माः । इन्द्राय
१ १ २ ४ २ ५ २ १
सोमा२ । क्रतुवाइत्ता३मो३ । मा३२३४दाः । महाइ ।
२ ४ २ ५ २ १ २ ४ ५
द्युत्ताता३मो३ । मा३४५दोईहाइ ॥(१) महिद्यु३त्तत ।

---

* ऋ० वे० ७, ५, १७, २ । † 'अस्य सोमस्य'—इति वि० ।

‡ 'सुप्रकेतः सुस्पष्टः'—इति वि० ।

¶ "पीता"—इति "शर्यतः"—इति, "स्वर्दृशः"—इति च ऋग्वेदीयपाठाः ।

२ ३ ५ २ १ २र १ १ २ ४
मोमा२३४दाः। यस्यतेपाइत्वा२। वृषभोवा३र्षा३।
२ ५ २ १ र २ ४ २
या३२३४ताइ। अस्या। पीत्वास्व३वा३ः। वा३४५इदो
५ १ १ २ ४र ५ २ ३ ५ २ १ १
ईहाइ॥(२) अस्यपी३त्वास्व। वर्वा२३४इदाः। सस्तुप्र
१ १ २ ४ २ ५
काइतो२। अभियाक्का३मी३त। आ३२३४इषाः।
२ १ र २ ४ २ ५
अच्छा। वाजान्वा३ए३। ता३४५श्रोईहाइ(३)॥ ८* ॥[१]

१ २ १र १
॥ शङ्कुसाम॥ पवस्वमा। ए२। धुमा। तमाः।
र र २ १र २ १ १
इन्द्रायसोमक्रतुवित्तमोमा२३दाः। माद्यी२द्यू्त्वा२३।
२ १ ५ ४ ५
तमो२३४वा। मा५दोईहायि (१)॥ ६ † ॥ [२]

१ २ १र १
॥ शङ्कु॥ पवस्वमा। ए२। धुमा। तमाः।
र र २ १र २ १ १
इन्द्रायसोमक्रतुवित्तमोमा२३दाः। माद्यी२द्यू्त्वा२३।
२ १ ५ ४ ५ १ २ १र
तमो२३४वा। मा५दोईहायि॥(१) मद्दिद्युत्सा। ए२।
१ र र र र २ १र २ १
तमाः। मदो। यस्यतेपीत्वावृषभोवृषाया२३तायि। आ

---

* ऊ० गा० १प्र० १ख० ८सा०। † ऊ० गा० २प्र० १ख० ६सा०।

१ २ १ ५ ४ ५

स्या २पायित्वा२३। सुवो२३४वा। वा५यिदो६हायि ॥(२)

२ १ १र १र १ र र

अस्यपीत्वा। ए २। सुवाः। विदाः। सत्तुप्रकेतोअ

२ १र २ १ १ २ १

भियक्रमीदा२३यिषाः। आच्छा २वाजा२३म्। नचो२३४

५ ४ ५

वा। ता५श्रो६हायि(३) ॥ ८ * ॥ [३]

१ २ ५

॥ सत्रासाहीयम् ॥ पवा३४। स्वमधुमत्तमः। ओ

५ १ र र र १ १

६वा। इन्द्रायसोमक्रतुवित्तमोमा २दाः। मा २हायि।

२ १ ऽ २र २र २ १ ५

द्यु२३म्ना। तमौ३हो। वाहा३४३यि। मा२३४दो६

३ २ र ५ ५

हायि ॥(१) महा३४यि। द्युम्नतमोमदः। ओ६वा।

१ र र र र र १ १

यस्यतेपीत्वावृषभोवृषाया २तायि। आ २स्या। पा२३यि

२ १ ऽ २र २र २ १ ५ ५

त्वा। सुवौ३हो। वाहा३४३यि। वा२३४यिदो६हा

३ २ र र ५ ५ १

यि ॥(२) अस्या३४। पीत्वास्वर्विदः। ओ६वा। सत्तु

र र र १ १ २

प्रकेतोअभियक्रमीदा २यिषा। आ २च्छा। वा२३जाम्।

---

* ऊ० गा० ७प्र० १ख० ८सा०।

१ ऽ २र          २र    २          १ ऽ २र          २र २
न्औ३हो । वा२३जाम् । न्औ३हो । वाहा३४३यि ।
१      ५    ५
ता२३४औ३हाायि(३) ॥ ७ * ॥ [४]

२र र    १    २
॥ इडानांसङ्क्षारम् ॥ औहोयिङ्कवा३होयि । पव
४ २ १ ५    २ १    ४ २र ३ ५
स्वमा३धू३मत्तमः । इन्द्रायसोमक्रतुवा३यित्ता३मोमदः ।
२र र    १    ३ २    ३    ५    २ १र १
औहोयिङ्कवा३होयि । मह्यायिद्यु२३४क्षा । तमोमदः ।
१    २    ४    ५    ४
इडा२३भा३ । एहीडा । हो५ई । डा ॥ ५ † ॥ [५]

५ २ ४ ५ ४ ५    २ १ २ १
॥ कालेयम् ‡ ॥ पवस्वा३मधुमत्तमाः । इन्द्रायसो ।
२    १    ५    २    १
मा२३ । क्रतू३ । वा२३४यित् । तमः । मा३दाः ।
१    ३ २    २    ५    ४    ५
मह्यायिद्युक्षो । वा३४३औ३४वा । तमो५मदाः ॥(१) म
२ ४ ५ ४र    ५    १ २र १    २
हिद्यु३क्षतमोमदाः । यस्यतेपायि । त्वा२३ । वृषा३ ।
१    ५र    २    २    १    ३र २
भो२३४ । वृषा । या३तायि । अश्वापीत्वौ । वा३४३

---

* ऊ० गा० ६प्र० २अ० ७ गा० ।    † ऊ० गा० १०प्र० ५गा० ।

‡ "महाकालेयम्"—इति ख० पु० ।

औ३४वा । सुवा५र्विदाः ॥(२) अस्यपी३त्वासुवर्विदाः । सस्तुप्रकायि । तो२३ । अभा३यि । आ२३४ । क्रमीत् । आ३यिषाः । अच्छावाजौ । वा३४३ओ३४वा । नए५त शाः । हो५इ डा(३) ॥ ५ * ॥ [६]

॥ च्यावनम् ॥ पवा२३४ । स्वम । धुमा२३४त्तमा इः । हाउ । आयिन्द्राया२३४सो । मक्रतुवितमोमा दो२३४हायि । मद्दायिद्यू३ता३ । तामा२३हा३४३यि । मा२३४दो६हायि(१) ॥ ४ † ॥ [७]

॥ प्रतीचीनेडङ्काशीतम् ॥ पवस्वमधु । मा२त्तमाः । आयिन्द्रायसोमक्रतुवित् । तमोमदा२३४ः । हाहोयि । मद्दियु ताता३माः । मदा । औ३होवा ॥(१) मद्दियुत्तत । मो२मदाः । यास्यतेपीत्वावृषभः । वृषायता२३४यि ।

* ऊ० गा० १०प्र० २ख० ४सा० ।    † ऊ० गा० ११प्र० १ख० ४सा० ।

३र २ १ र २ २ १ २ ४५
हाहोयि । अस्यपीत्वाह्व३वाः । विदा । औ३होवा ॥(२)

२ १ २र १र २ १ २र र
अस्यपीत्वास्तु । वा२र्विदाः । सास्तुप्रकेतोअभिय । क

१ ७ ३र २ १ र र २ २
मायिद्विषा२३४ः । हाहोयि । अच्छावाजान्ना३ए । न

१ ० ४५ ४४
शा । औ३होवा । ई्डा (३) ॥ १८ ॥ [८]

१ २ ऽ २
॥ धुरासाकमश्वम् ॥ पवस्वमा३ । हौ३हो३१· । धुम

२ ऽ २ र २ ऽ २
त्तमा३ः । हौ३हो३१यि । इन्द्रायसो३ । हौ३हो३१

र २ ऽ २ १ २
मकतुवित्तमोमदा३ः । हौ३हो३१यि । महिद्युक्षा३ ।

ऽ २ र २ ऽ २
हौ ३ हो ३ १ । तमोमदा ३ः । हौ३हो३१२३ ४५ ई ।

डा(३) ॥ ८ † ॥ [९] १६

तृचात्मके तृतीयसूक्ते—

प्रथमा ।

२ ३१ २ ३ २ ३१ २र ३ १ २
इन्द्रमच्छसुताइमेवृषणंयन्तुहरयः ।

३ २३ २ ३१ २ ३ १ २
श्रुष्टेजातासइन्दवःस्वर्विदः ॥ १ ‡ ॥

---

* ऊ० गा० १३प्र० २ख० १८सा० । † ऊ० गा० १४प्र० १ख० ८सा० ।

‡ छ० आ० ६. २, ३, १ ( २भा०२०१पृ० )=ऋ० वे० ७, ५, ९. ११ ।

"श्रुष्टे" [श्रुष्टीति क्षिप्रनाम (निघ॰ ६, १२)] क्षिप्रं "आतासः" आताः "इन्दवः" पात्रेषु व्याप्ताः "स्वर्विदः" सर्वज्ञाः "हरयः" हरितवर्णाः "सुताः" अभिषुताः "इमे" सोमाः "इषयं" कामानां येषकम् "इन्द्रम्" "अच्छ यन्तु" अभिगच्छन्तु॥

"श्रुष्टे"-"श्रुष्टि"—इति पाठौ॥ १॥

अथ द्वितीया।

२ १ २र ३ १ २र ३ १
अयम्भरायसानसिरिन्द्रायपवतेसुतः।
३ २ ३ १ २ ३ १ २ ३ २
सोमोजैत्रस्यचेततियथाविदे॥ २ *॥

"भराय" सङ्ग्रामाय "सानसिः" भजनीयः† "सुतः" अभिषुतः "अयं" "सोमः" "इन्द्रार्थं" "पवते" क्षरति यज्ञादिषु क्षरति। ततः सोमः "जैत्रस्य" ["क्रियाग्रहणं कर्त्तव्यम् (१, २, २७४वा॰)"—इति कर्मणः सम्प्रदान-सञ्ज्ञा, चतुर्थ्यर्थ षष्ठी (२, ३, ३६)] जयशील मिन्द्रं "चेतति" जानाति। "यथा" इन्द्रः "विदे" लोकैर्ज्ञायते तथा जानाति॥ २॥

---

* ऋ॰ सं॰ ७, ५, ८, १।

† 'सानसिः सम्भजिता'—इति वि॰

अथ तृतीया ।

२ १उ १ १ १ १ २ १ १ १

अस्येदिन्द्रोमदेष्वाग्राभङ्गृभ्णातिसानसिम् ।

१ २ १ १ २ २ १ १ २ २

वज्रञ्चवृषणम्भरत्समप्सुजित् ॥ ३ * ॥ १७

"अस्येत्" अस्य सोमस्यैव "मदेषु" सञ्जातेषु† "सानसिं" सर्वैः सम्भजनीयं‡ "ग्राभं" ग्रहीतव्यं धनुः "गृभ्णाति" गृह्णाति ["हृग्रहोर्भश्छन्दसि"—इति भत्वम्] किञ्च "अप्सु-जित्" उदकार्थं वृत्रस्य जेता¶ । यद्वा, 'आप इत्यन्तरिक्षनाम (निघ०१,३,८) अन्तरिक्षे अहिनामकस्य जेता "इन्द्रः" "वृषणं" वर्षितारं "वज्रं च" स्वकीय मायुधं "सम्भरत्" सम्बिभर्त्तु:§ [विभक्तेरडागमः ॥

"गृभ्णाति"—"गृह्णीत"—इति पाठो ॥ ३ ॥ १७

१ १ २ ४ ५ २ ३ ५

॥ पौष्कलम् ॥ इन्द्रमा३च्छत । ताई २ ३ ४ माइ ।

२ १ २ १ २ ३ ५ १ १ २ ७

वृषाणंया । त्वधारा२३४याः । ऋहाइजाता । सई२

* ऋ० वे० ७,५,९,१ ।

† 'मदेषु निमित्तभूतेषु'—इति वि० ।

‡ 'सानसिं सम्भजनभावम्'—इति वि० ।

¶ § विवरणकारस्तु यथाश्रुतं 'समप्सुजित्'—इत्येव पदं व्याख्यातवान्, न तु समिति भरदित्यान्वातेन अप्सुजिदिति पठितमिति । तथाहि—'समप्सुजित् यज्ञेषु जेता'—इति ।

न्दा २ ३ ४ ५ वा६ ५ ६ः । सुवर्विदा २ ३ ४ ५ः॥(१) य

यम्भा३राय। साना २ ३ ४ साइः । इन्द्रायपा। वाता

इन्ह २ ३ ४ ताः । सोमोजै । त्वा । स्यचा२इता २ ३ ४ ५

ताई५६इ । यथाविदे२३४५॥(२) अस्येदी३न्द्रोम । दा

इषू२३४वा । ग्राभङ्गुभ्णा । ताइसाना२३४साइम् ।

वज्राञ्चवा । षणा२भा२३४५रा६५६त् । समप्सुजी२३

४५त् (३) ॥ १० * ॥ [१]

॥ सुज्ञानम् ॥ इन्द्रमच्छा । सुताइमायि । वृषणं

या२ । तुच्चरयाः । अष्टे जाता२ । सइ । दा२वा२

३४औचोवा । सुवर्विद्ए३उपा२३४५ (१) ॥ ७ † ॥ [२]

॥ रोहितकुलीयाद्यम् ॥ इन्द्रमच्छा । सुताइमे ।

वृषणंयन्तुच्चरयःअष्टे जा२३ता । सा२३ई । दावःसुवा३१

* ऊ० गा० १प्र० १ख० १०सा० । † ऊ० गा० १प्र० १ख० ७सा० ।

"उरुयुगेवचोयुजाइन्द्रस्यवाहास्वर्विदा"- "इन्द्रवाहावचोयुजा"
—इति पाठौ ॥ ३ ॥ २३

१ र र १ १ १ १
॥ नार्म्मेधम् ॥ अधाहीन्द्रगिर्वणा३ए । उपात्वा३का ।

१ २ ५ २ १ २ ३र र ५
मईऽरमार२३४ह्वाइ । सद्यमाहा । औहौहोर२३४वा ।

१ र ५ २ १ ३ ३र र ५ १
ऊ२३४हेहाइ । वम्मान्ताऊ । औहोहोर२३४वा । हार

५र ५ १र र र २ १
३४भोः । एहियाऽहा ॥(१) वार्णत्वायव्याभो३रे । वह्नौ

२ २ १ ३ ५ २र १ २ ३र र
न्तौ३प्रू । रब्रार२ह्मार२३४णौ । वावृध्वा३सा । औहोहो

१ ५ ३ ५ २ १ २ ३र र
२३४वा । चा२३४इदहाइ । द्रिवोदाइवा । औहोहो

५र ५ २ र २
२३४वाइ । एहियाऽहा ॥(२) युञ्जन्तिहरीइषिरा३ए ।

१ २ १ २ १ २ २ १ ३
स्य । गा । थ । या । उरौरा३थाइ । उरुइयू२३४

५ २ १ २ ३र र ५ १ ५
गाइ । वचोयूजा । औहोहोर२३४वा । आ२३४इन्द्रहा

२र १ २ ३र र ५ १
इ । वाहास्वा । औहोहोर२३४वा । वा २ ३ ४ इदा ।

५र ५ ४
एहियाऽहा । होऽ५इ । डा(३) ॥ १७ * ॥ [१]

---

* ऊ० गा० १प्र० १अ० १७धाम ।

॥ द्यौतानम् ॥ हा३। ओ२हा३। ओ२हा२। हा
यि। अधाह्यिया२यि। द्रुगिर्वा२३४णाः। उपत्वाका२।
मईमा२३४हायि। सा३। हम्मा२३४हायि। उदेवग्मा
२। तऊदा२३४भायिः ॥(१) वार्णत्वा२। यवीया२३४
भीः। वर्द्धन्तिभ्रू२। रत्नाह्वा२३४णो। वा३। वृध्वा
२३४५साम्। चिदद्रिवो२। दिवेदा२३४यिवायि ॥(२)
युञ्जन्तिहा२। रीइआयिषा२३४यिरा। हगाथया२
उरौरा२३४थायि। उरुयुगे२। वचोयू२३४जा। इन्द्र
वाहा२। स्ववर्वा२३४यिदा। हा३। ओ२हा२। ओ
२हा३। हा३४। औहोवा। आओ३हो२३
४५॥८*॥[२]२३

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य
षष्ठः खण्डः†।

---

* ऊ० गा० १०प्र० २ख० ८सा०।

† 'अग्निष्टोम उक्थ्योक्तः। षोडशी च सामक्षय-समाम्नायेन ऋक्-समाम्नायेन चान्तरितः। इदानीं मतिरात्रो वक्तव्यः'—इति वि०।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १ ॥

॥ इत्युत्तरार्च्चिके प्रथमस्यार्द्ध-प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक
श्रीवीरबुक्क-भूपाल-साम्राज्य-धूरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-
प्रकाशे उत्तराग्रन्थे प्रथमोऽध्यायः* ॥



* मूले त्वमार्द्धप्रपाठकः समाप्तः, नतु प्रपाठकः ; विवरणमप्यतेऽपि तथैव ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थं-महेश्वरम् ॥ १ ॥

## ॥ अथ द्वितीयाध्याय आरभ्यते ॥



तत्र,

पान्तमाव इति प्रथम-खण्डे—

तृचात्मके प्रथमे सूक्ते,

प्रथमा ।

२ ३ २ ३ १ २ ३ १ २ ३ १र २र
पान्तमावोअन्धसइन्द्रमभिप्रगायत ।

१ १ २ ३ १ २ ३ १ २ ३ २
विश्वासाहꣳशतक्रतुम्मꣳहिष्ठञ्चर्षणीनाम् ॥ १* ॥

हे ऋत्विजः ! "वः" युष्मदीयं "अन्धसः" सोमलक्षणमन्नं "आ पान्तम्" आभिमुख्येन पिबन्तं [पा पाने (भ्वा० प०); छान्दसः शपोलुक् (२, ४, ७३); 'सर्वे विधयश्छन्दसि विकल्पन्ते'—इति "न लोकाव्यय (२, ३, ६९)"—इति षष्ठी-प्रतिषेधाभावः; ततोऽन्धस इत्यस्य "कर्त्तृकर्मणोः (२, ३,

* छ० आ० २, २, २, १ (१ भा० ९५५ पृ०) = ऋ० वे० ६, ६, १५, १ ।

६५)"—इति षष्ठी। षष्ठी] सोम माभिमुख्येन पिबन्त मेतादृशम् "इन्द्रम्" "अभि प्रगायत" प्रकर्षेण अभिष्टुत। कीदृशम्? "विश्वासाहं" सर्वेषां शत्रूणामभिभवितारं सर्वेषां भूतजातानां वा, अतएव "शतक्रतुं" बहुविधप्रज्ञानं बहुविध-कर्माणं वा "चर्षणीनां" मनुष्याणां "मंहिष्ठं" धनस्य दातृतमम्। यद्वा, यजमानानां यष्टव्यत्वेन पूजनीय मिन्द्रं प्रगायतेत्यर्थः॥ १॥

अथ द्वितीया।

३ १२ ३१२ ३ २ १२
पुरुहूतम्पुरुष्टुतङ्गाथान्याऽ३ऽ॑सनश्रुतम्।
२ ३ १ २
इन्द्रइतिब्रवीतन॥२*॥

हे ऋत्विग्यजमानाः! "पुरुहूतं" यज्ञेषु बहुभि राहूतं "पुरुष्टुतं" बहुभिः स्तोत्रशस्त्रादिभिः स्तुत मतएव "गाथान्यं" गानयोग्यं गातव्यं† "सनश्रुतं" सनातनया प्रसिद्धम्,‡ एवंविधं देवम् "इन्द्रइति" यूयं "ब्रवीतन" ब्रुवीध्वम् ['ब्रूञ् व्यक्तायां वाचि (अदा० उ०)'—इत्यस्य लङि व्यत्ययेन (३, ४, ८८) ध्वमस्तनबादेशः, अतएव गुणः॥ २॥

* ऋ० वे० ६, ६, १५, २।

† 'गाथानि स्तोत्र-शस्त्र मन्त्राणि, ताभिः नीयते यः स गाथान्यः तं गाथान्यम्'—इति वि०।

‡ 'सनशब्दः सदावाची, सदैव विश्रुतम्'—इति वि०।

अथ तृतीया।

२ ३ १ १ २ ३१ २ ३ १र २र ३ २

इन्द्रइन्नोमहोनान्दातावाजानान्नृतुः।

३ १ २ ३ १ २

महाँ२॥अभिज्ञ्वायमत॥३* ॥ १

"इन्द्रइत्" पूर्वोक्तलक्षण इन्द्रएव "नः" अस्मभ्यं "मंहोनां" मघोनां धनवतां पश्वादि-लक्षण-धन-युक्तानां "वाजानाम्" अन्नानां "दाता" भवतु। कीदृशम्? "नृतुः" ["नृतिश्रध्योःकुः" —इति कुप्रत्ययः, छस्यश्छान्दसः] सर्वस्य नर्त्तयिता†; यद्वा [नृ नये, (क्रा० प० प०) औणादिक-तु-प्रत्ययः, धातो-र्ह्रस्वश्छान्दसः] स्तोतृभ्यो गवादिनेता; अतएव "महान्" स इन्द्रः "अभिज्ञु" अभिगत-जानुकम्‡ अस्मभ्यम् "आ यम तु" आयच्छतु ददातु¶। यद्वा स इन्द्रः अभिज्ञु अस्मदभिमुख-मागच्छत धनं स्वहस्तयोः परिगृह्य अस्मान् नयतु,—धनं गृहीत्वा अस्मभ्यं ददात्वित्यर्थः॥

"मघोनाम्"-"मंहोनाम्"—इति पाठौ॥ ३ ॥ १

३ ४ २

॥ वैतहव्यमोकोनिधनम्॥ पाऽ५न्तम्। आ३वो

४ ५ १र ७ २ ३ ५ १

३अन्धसाः। आइन्द्रामभाइ। प्रगारयार३४ता। विश्वा

* ऋ० वे० ६, ६, १५, ३।

† 'नृतुः नृभ्योहितः'—इति वि०।

‡ 'अभिज्ञु सर्वस्य ज्ञाता'—इति वि०।

¶ 'आयमत्—यमु बन्धने, सर्वं जगत् कर्मभवैः पाशैर्बध्नाति'—इति वि०।

२ ५ २ १ २ २ १ २ १ २
२सा२३४द्दाम्। आ३ना३का३ल्म्। मᳲहिष्ठञ्चर्ष

१ २ ५ २ २ २ २ ४ २
णाइ। ना२मा२३४औहोवा॥(१) पू५पूरुह्न। ता३म्पू३

४ ५ १ २ ७ २ ५ १२
रुष्टु्ताम्। पूरुह्नताम्। पुरु२ष्टू२३४ताम्। गाथा

२ ५ २ १ २ २ १ १ १ १ १
२न्या२३४याम्। सा३नाश्रू३ताम्। आइन्द्रइतिब्र। वा

२ ५२ २ २ ४
इ। ता२न्या२३४औहोवा॥(२) आ५इन्द्रइत्। नो३

२ ४ ५ १ २ ५ १२
मा३होनाम्। आइन्द्रइन्नो। मा२हो२३४नाम्। दा

२ ५ २ २ २ १ २२ १ २ १२
ता२वा२३४जा। ना३१ना३र्तूः। माद्दाᳲअभिज्ञु। आ।

२ ५२ २ २ १११
या२मा२३४औहोवा। ओ३का२३४५ः॥ १८*॥ [१] १

अथ द्वितीयढचे, प्रथमा।

२३१२ ३१ २३ १२
प्रवइन्द्रायमादनᳲर्हर्यश्वायगायत।

१२ ३१२
सखायःसोमपाव्ने॥ १†॥

---

* छ० गा० १प्र० १ख० १न्द्राम।

† छ० आ० २, २, २, २ ( १भा० ३५८पृ० )—ऋ० वे० ५, २, १५, १।

हे "सखायः" स्तोतारः ! "वः" यूयं "हर्यश्वाय" हरिनामकाश्वोपेताय "सोमपाव्ने" सोमानां पात्रे "मादनं" मदकरं हर्षकरं स्तोत्रं प्रगायत ॥ १ ॥

अथ द्वितीया ।

२उ   १ २   ३ १ २   ३ १ २ २उ ३ १ २
शꣳसेदुक्थꣳसुदानवउतद्युक्षंयथानरः ।
२   ३ १ २
चकृमासत्यराधसे ॥ २* ॥

"उत" अपिच हे स्तोतः ! "सुदानवे" शोभनदानाय "सत्यराधसे" सत्यधनायेन्द्राय† "उक्थं" स्तोमं‡ "यथा नरः" अन्ये स्तोतारः¶ "द्युक्षं" दीप्तेः साधनभूतं स्तोत्रं शंसति, तद्वत् त्वमपि "शंस" उच्चारय । इदिति पूरणः§ । वयमपि "चकृम" स्तोत्रं करवाम ॥ २ ॥

---

* ऋ० सं० ५, ३, १५, २ ।

† 'सत्यराधसे—राधः अन्नं धनं वा, सत्यं वा । सत्यान्नाय, सत्यधनाय, सत्यसत्याय वा'—इति वि० ।

‡ 'उक्थं—उक्थानि सामानि, हे उद्गातः ! गायस्व सामानि । अथवा उक्थं शस्त्रमुच्यते तच्छंस होतः ! एकवचनं जात्यपेक्षम्, उक्थजातिं शंस ।'—इति वि० ।

¶ 'यथा नरः—यथा मनुष्याः । प्रथमैषा षष्ठीस्थाने द्रष्टव्या यथा मनुष्यस्य स्तुतिः क्रियते'—इति वि० ।

§ "अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्य-पूरणा आगच्छन्ति पद-पूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति"—इति नि० नै० १, ९ ।

अथ तृतीया ।

१ २    ३ १उ   ३ १ २
त्वन्नइन्द्र वाजयुस्त्वङ्गव्युःशतक्रतो ।

१   २   ३ १ २
त्वꣳहिरण्ययुर्वसो ॥ ३ * ॥ २ †

हे "इन्द्र !" "त्वं" "नः" अस्माकं "वाजयुः" अन्नकामो भव । हे "शतक्रतो" बहुविध-कर्म्मवन्निन्द्र ! ‡ "त्वं" "नः" अस्माकं "गव्युः" गोकामो भव । हे "वसो" वासयितरिन्द्र ! त्वं हिरण्ययुः" हिरण्यकामोऽपि भव । ["छन्दसि परेच्छायामपि दृश्यते (वा० ३, २, ८)"—इति क्यच् ॥ ३ ॥ २

॥ शात्यम् ॥ प्रवइन्द्रा२ । यमादा२३४नाम् । प्रवा२इन्द्रा । औ३हो । या२३४मा । दा३नाम् । हरा२अश्वा । औ३हो । या२३४गा । या३ता । सखा२यास्तो । औ३हो३ । मायो२३४वा । आ५वो६हा इ ॥(१) शꣳसीदुक्थार२म् । सुदाना२३४वाइ । शꣳसा

* ऋ० वे० ५, ३, १५, ३ ।

† 'गौरीवितेः तद्देवार्षम्'—इति वि० ।

‡ 'शतक्रतो—बहुभिः क्रतुभिरिष्टवान् यः स शतक्रतुः । अथवा क्रतुरिति कर्म्मनाम प्रज्ञानाम वा, बहुकर्म्मा बहुप्रज्ञो वा'—इति वि० ।

१ १ १ ३ ५ २ २

२इदुक्था। औ३होइ। हू२३४दा। ना३वाइ। उ

१ २ २ ३ ५ २ २ १

ता२युत्ता। औ३होई। या२३४था। ना३राः। च

१ २ १ १ ५ ४ ५

क्रम। सा। औ३हो३। त्यारो२३४वा। धा ५सो६हा

१ ३ २ २ ५ २ १

इ॥(२) तुवन्नआ२इ। इवाजा२३४यूः। तुवा२न्नआ।

१ २ ३ ५ २ २ १ २

औ३होइ। द्रा२३४वा। जा३यूः। तुवा२कृव्यूः। औ

२ ३ ५ २ २ १ २

३होइ। मा२३४न। का३ताउ। तुवा२र्हिरा। औ

२ १ ५ ४ ५

३हो३। ण्यायो२३४वा। वा५मो६हाइ(३)॥१८*॥[१]२

अथ तृतीयतृचे, प्रथमा।

३ १ २ ३ १ २ ३ १ २ ३ २ २ १ २

वयमुत्वातदिदर्थाइन्द्रत्वायन्तःसखायः।

१ २ ३ २ ३ १ २

कण्वाउक्थेभिर्जरन्ते॥ १ †॥

हे "इन्द्र!" "त्वायन्तः" त्वामात्मन इच्छन्तः "सखायः" समानख्याना वयं "तदिदर्थाः" यद्विषयं स्तोत्रं तत्तदित्, तदेवार्थः

---

* ऊ० गा० १प्र० १ख० १८सा०।

† छ० आ० २, २, २, ३ (१भा० ८३० पृ०)=ऋ० मे० ५, ७, २०, १।

प्रयोजनं येषां ; तादृशाः सन्तः "त्वा" त्वां "जरामहे" स्तुमहे । "उ"—इति पूरणः । "कण्वाः" कण्वगोत्रोत्पन्नाः अस्मदीयाः पुत्रादयश्च "उक्थेभिः" उक्थैः शस्त्रैः "जरन्ते" त्वां स्तुवन्ति ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १र २र २ १ १ ३ २ ३ १ २
नघेमन्यदापपनवज्रिन्नपसोनविष्टौ ।

२उ ३र १ २
तवेदुस्तोमैश्चिकेत ॥ २ * ॥

हे "वज्रिन्" वज्रवन्निन्द्र ! "अपसः" अपस्विनः कर्म्मवतः† "तव" सम्बन्धिनि‡ "नविष्टौ" अभिनवे यागे वर्त्तमानोऽहं "अन्यत्" त्वद्विषयादन्यत् स्तोत्रं "नघेम्"¶ नैव "आपपन" अभिष्टौमि [ पनतेः स्तुतिकर्म्मणः ( भ्वा० आ० ) उत्तमे णलि रूपम् ] ; "तवेदु" तवैव "स्तोमैः"§ स्तोमं स्तोत्रं "चिकेत" अभि जानामि || त्वामेव सर्वदा स्तौमीत्यर्थः ॥ २ ॥

---

* ऋ० वे० ५, ७, २०, २ ।

† "अपस्"—इति कर्मनामसु प्रथमं नैघण्टुकम् ( २, १, १ ) ।

‡ 'तव—षष्ठी वा द्वितीयार्थे द्रष्टव्या त्वां ० ० ० चिकेत'—इति वि० ।

¶ 'न, घ, ईम्'—इति त्रयोऽप्येते उपसर्गाः'—इति वि० ।

§ 'स्तोमैः—क्रतुभिः'—इति वि० ।

|| 'चिकेत—चेतनां कुर्म्मः'—इति वि० ।

अथ तृतीया।

२ १ १ २ २ २ १ ३ १ २ २ २

इच्छन्तिदेवाःसुन्वन्तन्नस्वप्नायस्पृहयन्ति।

१ २ ३ २ ३ १ १

यन्तिप्रमादमतन्द्राः॥ ३ *॥ ३ †

"सुन्वन्तं" सोमाभिषवं कुर्वन्तं यजमानं "देवाः" इन्द्रादयः सर्वे "इच्छन्ति" रक्षितुम्, "स्वप्नाय न स्पृहयन्ति" स्वप्नावस्थान्तस्य सुन्वतो नेच्छन्ति सर्वदा प्रबुद्धमेव कुर्वन्तीत्यर्थः [“स्पृहेरीप्सितः (१, ४, ३६)”—इति कर्म्मणि चतुर्थी; स्पृहईप्सायां चुरादिरदन्तः]। यतएव मतः कारणात् “अतन्द्राः” अनलसा देवाः "प्रमादं" प्रकर्षेण मदकरं‡ तदीयं सोमं "यन्ति" शीघ्रं प्राप्नुवन्ति॥ ३॥ ३

५ २ ४र ५ १र

॥ काण्वम्॥ वयमु३त्वातदिदर्थाः। ऐहिहा२

१ र र र २१ २ २

इ। वयमुत्वातदिदर्थाइन्द्रत्वायन्तःसखा२३याः। का२

५ १ २ १ ५ १

३४ण्वाः। ऊ। क्थाइ। भिऊर्जो२३४वा। रत्ता३या

१ ११ १ ५ र १ ४ र ५ १र १र

२३४५॥(१) नघेमा३न्यदापपना। ऐहिहा२इ। नघे

---

* ऋ० वे० ५, ७, १०, ३।

† ‘अत्र काण्वं साम। कण्वस्यार्षम्’—इति वि०।

‡ ‘प्रमादं—मदमोदमूप्राविन्यस्येदं वचम्। प्रकर्षेण तप्यम्—इति वि०।

२ २२१ २ २ ५
मन्यइापपनवज्रिन्नपसोनवा२३इष्टाउ। ता२३४वेत्।
१ २ १२१ ५ २२ १११२
ऊ। स्तो। मैश्वो२३४वा। वोता३या२३४५॥(२)
५ २ ४२२ ५ १२ १ २२
इच्छन्ता३इदेवाःसुन्वन्ताम्। ऐहिहा२इ। इच्छन्तिदेवाः
२ २१ २ ३ ५ १ २
सुन्वन्तन्नस्वप्नायस्पृहया२३न्तो। या२३४न्तो। प्रा। मा।
२१ ५ २ ११११
दमो२३४वा। तन्द्रा३या२३४५(३)॥ २० *॥ [१] ३

अथ चतुर्थतृचे, प्रथमा।

१२ ३१२ ३१२ २२ ३ १२
इन्द्रायमद्वनेसुतम्परिष्टोभन्तुनोगिरः।
३१२ ३ १२
अर्कमर्चन्तुकारवः॥ १ †॥

"मद्वने" [माद्यतेः (दि०, प०) क्वनिप्] मदनशीलाय "इन्द्राय" तदर्थं "सुतं" सोमं "नः" अस्मदीयाः "गिरः" स्तुतिलक्षणा वाचः परिष्टोभन्तु [स्तोभतिः स्तुतिकर्म्मा (निघ० ३, १४, ४)] सोमं स्तुवन्तु। ततः "कारवः" स्तुतिकारिणः स्तोतारश्च "अर्कं" सर्वैरर्चनीयं सोमम् "अर्चन्तु" पूजयन्तु॥ १॥

---

* ऊ० गा० १प्र० १ख० २० सा०।

† ऋ० भा० २, १, २, ४ (१भा० ३६२ पृ०)—ऋ० वे० ६, ६, १८, ४।

अथ द्वितीया ।

२ १ २१ १ १२११२ ३१२ १२
यस्मिन्विश्वा अधिश्रियोरणन्तिसप्तसꣳसदः ।

१२ ३२२
इन्द्रꣳसुतेहवामहे ॥ २ * ॥

"यस्मिन्" इन्द्रे "विश्वाः" सर्वाः "श्रियः" कान्तयः "अधि" अधिकं भवन्ति अतिशयेन तेजस्वोऽयम्† । किञ्च "सप्त" सप्तसङ्ख्याकाः "संसदः" सम्यग् यज्ञेषु कर्म्मकरणार्थं सीदन्तीति संसदो होत्रकाः‡ यस्मिन् "रणन्ति" सोमप्रदानार्थं रमन्ते; यद्वा यं शब्दयन्ति स्तुवन्ति तं पूर्वोक्तलक्षणम् "इन्द्रं" "सुते" सोमेऽभिषुते सति "हवामहे" वयं सोमपानायाह्वयामः ॥ २ ॥

अथ तृतीया ।

१ २ ३१२ ३१२३१२
त्रिकद्रुकेषुचेतनन्देवासोयज्ञमत्नत ।

१ २र १ १२
तमिद्वर्द्धन्तुनोगिरः ॥ ३ ¶ ॥ ४ §

---

* ऋ० वे० ६, ६, १८, ५ ।

† 'अधिश्रियः—ये अधिश्रिताः मनुजाः'—इति वि० ।

‡ 'सप्तसंसदः—सप्तर्त्विजः ; तद्यथा उद्गातारः, होता, मैत्रावरुणः, ब्राह्मणाच्छंसि, अच्छावाकः—एते ऋत्विजः'—इति वि० ।

¶ ऋ० वे० ६, ६, १९, १ ।

§ 'अत्र श्रौतकक्षं नाम'—इति वि० ।

"देवासः" देवाः इन्द्रादयः "त्रिकद्रुकेषु" आभिप्लविकेष्वहःसु ज्योतिर्गौरायुरिति त्रिकद्रुकाः, * तेषु "चेतनं" [ चिती संज्ञाने ( भ्वा०, प० ) ] चेतन्ति जानन्ति अनेन स्वर्गादिकमिति चेतनो ज्ञानसाधनो यज्ञः तम् "अतत" अतन्वत स्वैः स्वैः कर्म्मभिः पालनैश्च विस्तारितवन्तः [ तनु विस्तारे ( तना०, उ० ) लङि "बहुलं छन्दसि ( २, ४, ७३ )"—इति विकरणस्य लुक्, "तनिपत्योश्छन्दसि ( ६, ४, ९९ )"—इति उपधालोपः "तमित्" तमेव यज्ञं "नः" अस्माकं "गिरः" स्तुतिलक्षणा वाचः "वर्द्धन्तु" वर्द्धयन्तु ॥ ३ ॥ ४

१ र १ १ २र १ २र १ १
॥ शौतकक्षम् ॥ इन्द्रायमद्वनेसुतम्। इन्द्रायमोवा।
१ २ १ १ २र १ २ २
द्वा३नायिद्व३ताम्। परिष्टो। भा२३। हा३हा३।
१ २ ५ १ २ २ १ १र
हुनोरंगार३४इराः। आमचर्का३। हा३हा। तुका
२ १ २ १र २ १ १ १
रा२३वा३४३ः ॥(१) यस्मिन्विश्वाअधिश्रियः। यस्मिन्विश्वो

* ज्योतिर्गौरायुरितीति चतुर्थ-पञ्चम-षष्ठाना माभिप्लविकाना मह्नां नाम्नां प्रतीकमात्रम्। अस्ति गवामयनादिकं सत्रम्; तत्र, एकषष्ठ्युत्तरत्रिशतदिननिर्वर्त्त्यं भवति। तत्र, प्रायणीयोऽतिरात्रनाम प्रथममहः, चतुर्विंशनाम द्वितीयमहः, उक्थ्यनाम तृतीयम्, ज्योतिर्गौ चतुर्थमहः, आयुर्गौ पञ्चममहः, आयुर्ज्योतिरितिनामकं षष्ठमहः, एतान्येव षडहानि आभिप्लविकान्युच्यन्ते; तेष्वेव शेषाण्यहानि चतुर्थादीनि त्रीणि त्रिकद्रुकाणीति।

२ १ १ १ १ २ १ २ २
वा। श्रा३धायिश्रा३याः। रणन्ति। सा२३। हा३हा

१ २ ५ १ २ १ २
३। मासा२ुसा२३४दाः। श्राइन्द्र२ुसुते३। हा३हा

१२ २ १ १२ १२२
यि। हवामा२३हा३४३यि॥(२) त्वकद्रुकेषुचेतनम्*।

१ १ २ १ २ २ १२२ २ १
ट†कद्रुकोवा। पू३वायिता३नाम्। देवासः। या२३।

२ २ १ २ ५ १ २ २
हा३हा३। मामा२ला२३४ता। तामिद्वर्ध३। हा३

१२ २ १
हा। तुनोगा२३यिरा३४३ः। श्रो२३४५इ। डा(३)॥१‡॥[१]४

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य

प्रथमः ¶॥ खण्डः॥ १॥

---

*, † "वि"—इति ख० पु० पाठः।

‡ ऊ० गा० २प्र० १ख० १सा०।

¶ 'उक्तः प्रथमपर्य्यायः'—इति वि०।

अथ द्वितीयखण्डस्य*—

प्रथम-तृचे, प्रथमा ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अयन्त इन्द्र सोमो निपूतो अधि बर्हिषि ।
१ २ ३ १ उ ३ १ २
एहीमस्य द्रवा पिब ॥ १ † ॥

हे "इन्द्र !" "ते" तुभ्यं त्वदर्थम् "अयं सोमः" "बर्हिषि अधि" वेद्यामास्तीर्णे दर्भे "निपूतः" नितरां दशापवित्रेण शोधितः अभिषवादिसंस्कारैः संस्कृत इत्यर्थः । "ईम्" इदानीम् "अस्य" इमं सोमं प्रति "एहि" आगच्छ । आगत्य च यत्र रसात्मकः सोमो हूयते तं देशं "परिद्रव" शीघ्रं गच्छ, तदनन्तरं सोमं "पिब" ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १र २र ३ २
शाचिगो शाचिपूजनायꣳ रणाय ते सुतः ।
१ २ ३ १ २
आखण्डल प्र हूयसे ॥ २‡ ॥

"शाचिगो" [शाचयः शक्ता गावो यस्यासौ शाचिगुः ; यद्वा, शच् व्यक्तायां वाचि (भ्वा०,आ०), अस्मादौणादिक इञ् प्रत्ययः]

---

* 'इदानीं मध्यमोऽभिधीयते'—इति वि० ।

† ऋ० आ० २, १; २, ४ (१भा० ३६४पृ०)=ऋ० वे० ६, १, २४, १ ।

‡ ऋ० वे० ६, १, २४, २ ।

शाचयः व्यक्ताः प्रख्याता गावो रश्मयो वा यस्य तादृश ! *
हे "शाचिपूजन" [ पूज्यतेऽनेनेति पूजनम् ] स्तोत्रादि-प्रख्यात-
पूजन ! † "ते" तव "रणाय" रमणाय सुखजननाय "अयं"
सोमः "सुतः" अभिषुतः ; अतः कारणात् हे "आखण्डल"
शत्रूणामाखण्डयितः इन्द्र ! ‡ "प्रहूयसे" प्रकृष्टाभिः स्तुतिभि-
राहूयसे। इत आगत्य इमं सोमं पिबेत्यर्थः ॥ २ ॥

अथ तृतीया।

१ २          ३ १ २        ३ १ २
यस्ते शृङ्गवृषोणपात्प्रणपात्कुण्डपाय्यः।
२र       ३ १र   २र
न्यस्मिन्दध्र आमनः ॥ ३ ¶ ॥ ५ §

हे "शृङ्गवृषोणपात्" [ शृङ्गवृषनामा कश्चित् ऋषिः तस्य
चेन्द्रः स्वयमेव पुत्रतया जज्ञे—इत्याख्यायिका। नपादित्य-
पत्यनाम ] हे शृङ्गवृष-पुत्र ! [शृणन्ति हिंसन्तीति शृङ्गाणि-
रश्मयः, तैर्वर्षतीति शृङ्गवृड़ादित्यः, तस्य न पातयितः स्वकीये
ऽवस्थानेऽवस्थापयितः ! । "सुबामन्त्रिते ( २, १, २)"—इति
षष्ठ्यन्तस्य पराङ्गवद्भावेनामन्त्रितानुप्रवेशात् समुदायस्याष्टमिकं

---

* 'शचीति कर्म्मनाम, कर्म्मणि प्रयुक्ता गावः प्रदीयन्ते यस्य असौ शाचिगुः'—इति वि०।

† 'शाचिपूजनः—कर्म्मणि पूज्यते शाचिपूजनः'—इति वि०।

‡ 'आखण्डलः—इन्द्रस्य नामैतत्'—इति वि०।

¶ ऋ० वे० ६, १, २४, ३।

§ 'अत्र देवोदासौद्र्वसमनौ। देवोदासमतौत्रं, औद्र्वसद्मनं सत्रे एकाहे।
—इति वि०।

सर्वानुदात्तत्वम्। ईदृश!] हे इन्द्र! "ते" तव सम्बन्धि "प्रणपात्" प्रकर्षेण नपातयिता रक्षिता, "कुण्डपाय्यः" [कुण्डैः पीयते अस्मिन् सोम इति कुण्डपाय्यः क्रतुविशेषः। "क्रतौ कुण्डपाय्य-सञ्चाय्यौ (३, १, १३०)"—इति पिबतेरधिकरणे यत्-प्रत्ययो युगागमश्च निपात्यते—एतत्संज्ञो यः] क्रतुरस्ति; "अस्मिन्" कुण्डपाय्य-क्रतौ "मनः" स्वान्तं "आ नि दध्रे" अभितो वर्त्तमानाः कुण्डपायिनामान ऋषयः पुरा निदधिरे सम्यक् त्वद्देवत्यं क्रतुमनुष्ठितवन्त इत्यर्थः। [ दधातेर्लिटि "इरयोरे ( ६, ४, ७६)"—इति रे-भावः* ॥ ३ ॥ ५

४ ३ ४ ३ ५ १

॥ राचिद्दैवोदासम् † ॥ अयन्तइन्द्रसो ऽ४मः। ना२३

२५२ ४ ५ ४ ५ १ २ २ २ १ २

४यि। पूतोअधिबर्हिषी। निपूतोअधिबर्हा २ ३ यिषी।

२ १ २ १२ १२ ४

ऐह्योयिमा२३स्या। द्रवापा२३४पुयिबाई५६ ॥(१) शाचि

२ ३२ ४५२ ३ २ १ ५२ २ ४ ५

गोशाचिपू। जना३। आ२३४। यन्त्वरणायतेसुता:।

* अत्रैवं व्याचष्टे विवरणकार-माधवः—"यः" "ते" तव हे सोम! "नपात्" न पिबति तस्य इथा जन्म; "प्रणपात्" प्रणिपत्य श्रद्धया पातव्यः। "कुण्डपाय्यः" यत्र कुण्डाश्वमसाः कुण्डप्रतिरूपाः तैः पीयते कुण्डपाय्यः। अथवैतान्यैन्द्र-विशेषणानि। प्रणवान् एषः प्रधानभूतो गौः, तादृश इन्द्रः; तस्य यः प्रकर्षेण सोमपानं कल्पयति कुण्डाकारैश्चमसैरिति शेषः। नि अस्मिन् दध्रे, नि-शब्दो न-शब्दस्यार्थे द्रष्टव्यः; न अस्मिन् यजमाने दध्रे धारयति इन्द्रः आत्मीयं मनः अनुपस्थाय?"—इति।

† 'राचीत्ववद्दैवोदासम्'—इति ख० पु० पाठः।

२१ र ‍२१र २ र १ १ १र
अयꣳरणायतेन्द२३ता:। आखण्डा२३ला। प्रह्या२३४५
३४र ५ २१ १
सा६५६यि ॥(२) यस्तेशृङ्गवृष:। नपा३त्। प्रा२३४।
५र र ४५ १ र २१र २ १
णपात्कुण्डपायियाः। प्रणपात्कुण्डपाया२३या:। निय
१ १र २
स्मा२ ३ यिन्दा। धन्नामा२ ३ ४ ५ ना ६ ५ ६:। ई२
५
३ ४ हा (३) ॥ २ * ॥ [१]

२१ २ १र २ १ २
॥ और्ध्वसद्मनम्॥ अयन्तइन्द्रसोम:। उवाहायि।
१ रर १ रर
निपूतोअधिबर्हिष्युवा२३होयि। निपूतोअधिबर्हिष्यूवा२३
२र १ २ ३
होयि। आयिहीमस्या। द्रावापा२३४५यिबा६५६ ॥(१)
१र २र १र २र १ १ १ र र
शाचिगोशाचिपूजन। उवाहायि। अयꣳरणायतेसुत
१ २ १ २ ३
उवा२३होयि। (वार२)। आखण्डला। प्राह्या२३४५
१र २ र र १ २ १
सा६५६यि ॥(२) यस्तेशृङ्गवृषोणपात्। उवाहायि। प्रण
र र १ २ १
पात्कुण्डपाय्यउवा२३होयि। (वार२)। नायस्मिन्दा।

---

* ऊ० गा० १प्र० २ख० १सा०

१ २ २ १ १ १२ २ १२
ध्राआमा२३४५ना६५६ः। सुवृक्तिभिर्नमादनम्भरे२धुवा
१ऽ(३) ॥ २ * ॥ [२] ५

अथ द्वितीयतृचे, प्रथमा।

१२ २२ ३ १ २ ३ २ ३ १२ ३२
आतूनइन्द्रक्षुमन्तञ्चित्रङ्ग्राभंसङ्गृभाय।
३ २२ ३२
महाहस्तीदक्षिणेन ॥ १ † ॥

हे "इन्द्र!" त्वं "महाहस्तो" महाहस्तवान्, तदानीमेव "नः" अस्मदर्थं "क्षुमन्तं" शब्दवन्तं स्तुत्यमित्यर्थः। "चित्रं" चायनीयं "ग्राभं" ग्राहकं ग्रहणार्हं वा धनं "दक्षिणेन" हस्तेन "तु" क्षिप्रं "आ सङ्गृभाय" आभिमुख्येन सङ्गृहाण ॥ १ ॥

अथ द्वितीया।

३ १२ २२ ३ २ ३ १ २ ३ २ २
विद्माहित्वातुविकूर्मिन्तुविदेष्णन्तुवीमघम्।
३ १२ ३२
तुविमात्रमवोभिः ॥ २‡ ॥

---

* ऊ० गा० १प्र० २अ० ३सा०।

† ऊ० आ० २, २, ३, ३ ( १भा० ३०९ पृ० ) = ऋ० वे० ६, ५, ३७, १।

‡ ऋ० वे० ६, ५, ३७, २।

हे इन्द्र ! "त्वा" त्वां "विद्म हि" जानीमः खलु । कीदृशम् ?—इति, "तुविकूर्मिं" बहुकर्माणं, * "तुविदेष्णं" बहुप्रदेयं, † "तुविमघ" बहुधनं "तुविमात्र" बहुप्रमाणम्, "अवोभिः" रक्षणैर्युक्तम् ॥ २ ॥

अथ तृतीया ।

१ २र ३ १र २र ३ १ २
नहित्वाशूरदेवाममर्त्तासोदित्सन्तम् ।

१ २३ ३ १ २
भीमन्नगांवारयन्ते ॥ ३ ‡ ॥ ६ ¶

हे "शूर !" "दित्सन्तं" दातुमिच्छन्तं "त्वा" त्वां "देवाः" "न हि वारयन्ते" न निवारयन्ति खलु ; तथा "मर्त्तासः" मनुष्या अपि न वारयन्ते "भीमं न गां" भयजनकं दृप्तं वृषभं यद्वत् प्रवृत्तमिव, तं यथा वारयितुं न शक्नुवन्ति तद्वत् ॥ ३ ॥ ६

१र २ २ १ २ २
॥ आकूपारम् § ॥ आहुवइ । द्रत्सुमाऽन्ताम् । चि

---

* 'तुविकूर्मिं' तुविशब्दो बहुवाची, कूर्मिशब्दो मनुष्यवाची कर्मवाची वा इति वि० । "तुवि"—इति निघण्टौ बहुनामसु द्वितीयं पदम् (३, १) । कूर्मिशब्दस्तु मनुष्यनामसु कर्मनामसु वा पठितो न दृश्यते ।

† 'तुविदेष्णं'—देष्णं दानं बहुदानम्—इति वि० ।

‡ ऋ० वे० ६, ५, ३७, ३ ।

¶ 'अवाकूपारं साम । आकूपाराङ्गिरसी गोधा च आर्षम्'—इति वि० ।

§ 'रायाकूपारम्'—इति ख० पु० पाठ. ।

१ र १ २ १ र १
चङ्ग्राभꣳसङ्गृभा२या। चिचङ्ग्राभꣳसम्। गृ। औ३

२ ३ ५ २र १ र र १
होयि। भा२३४या। ऐहोयि। महाहस्तीदक्षा२३हो

१र १ ३र ५ ४ ५
यि। औहो। वाहो२३४वा। णा५यिनो६हायि॥(१)

२ १र र २ २ १र र १
विद्माहित्वातुवि। कूर्मीम्। तुविदेष्णन्तुवीमा२घाम्।

२ १ र २ २ ३ ५
तुविदेष्णन्तु। वा। औ३होयि। मा२३४घाम्। ऐ

१ र १ १र १ ३र
होयि। तुविमात्रमा२३होयि। औहो। वाहो२३

५ ४ ५ १ र र २
४वा। वो५भो६हायि॥(२) नहित्वाशूर। दा३यि

२ १ र र १ र २
वाः। नमर्त्तासोदित्सा२न्ताम्। नमर्त्तासः। दा। औ

२ ३ ५ २र १ र र २
३होयि। त्सा२३४न्ताम्। ऐहोयि। भीमन्नगांवारा२

१ २र १ ३र ५ ४
३होयि। औहो। वाहो२३४वा। या५न्तो६

५
हायि(३)॥ ४ *॥ [१] ६

---

* ऊ० गा० १प्र० २ख० ४सा०।

अथ तृतीयतृचे, प्रथमा ।

२ १ २          ३ १ २ ३ १ २          २ १ २
अभित्वावृषभासुतेसुतꣳसृजामिपीतये ।

३ १ २    ३ १ २
तृम्पाव्यश्नुहीमदम् ॥ १ * ॥

हे "वृषभ" हे इन्द्र ! "त्वा" त्वां "सुते" सोमेऽभिषुते सति "सुतम्" अभिषुतं सोमं "पीतये" पानाय "अभिसृजामि" । "तृम्प" तृप्य । "मदं" मदकरं सोमं "व्यश्नुहि" च ॥ १ ॥

अथ द्वितीया ।

१ २ ३१ २ ३ २ ३ २ ३ २ २ ३ १ २
मात्वामूराअविष्यवोमोपहस्वानआदभन् ।

१ २ ३ १ २
माकींब्रह्मद्विषंवनः ॥ २ † ॥

हे इन्द्र । "त्वा" त्वां "मूराः" मूर्खा मूढाः, मनुष्याणाम‡ "अविष्यवः पालनकामाः "मा दभन्" मा हिंसन्तु । "उपहस्वानः" उपहसनपराश्च "मा" भवन्तु । "ब्रह्मद्विषं" ब्राह्मणानां द्वेष्टारं "मा कीं वनः" मा भजेथाः ¶ ॥

"ब्रह्मद्विषं"-"ब्रह्मद्विषः"—इति पाठौ ॥ २ ॥

---

* ऋ० आ० २, २, २, ७ (१भा० ३३८ पृ०)=ऋ० वे० ६, ३, ४६, १ ।

† ऋ० वे० ६, ३, ४६, २ ।          ‡ आत्मपरिवारमावाणामिति भावः ।

¶ 'वनः—यद्यपि वनतिः स्तुति-कर्मा तथाप्यत्र सम्भजने द्रष्टव्यः ; मा यज्ञेन सम्भज्यताम्'—इति वि० ।

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २

इहत्वागोपरीणसम्महेमन्दन्तुराधसे।

१ २ ३ १२ २२

सरोगौरोयथापिब॥ ३ *॥ ७ †

हे इन्द्र! "त्वा" त्वाम् "इह" अस्मिन् यज्ञे "गोपरीणसं" गव्येन पयसा सम्मिश्रं सोमं ‡ "महे" महते "राधसे" धनाय ¶ "मन्दन्तु" मनुष्या मादयन्तु। त्वञ्च सोमं "यथा" "गौरः" मृगः "सरः" § पिबति, तथा "पिब" ‖॥

"परीणसं"-"परीणसा"—इति पाठौ॥ ३॥ ७

२ १ २२ २ १२ २ १ २

॥ आर्षभम्॥ अभित्वावृषभासुते। सुतꣳसृजामि। पीतायारयि। सुतꣳसृजामि। पीतारश्यायि। आ

* ऋ० वे० ६, ३, ४६, ४।  † 'अत आर्षभं साम'—इति वि०।

‡ 'गोपरीणसम्—गावः परि समन्तात् नीयन्ते दक्षिणा यस्य स गोपरीणस इन्द्रः'—इति वि०।

¶ राधसे—राधः अन्नं सोमलक्षणं तस्मिन् सन्निधानभूते सोमे—इति वि०।

§ 'सरः सरणं कृत्वा'—इति वि०। "सरः"—इति निघण्टौ उदकनामसु चतुश्चिंशत्तमं पदम् (१, १२)।

‖ 'गौरः यथापिब—तथाच ब्राह्मणे—"गौरमृगो ह स्म भूत्वा अरण्याद् धानं पिबति'—इति'—इति वि०।

२ १ २ ५ २ २ २ १ २ १ १ १ १
२३म्या३। वा२या२३४औहोवा। अुहीमदा२३४५म् ॥(१)
१२ २ २२ १२ २ १ २२ १ २ २ १
मात्वामूराअविष्यवः। मोपह्स्वोवा। नआदाभा२न्।
१२ २ १ १२ १२ २ १ २ १
मोपह्स्वानः। आदा२३भान्। मा२३कौ३म्। आ२
२ ५२ २ २ १ ३ १ १ १ १ २ १ २२ १२ २२
ह्मा२३४औहोवा। द्विषवना२३४५ः॥(२) इहत्वागोपरो
२ १ १ २ १ १२ २
णसम्। महेमन्दोवा। तुराधासा२यि। महेमंदन्तु।
१२ २ १ २ १ २ ५२ २
राधा२३सायि। सा२३रा३ः। गौ२रा२३४औहोवा।
२ २ १ ३ १ १ १ १
यथापिबा२३४५(३)॥ ५ *॥ [१] ७

अथ चतुर्थतृचे—प्रथमा।

३ १ २ १ २३ ३ २ ३ १ २ ३ १ २
इदंवसोसुतमन्धःपिबासुपूर्णमुदरम्।
१ २ ३ १ ३
अनाभयिन्नरिमाते ॥ १ † ॥

हे "वसो" वासयितरिन्द्र! "इदं" पुरोवर्त्तमानं "सुतम्" अभिषुतम् "अन्धः" अन्नं सोमलक्षणं "पिब"। यथा—"उदरं"

---

* ऊ० गा० १प्र० २ख० ५खा०।

† छ० आ० २, १, ३, १० (१आ० ३०४ पृ०)=ऋ० वें० ८, ७, १७, १।

"त्वदीयं" जठरं "सुपूर्णम्" अतिशयेन सम्पूर्णं भवति तथे-त्यर्थः। हे "अनाभयिन्" [आ समन्तात् बिभेति—इत्याभयी; बिभेतेरौणादिक इनिः; न आभयी अनाभयी तादृश!] हे इन्द्र! "ते" तुभ्यं त्वदर्थं "ररिम" उक्तलक्षणं सोमं दद्मः [रादाने (अदा०, प०) छान्दसो (३,२,१०५) लिट्॥१॥

अथ द्वितीया।

१ २ ३ २ ३ २ ३उ ३ १ २ २ ३ १ २

नृभिर्धौतःसुतोअश्नैरव्यावारैःपरिपूतः।

२ ३ ४ १ ३ २ ३ १ २ २

अश्वोननिक्तोनदीषु॥२ *॥

"नृभिः" अध्वरस्य नेतृभिः ऋत्विग्भिः "धौतः" तृणाद्य-पनयनेन शोधितः [यद्वा; धौतः धूतः आधूतः, अदाभ्यग्रहे† आधूननेन संस्कृतः, तदनन्तरम् "अश्नैः" अश्मभिर्ग्रावभिः करण-भूतैः "सुतः" अध्वर्युभिष्टुतः ततः "अव्यावारैः" अविमेषः

---

* ऋ० वे० ५, ७, १७, २।

† ग्रहः=गृहीतसोमं सोमपानपात्रम्। ते च प्रातःसवने उपांशुप्रभृतयः, माध्यन्दिने सवने मरुत्वतीयादयः, तृतीयसवने त्वादित्यादयः। किन्त्वेतदतिरिक्ताः षोडश्यादि-यागविशेषे नियुक्ताश्च सन्ति बहवः षोडशीत्यादयः। तत्सर्वातिरिक्त एकोऽदाभ्यनामकः; स च यस्मिन्नौदुम्बरे पात्रे अंशुगृहीतस्तस्मिन् सोमरसस्या भिषाभ्यासञ्चाकाय आनीय तस्मिंस्तिस्रः सोमलताः प्रक्षिप्याग्नये त्वेत्यादिभिर्मन्त्रैः क्रमेण गृह्यते विहितश्चैतत् कात्यायनेन "अदाभ्यं गृह्णात्यासिच्य भिषाभ्याः पात्रे तस्मिंस्तूष्णीं त्रीनंशूनुपधायाग्नये त्वा गायत्रच्छन्दमिति (य० वा० ८, ४७) प्रतिमन्त्र मुपयामः सर्वत्राभिषेयात् (१२, ५, १२-१५)"—इति।

तत्सम्बन्धिभिः वालैः "परिपूतः" शोधितः, दशापवित्रस्य नाभिपूततया ऊर्णास्तुकया हि सोमः परिपूयते ; तदुक्तम् भगवता आपस्तम्बेन—"शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति तां प्रकटे दशापवित्रस्य नाभिं कुरुते शुक्लञ्च लक्ष्याः पवित्र मोतं भवति"—इति *। "नदीषु" नदनासवत्सु † "अश्वोन" अश्वइव "निक्तः" निर्णिक्तः शोधितः ‡ ; यथा अप्सु स्नातो अश्वः अपगतमलः सन् दीप्तो भवति, एवं वसतीवर्याख्याभिरद्भिरभिषुतः सोमो दीप्तो भवतीत्यर्थः। ईदृशो यः सोमः "तन्तेयवम्"—इत्युत्तरया सम्बन्धः॥

"धौतः"-"धूतः"—इति पाठौ॥२॥

अथ तृतीया।

१ ३१२ ३२ ३ १ २ ३ १२ ३ १ २
तन्तेयवंयथागोभिःस्वादुमकर्मश्रीणन्तः।

१ २ ३ १ २ ३ १ २
इन्द्रत्वास्मिन्त्सधमादे॥ ३ ¶ ॥ ८ §

"तं" पूर्वोक्तगुणं सोमं हे इन्द्र! "ते" त्वदर्थं "यवं यथा" यवमयं सवनीय-पुरोडाशमिव "गोभिः" गवि भवैः क्षीरादिभिः

* सूत्रञ्चैतत् समस्तं यजुर्वेदसनहि-संहितायां सप्तमाध्यायचतुष्टये।

† 'नदीष—अधिकरणभूतासु'—इति वि०।

‡ 'निक्तः—स्नातः'—इति वि०।

¶ ऋ० वे० ५, ७, १७, ३। § 'यव मारंयास'—इति वि०।

अपघद्रव्यैः "श्रीणन्तः" मिश्रीकुर्वन्तः "स्वादु" रसवत्त्वेनास्वाद-नीयम् "अकर्म" अकार्ष्म * [करोतेर्लुङि "मन्त्रे घस (२, ४,८०)"—इति च्लेर्लुक्]। यस्मादेवं तस्मात् हे "इन्द्र!" "त्वा" त्वां तादृशं सोमं पातुम् "अस्मिन्" वर्त्तमाने "सधमादे" सहमादने यज्ञे आह्वयामीति शेषः॥ ३॥ ८

२ र २ र र‍ऽ १
॥गारम॥ इदंवसोसुतमन्धा३ए। पिबासुपू३र्णा

७ २र २ १ र र ७ २र २ १
मुदरौ। हो३वा। पिबासुपूर्णामुदरौ। हो३वा। आ

२ २ १ २र १ २ ४ ५ १ र
नाभा३यीन्। ररिमाता। औ३होवा॥(१) नृभिर्धौ

र २ र र रऽ १ ७ र १र २
तःसुतोअश्रा३यिरे। अव्यावारै३:पारिपूतौ। हो३वा।

१ र र र ७ र २र २ १ २ २ १र
अव्यावारैःपारिपूतौ। हो३वा। आश्वोना३नी। त्तो

२र १ २ ४ ५ २ र र र २ र
नदीषु। औ३होवा॥(२) तन्तेवयंयथागोभी३रे। स्वा

१ ७र २र २ १र ७र १र
दुमका३र्माश्रीणन्तौ। हो३वा। स्वादुमकर्माश्रीणन्तौ।

* 'एवं यथा गोभिः स्वादुम् अकर्म कृतवन्तः। गोभि रिति तृतीया-बहुवचनं चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम्। गोभ्यः एवं यथा, गोभ्यः स्वादुमन्याद्यामयति तद्वत् तथापि सोमम् अकर्म करवाम। श्रीणन्तः प्रीणयन्तः, अथवा ० ० ०।'—इति वि०।

१  १  २ १  १ २र १  १ ४
होइवा । आइन्द्रात्वाइसीन । सधमादा । औहो

५  ४
वा । होऽ५ई । डा ॥ ६ * ॥ [१] ८

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य-
द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे —

प्रथमतृचे, प्रथमा ।

३ १र  २र  ३ १ २
इदꣳह्यन्वोजसासुतꣳराधानाम्पते ।

२ ३ २  १ ३
पिबात्वाऽ३स्यगिर्वणः ॥ १ † ॥

हे "राधानां पते" धनानां स्वामिन् ! "गिर्वणः" गीभिः स्तुतिभिः वननीय ! हे इन्द्र ! "ओजसा" बलेनावहितः त्वम् "इदम् अनु" अनेनानुक्रमेण उद्देशानुक्रमेणेत्यर्थः ; "सुतम्" अभिषुतम् "अस्य" इमं सोमं "नु" क्षिप्रं "पिबहि" ॥ १ ॥

---

* ऊ० गा० १प्र० २अ० ६सा० ।

† छ० आ० २, २, ३, १ ( १भा० ३७५पृ० )=ऋ० वे० ३, ३, १६. ५ ।

अथ द्वितीया।

१ २ १ ३ ३ १र २र ३ १र २र ३क २र
यस्तेअनुस्वधामसत्सुतेनियच्छतन्वम्।

१ २
सत्वाममत्तुसोम्य* ॥ २ † ॥

हे इन्द्र! "ते" त्वदर्थं "यः" सोमः "स्वधाम्" अन्नम् "अनु" लक्ष्य ग्रावभिः अभिषुतः "असत्" भवेत् [अस्तेर्लेटाऽडागमः। यद्वृत्तयोगान्न निघातः (८,१,६६), आगमस्यानुदात्तत्वे धातुस्वरः (६,१,१६२)]। "सुते" तस्मिन् सोमे "तन्वं" ‡ स्वकीयं शरीरं "नियच्छ" प्रेरय "सः" सोमः हे "सोम्य" सोमार्ह ¶! "त्वा" त्वां "ममत्तु" मादयतु ॥ २ ॥

अथ तृतीया।

१ २ ३ २उ ३ १ २ ३ १ २
प्रतेअश्नोतुकुक्ष्योःप्रेन्द्रब्रह्मणाशिरः।

२ ३ १ २ ३ २
प्रबाहूशूरराधसा ॥ ३ § ॥ ८ ‖ ॥

---

* "सोम्यम्"—इति ऋ-पाठः। † ऋ० वे० ३, ३, १६, ६।

‡ "छन्दस्युभयथा (६, ४, ८६)"—इति सूत्रस्थेन "तन्वादीनां छन्दसि बहुलम्" —इति वार्त्तिकवचनेनोवङोवैकल्पिकत्वं बोध्यम्।

¶ "सोम्य—सोमानां स्वामिन् पते!"—इति वि०। "सोममर्हति यः (४, ४, १३७)" छान्दसो योऽत्र सायणमते सङ्गच्छते।

§ ऋ० वे० ३, ३. १६, ७।

‖ 'अत्र यतश्रुत्रियम साम'—इति वि०।

हे "इन्द्र !" "सः" सोमः "ते" तव "कुक्ष्योः" कुक्षि रूभयोः पार्श्वयोः "प्राश्नोतु" प्रकर्षेण व्याप्नोतु [ अशू व्याप्तौ वित्यस्य ( स्वा०,आ० ) लोटि व्यत्ययेन परस्मैपदम् ( ३,१,८५ ) निघातः ( ८,१,७० ) ] तथा "ब्रह्मणा" स्तोत्रेण सहितः * स सोमः "शिरः" शरीरम् [ अवयविना अवयवो लक्ष्यते ] लच्छरीरं प्राप्नोतु। हे "शूर" विक्रान्तेन्द्र ! "राधसा" धनेन निमित्तेन तव "बाहू" अपि प्राप्नोतु॥

"राधसा"-"राधसः"—इति पाठौ॥ ३ ॥९

॥ घृतश्चुन्निधनम्॥ इद$^{२}$ ह्यन्$^{१र}$ ३ओजसा। सुत$^{१}$ राधा$^{२}$। नाम्पा$^{१}$तौ$^{१र}$। होवा३हायि$^{र}$। पिबा$^{२}$तुव$^{१}$। स्वगा$^{२}$ यि$^{१}$र्वाणो$^{२र}$। होवा$^{र}$३हायि$^{२}$। पिबा$^{१}$तुवौ$^{२र}$। होवा$^{र}$३हा$^{२}$। स्वगायिः$^{१}$। वा$^{२}$ना$^{५र}$२३४$^{र}$औहोवा॥(१) यस्ते$^{१र}$ अनुस्वा$^{२र}$३धा मसात्। सुता$^{१}$यिनिय$^{२}$। च्छतानु$^{१}$वमौ$^{२र}$। होवा$^{र}$३हायि$^{२}$।

---

* 'ब्रह्मणा यज्ञेन, शिरः; अथवा ब्रह्मणा त्रैविद्यलक्षणेन शिरः। ०००। बाहू०००। आप्नोतु०००। एतदुक्तं भवति समन्तात् मदीयेन यज्ञेन'—इति वि०।

१ १ १ १२ २ २ १ १२
सत्वामम। तुसोमायौ। होवा३हायि। सत्वाममौ।

२ १ १२ ३ ५२ २ १ २
होवा३हा। तुसो। मा२या२३४औहोवा॥(२) प्रते अ

२ १ १ १ १ १२ २
ओह्र३कुशियोः। प्रायिन्द्रब्र। ह्मणाश्रायिरौ। होवा

२ १ २ १ १२ २ १
३हायि। प्रवाह्रश्रु। रराधामौ। होवा३हायि। प्र

१ १२ २ १ १२ ३ ५२ २
बाह्रश्रौ। होवा३हा। ररा। धा२सा२३४औहोवा।

२ १ ३ १ १ १ १
घृतश्चु२ता२३४५ः(३)॥ ७ *॥ [१] ६

अथ द्वितीय-तृचे, प्रथमा।

२३ ३ १ २ ३ १ २ ३ १र २र
आत्वेतानिषीदतेन्द्रमभिप्रगायत।

१ २ ३ १ २
सखायस्तोमवाहसः॥ १ †॥

"तु"[-शब्दः क्षिप्रार्थो निपातः, द्वाभ्यां माङ्भ्याम् एतमिति शब्दोऽभ्यसनीयः]। हे "सखायः" ऋत्विजः! क्षिप्रम् अस्मिन्

---

* ऊ० गा० १प्र० २ख० ७गा०।

† छ० आ० २, २, १, १० (१भा० २७१ पृ०)=ऋ० वे० १, १, १६, १।

कर्मणि आगच्छत आगच्छत [ आदरार्थोऽभ्यासः ]। आगत्य च "निषीदत" उपविशत। उपविश्य च "इन्द्रम्" "अभिप्रगायत" सर्वतः प्रकर्षेण स्तुत। कीदृशाः सखायः ? "स्तोमवाहसः" त्रिवृत्पञ्चदशादिस्तोमानस्मिन् कर्मणि वहन्ति प्रापयन्तीति ॥ ["अर्त्ति-स्तु-सु-हु-सृ-धृ-क्षि-क्षु-भा-या-वा-पदि-यक्षि-नीभ्यो मन् (उ०,१,१३७)"—इति स्तौतेर्मन्-प्रत्ययान्तः स्तोमशब्दो नित्वादाद्युदात्तः (६,१,१९७)। स्तोमं वहन्तीति स्तोमवाहसः "वहि-हा-धाञ्-भ्यश्छन्दसि"—इत्यसुन् प्रत्ययः, तत्र णिदित्यनुवृत्तेः "अत उपधायाः (७,२,११६)"-इत्युपधाया वृद्धिः; कृदुत्तरपदप्रकृतिस्वरत्वे (६, २, १३९) प्राप्ते "गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वञ्च ( उ०, ४, २२६ )"—इत्यौणादिकसूत्रात् समासस्याद्युदात्तः ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १र २र ३ १ २
पुरूतमम्पुरूणामीशानं वार्य्याणाम्।

२ ३ १ ३ १ २ ३ २
इन्द्रꣳसोमेसचासुते ॥ २ * ॥

सखायोऽभिप्रगायतेति पदद्वयमत्रानुवर्त्तते। हे "सखायः" ऋत्विजः! "सचा" यूयं सर्वे सह यद्वा सचा परस्परसमवायेन

* ऋ० वे० १, १, १८, २।

"सुते" अभिषुते सोमे प्रवृत्ते सति "इन्द्रम्" अभिप्रगायत। कीदृशमिन्द्रम्? "पुरूतमं" पुरून् बहून् शत्रून् तामयति ग्लापयतीति पुरूतमः [तमु ग्लानौ (दि०,प०)—इति धातोर्ण्यन्तात् पचाद्यचि चित्वादन्तोदात्तेऽपि (६, १, १६३) कृदुत्तरपदप्रकृतिस्वरं (६, २, १३९) बाधित्वा "परादिश्छन्दसि बहुलम्"* (६, २, १९९)"—इत्युत्तरपदाद्युदात्तत्वम्], "पुरूणां" बहूनां "वार्याणां" वरणीयानां धनानाम्† "ईशानं" स्वामिनम्॥ २॥

अथ तृतीया।

१ २ ३ २ ३१ २ ३ २ ३ १र २र
सघानोयोगआभुवत्सरायेसपुरन्ध्या।
२ ३ १ २ ३ १र २र
गमद्वाजेभिरासनः॥ ३‡॥ १०¶

घ-शब्दोऽवधारणार्थो निपातः,§ सर्वैस्तच्छब्दैः सम्बध्यते। "स घ" स एवेन्द्रः पूर्वमन्त्रोक्तगुणविशिष्टः "नः" अस्माकं‖ "योगे" पूर्वमप्राप्तपुरुषार्थस्य सम्बन्धे**"आ भुवत्" आभिमुख्येन

---

* अनेन सूत्रेण तु सक्थ-शब्दस्यैवाद्युदात्तो विकल्प्यते, परमत्र पठितवार्त्तिकश्लोकेनैवान्यत्रापि सर्वत्र दृष्टानुविधयः कल्प्यन्ते। तथाच—"परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते। पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलन्ततः"—इति।

† 'वार्याणाम् उदकानाम्'—इति वि०।

‡ ऋ० वे० १, १, १९, ३।

¶ 'अत्र देवातिथं साम'—इति वि०।

§ 'घ—इति पदपूरणः'—इति वि०।

‖ 'नः—अस्मभ्यम्'—इति वि०।

** 'योगे—यत्र देवता युज्यन्ते असौ योगः यज्ञः'—इति वि०।

भवतु पुरुषार्थं साधयत्वित्यर्थः [ भवते राशीर्लिङि परतो "लिङ्याशिष्यङ् ( ३, १, ८६ )"—इत्यङ् प्रत्ययः, तस्य ङित्वेन गुणाभावात् उवङादेशः ], स एव "राये" धनार्थम् "आभुवत्" आभवतु ; स एव "पुरन्ध्या" योषिता * भुवत् [ यद्वा, बहुविधायां बुद्धावाभुवत् "पुरन्धिर्बहुधीः"—इति यास्कः ( ६, १३ ) ] स एव "वाजेभिः" देवैः अन्नैः सह "नः" अस्मान् † "आगमत्" आगच्छतु [ गमेर्लेट् तिप्, "इतश्चलोपः परस्मैपदेषु ( ३, ४, ९७ )"—इति इकार-लोपः, "बहुलं छन्दसि ( २, ४, ७३ )"—इति शपो लुक्, "लेटोऽडाटौ ( ३, ४, ९४ )" —इत्यडागमः, आगमाश्चानुदात्ताः इति तस्यानुदात्तत्वे धातुस्वरएव ( ६, १, १६२ ) शिष्यते ॥ ३ ॥ १०

३र २ र र ५र ५

॥ दैवातिथम् ॥ आ३४ । एतानि । षीदा६ता ।

१ १ २ र १ २र १र २

इन्द्रमभायि । प्रगायता । साखायस्तोम । वा । औ

१ १ २ १ २ १ १र १र

३हो । वआरहार३४साः । हयायि । साखायःस्तोम ।

२ २ १ १ ५

वा । औ३हो । ऊम्मा२३ । हा३४५सो६हायि ॥(१)

---

* 'पुरन्ध्या—रथ्या'—इति वि०। "पुरन्धिर्बहुधीस्तत्कः पुरन्धिर्भगः पुरस्तात्तस्यान्वादेश इत्येकमिन्द्र इत्यपरं स बहुकर्मतमः पुरां च दारयितृतमो वरुण इत्यपरम्"—इति निरु० नै० ६, १३।

† 'नः—अस्मान्'—इति वि० ।

२ १ ५ ५ १२ १ १ २ १२
पुरू३४। तम्पु। रूईणाम्। ईशानंवा। रियाणा

२ १२ १२ १ २ २ १ ३
म्। इन्द्र९सोमेस। चा। औ३हो। ववा२ह२

५ २ १ २ १२ १२ १ २ १
३ ४ताथि। हयायि। इन्द्र९सोमेस। चा। औ३हो।

१ २ ५ ३ १ २ २ २
ऊम्मा२३। ह३४५तोईहायि॥(२) सखा३४। नोयोगे।

५२ ५ २ २ १२ २ १ २ १२ ५२ १
आभूईवात्। सरायेसाः। पुरन्धिया। गमद्वाजेभिः।

२ २ १ ३ ५ २ १
आ। औ३हो। ववा२सा२३४नाः। हयायि। गम

१२२२ १ २ १ २
द्वाजेभिः। आ। औ३हो। ऊम्मा२३। सा३४५

५
नोईहायि(३)॥ ८ *॥ [१] १०

अथ तृतीयतृचे, प्रथमा।

१ २ ३ १ २ ३ १ २
योगेयोगेतवस्तरंवाजेवाजेहवामहे।

१ २ ३ १ २ ३ १ २
सखायइन्द्रमूतये॥ १ †॥

---

* ऊ० गा० १प्र० १अ० ८सा०।

† ऋ० आ० १, २, २, ९ (१भा० ३७१ पृ०) = य० वे० ११, १४ = ऋ० वे० १, ३, २९, १।

"योगेयोगे" प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे [ युजिर् योगे ( रु०, उ० ) "हलश्च ( ३, ४, १२१ )"—इति घञ्, "चजोः कुघिण्यतोः (७, ३, ५२)"—इति कुत्वम्, घञोञित्वादाद्युदात्तत्वम् ( ६, २, १९१ ), "नित्यवीप्सयोः ( ८, १, ४ )"—इति वीप्सायां द्विर्भावे सति, आम्रेडितानुदात्तम् (८, १,३) ] "वाजे वाजे" कर्मविघातिनि तस्मिन् सङ्ग्रामे "तवस्तरं" अतिशयेन बलिनम् "इन्द्रम्" "ऊतये" रक्षार्थं "सखायः" सखिवत् प्रियाः वयं "हवामहे" आह्वयामः* ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १र　२र　३ १ २　३ १र २र
अनुप्रत्नस्यौकसोहुवेतुविप्रतिन्नरम् ।

२ ३ १ २ ३ २ ३ २
यन्तेपूर्वम्पिताहुवे ॥ २ † ॥

---

* कात्यायनेन त्वयं मन्त्रोऽश्वचयनेऽजाभिमन्त्रणे नियुक्तः (१९, २,१०) महीधरस्त्वेवं व्याचख्यौ—"अजदेवत्या गायत्री शुनःशेपदृष्टा, अजं मन्त्रयते। "सखायः" परस्परसख्यं प्राप्ता ऋत्विग्यजमाना वयम् "इन्द्रम्" इन्द्रियवन्तं वीर्यवन्तमिन्द्रियप्रदं वा अजम् "ऊतये" अवनाय रक्षणाय "हवामहे" आह्वयामः ह्वः सम्प्रसारणम् ( ६, १, ३४ )। क्व सति ? "वाजे-वाजे" तत्तदन्ने मनुष्याणां देवानाञ्च दातव्ये सति तत्तदन्नप्राप्तिनिमित्तं वा। किम्भूतमजम् ? "योगे-योगे तवस्तरं" युज्यते अनुष्ठीयते इति योगः कर्म, तस्मिन् तत्तत्कर्मणि तवस्तरं बलवत्तरमत्यन्तबलवन्तम्। तव इति बलनाम ( निघ० २, ९, ४, )। तवो बलमस्यास्तीति तवस्वी। अस्मायेत्यादिना विन् ( ५, २, १२१ )। अयमस्य तवस्वी तवस्वितरम् अतिशये तरप् विन्मतोर्लुगिति ( ५, ३, ६५ ) तरपि विनो लुक्॥"—इति ॥

† ऋ० वे० १, १, २९, ३ ।

"प्रत्नस्य" पुरातनस्य "ओकसः" स्थानस्य स्वर्गरूपस्य* सकाशात् "तुविप्रतिं" बहून् यजमानान् प्रतिगन्तारम्† [अत्र प्रतिशब्दो भीमसेनो भीमइतिवत् प्रतिगन्तृ-शब्दं लक्षयित्वा तद्द्वारा तदर्थं लक्षयति, अतः प्रति प्रतिनिधि-प्रतिदानयोरिति-वत् सत्ववचनत्वेनानिपातत्वादनव्ययत्वे "पूरणगुणेत्यादिना (२, २, ११) न षष्ठी-समास-निषेधः]। "नर" पुरुष-मिन्द्रम् "अनुहुवे" अनुक्रमेण कर्मस्वाह्वयामि [ह्वेञो लिटि "बहुलं छन्दसि (६, १, ३४)"—इति पूर्ववत्। सम्प्रसारण-पर-पूर्वत्वे द्विर्वचन-प्रकरणे "छन्दसि वा (६, १, १ वा०)"—इति वक्तव्यमिति द्विर्वचनाभावः। "यद्वृत्तयोगादनिघातः (८, १, ६६)]। "यं" "ते" त्वामिन्द्रं "पिता" अस्मदीयो जनकः "पूर्वं" पुरा स्वकीयानुष्ठानकाले "हुवे" आहूतवान्, तमाह्वयामीति पूर्वत्रान्वयः‡ ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २

आघागमद्यदिश्रवत्सहस्रिणीभिरूतिभिः।

१ २ ३ १ २ ३ १ २

वाजेभिरुपनोहवम् ॥ ३ ¶ ॥ ११ §

---

* 'ओकसः—गृहस्य, उदकस्य, बलस्थानस्य वा'—इति वि०।

† 'तुविप्रतिं—तुविपुर्विति बहुनाम, बहुप्रतिम्, प्रतिशब्देनात्र प्रभवो लक्ष्यन्ते, बहुप्रभुमिन्द्रम्'—इति वि०।

‡ 'यं ते पूर्वं पिता हुवे—अस्मदाप्तमयादमहं मदीयान्तरात्मन्! तमिन्द्रं हुवे, यं ते तव पूर्वतने काले त्वदीयः पिता आहूयते।'—इति वि०।

¶ ऋ० वे० १, १, २९, ४। § 'अत्र सौमेधं साम'—इति वि०।

“यदि अवत्” यद्ययमिन्द्रो “नः” अस्मदीयं “हवम्” आह्वानं शृणुयात्, तदानीं स्वयमेव “सहस्रिणीभिः ऊतिभिः” बहुभिः पालनैः “वाजेभिः” अन्नैश्च “उप” समीपे “आ घ” अवश्यम्* “आगमत्” आगच्छेत् ॥ ३ ॥ ११

१र र र र र र १ ० १ र
॥ सौमेधम् ॥ योगेयोगेतवाहाउस्तारम्। वाजे

२र र १ २ ५
वाजे। हवा२माहायि। हुवायि। औ३हो२३४वा।

१ १र १ १ २
साखायइ। इम्२तायायि। हुवायि। औ३हो२३४

५ २ र २ १ ऽ
वा। सखायआ। हुवा२यि। औ३हो२३४५वा६५६।

२ १ १ १ १ १ २ र र १ २ १ र२
इम्३तये२३४५ ॥(१) अनुप्रत्नस्यौहाउकासाः। हुवेतु

१ २ ५
वि। प्रता२यिन्नाराम्। हुवायि। औ३हो२३४वा।

१ २र १र १ १ १ २
यान्तेपूर्वम्। पिता२हुवायि। हुवायि। औ३हो२३४

५ २ र २र १ ऽ
वा। यन्तेपूर्वाम्। हुवा२यि। औ३हो२३४५वा६५६।

२ १ १ १ १ १ २र र र र १ २
पिता३हुवे२३४५ ॥(२) आघागमद्यदीहाउआवान्।

---

* ‘आ घ—इति पदपूरणौ’—इति वि०। मन्त्रे “घा”—इति दीर्घपाठः। तत्र “निपातस्य च (६, ३, १३६)”—इति दीर्घः।

साहस्त्रिणी। भिह्र२नायिभायिः। हुवायि। औ३हो

२३४वा। वाजेभिह्र। पनो२हावाम्। हुवायि। औ

३हो२३४वा। वाजेभिह्र। हुवा२यि। औ३हो२३४5

वा६५६। पनो३हवा२३४५म् (३)॥८*॥[१]११

अथ चतुर्थर्त्चे, प्रथमा।

इन्द्रसुतेषुसोमेषुक्रतुम्पुनीषउक्थ्यम्।

विदेवृधस्यदक्षस्यमहाꣳहिषः॥१†॥

"सोमेषु" "सुतेषु" अभिषुतेषु सत्सु हे "इन्द्र!" त्वं तान् पीत्वा "क्रतुं" कर्मणां कर्त्तारम् "उक्थ्यम्" स्तोतारञ्च "पुनीषे" शोधयसि। यद्वा सोमेष्वभिषुतेषु उक्थ्याख्यं "क्रतुं" यागं तैः सोमैः पुनीषे यजमानैः पूतं कारयसि। किमर्थम्? "वृधस्य" वर्द्धकस्य "दक्षस्य" बलस्य "विदे" लाभाय "सः" तादृशस्त्वं "महान्" "हि" खलु; अतएवं कर्त्तुं शक्नोषीत्यर्थः॥

"इन्द्रसुतेषु"-"इन्द्रःसुतेषु"—इति, "पुनीषे"-"पुनीते"—इति, "दक्षस्यमहाꣳहिषः"—"दक्षसोमहान्हिषः"—इति च पाठौ॥१॥

* ऊ० गा० १प्र० २अ० ८सा०।

† ऋ० सं० ४, २, ५, १ (१ भा० ७८२ पृ०) = ऋ० वे० ६, १, ७, १।

अथ द्वितीया।

१२३१ २　३ २ ३　१ २ ३ २

सप्रथमेव्योमनिदेवानाᳫसदनेवृधः ।

३　१ ३१२　३ १२३ २

सुपारःसुश्रवस्तमःसमप्सुजित॥ २* ॥

"सः" इन्द्रः "प्रथमे" प्रथिते विस्तीर्णे मुख्ये वा † "व्योमनि" विशेषेण रक्षके च "देवानां" "सदने" सीदन्त्यस्मिन्निति सदनं स्थानं स्वर्गाख्यं तत्र ‡ स्थितः सन् "वृधः" यजमानानां वर्द्धयिता च भवति । तथा "सुपारः" सुष्ठु पारयिता प्रारब्धस्य सम्यक् परिसमापयिता ¶ "सुश्रवस्तमः" अतिशयेन शोभनं श्रवोऽन्नं यशोवा यस्य स तथोक्तः, "समप्सुजित्" सम्यक् अप्सूदकेषु प्राप्येषु सत्सु यत् तद्विघातनो वृत्रादेर्जेता ; यद्वा, आप इत्यन्तरिक्षनाम (निघ० १, ३, ८) अन्तरिक्षे वर्त्तमानानामसुराणां जेता § तमु हुवे इत्युत्तरत्र सम्बन्धः ॥ २ ॥

---

* ऋ० वे० ६, १, ७, २ ।

† 'प्रथमे श्रेष्ठे'—इति वि० ।

‡ 'देवानां सदने स्थाने यज्ञे'—इति वि० ।

¶ 'सुखेन पार्यते यष्टुं यः सः सुपारः'—इति वि० ।

§ 'समप्सुजित्—सङ्ग्रामेषु जेता'—इति वि० । "समत्सु"—इति सङ्ग्रामनामसु निघण्टौ दृश्यते (२, १७, २१) तदेव पाठभेदात् समप्सु—इत्यवाक विवरणकाराशयः ।

अथ तृतीया ।

१ २ ३ १ २ १ २ ३ १ २ ३ १ २

तमुह्वे वाजसातय इन्द्रं भराय शुष्मिणम् ।

१ २ ३ १ २र ३ १ २ ३ २

भवा नः सुम्ने अन्तमः सखा वृधे ॥ ३* ॥ १२ †

"तमु" पूर्वोक्तगुणमेव "शुष्मिणं" बलवन्तम् "इन्द्रं" "वाजसातये" बलाना मन्नानां वा साति र्लाभो यस्मिन् तादृशाय "भराय" सङ्ग्रामाय ; यद्वा, [ ध्रियन्ते तस्मिन् हवींषीति भरो यज्ञः, प्रायेण सङ्ग्रामनामानि यज्ञनामत्वेन च दृश्यन्ते ] भराय यज्ञार्थं "हुवे" आह्वयामि। हे इन्द्र ! त्वं "सुम्ने" सुखे धने वा लिप्सिते सति "नः" अस्माकम् "अन्तमः" अन्तिकतमः सन्निकृष्टतमो भव [ तमेतादेश्वेति अन्तिकशब्दस्यतादि लोपः ] ; "वृधे" वर्द्धनार्थञ्च "सखा" समानख्यानो मित्रभूतो भव ॥

"तमुहुवे"—"तमुह्वे"—इति पाठौ ॥ ३ ॥ १२

१ र र १२ १ १ २

॥ कौत्सम् ॥ इन्द्रसुतेषुसोमेषू । क्रत्वा३म्पुनायि । ष

१ २ र १ १ १ र १

उक्थियाम् । विदेवार्द्धा२ । स्यदक्षस्या । महाँ३हा

१ र २ र र १

यिषा२ः । महाँ३२३हिषा३४३ः ॥(१) सपृथमेवियोमा

* ऋ० वे० ६, १, ७, ३ ।

† 'अत्र कौत्सं साम'—इति वि० ।

२ १र १र २र१ १र १
नौ। देवा२नाꣳसा। दनवृधाः। सुपाराःसु२। अ

१ २ १ १ २
वस्तमाः। समप्सूजो२त्। समा२३प्सुजो३४३त्॥(२)

२ रर र१२ १ २ १
तमुङ्वेवाजसातायायि। इन्द्रा२भरा। यप्तुश्मिणाम्।

२र१ र १ २र१ १
भवानाःसु२। म्नेअन्तमाः। सखावाद्धा२यि। स

र१ १ २ १
खावाद्धा२यि। सखा२३वृधा३४३यि। ओ२३४५ई।

डा(३)॥१० *॥ [१]

१ २१र२ १र २र१ र
॥ उद्वꣳशीयम्॥ इन्द्रसुतेषुसोमेषा। क्रतुम्पुनीषउक्था

१ १ २ १२ २
२३याम्। विदा२होश्यि। वा२३द्धा। स्यदा१चा३

२ र २ ५ १ ऽ २ २
स्या। महाꣳदा२३४यिषाः। माहा३उवा३। उप्।

१ १ १ ११रर २१ रर र
हाऽ२यिषो३५हायि॥(१) सपृथमेव्योमनिया। देवानाꣳ

र २ १ २ १२ २
सदने वा२३द्धाः। सुपा२चो१। रा२३ःसु। अवा१स्ता

२ ३ ५ १ ऽ २ २ १
३माः। समप्सु२३४जौत्। सामा३उवा३। उप्। एह

क० गा० १प्र० २ख० १०सा०।

२ १ २र१र २र१११ र
ऽ२जो३५हायि ॥(२) तमुह्वेवाजसातयआ। इन्द्रभारा

२ १ २ १र१
यप्रुआर३यिणाम्। भवा२हो१ ना२३:ह्व। सेआ

२ २ र ३ ५ १ ऽ २
१ंन्ता३मा:। सखावा२३४ह्वायि। साखा३उवा३।

२ १ २
उप्। वाऽ२ह्वौ३५हायि(३) ॥ २ * ॥ [२] १२

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य

तृतीय-खण्डः ॥ ३ ॥

---

अथ चतुर्थे खण्डे, प्रगाथरूपे—

प्रथमसूक्ते, प्रथमा।

३१ २ ३१ २र३१ २र३१२
एनावोअग्निन्नमसोर्जोनपातमाहुवे।

३१ २र ३१ २३१ २र ३२३१२
प्रियञ्चेतिष्ठमरतिँस्वध्वरंविश्वस्यदूतममृतम् ॥ १ † ॥

---

* ऊ० गा० १९प्र० १ख० २सा०।

† छ० आ० १, १, ४, १ (१ भा० १९७ पृ०) = ऋ० वे० ५, २, २१, १

'इदानीं मन्त्रिवर्तत्व्य:, सच ह-देवत्य: अग्निरग्निनाविति'—इति वि०।

"ऊर्जः" बलस्य "नपातं" [नपादित्यपत्यनाम (निघ०२, २,१३)] पुत्रं "प्रियम्" अस्माकम् "चेतिष्ठम्" अतिशयेन ज्ञातारं प्रज्ञापकं वा "अरतिं" गन्तारं स्वामिनं वा "स्वध्वरं" शोभनयज्ञं "विश्वस्य" सर्वस्य यजमानस्य "दूतम्" "अमृतं" नित्यम् "अग्निम्" "एना" एतेन "नमसा" स्तोत्रेण हे ऋत्विग्यजमानाः! "वः" युष्मदर्थम् "आहुवे" आह्वयामि॥१॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ ३क २र
स योजते अरुषा विश्वभोजसा स दुद्रवत् स्वाहुतः।
३ १ २ ३ २ ३ १ ३ १ २ ३ २उ ३ १ २
सुब्रह्मा यज्ञः सुशमी वसूनां देवं राधो जनानाम्॥२*॥१३†

"सः" अग्निः "अरुषा" आरोचमानौ "विश्वभोजसा" विश्वस्य पालयितारौ वह्नी "योजते" स्वकीये रथे "युनक्तु" [यद्वा, "विश्वभोजसा" विश्वस्य रक्षकेण "अरुषा" आरोचमानेन तेजसा "योजते" अयुज्यत]। तदनन्तरं यः अग्निः "स्वाहुतः" स्तोतृभिः सुष्ठु आहुतः सन् "दुद्रवत्" आनेतुं देवान् प्रति भृशं द्रवतु गच्छतु। कीदृशः? सुब्रह्मा शोभनस्तुतिकः शोभनान्नो वा "यज्ञः" यष्टव्यः "सुशमी" शोभनकर्मा च भवति; ततः "वसूनां" वासकानां "जनानां" यजमानानां सम्बन्धि "राधः" हविर्लक्षणं धनं "देव" द्योतमानमग्निम्प्रति गच्छत्विति शेषः॥२॥ १३

---

* ऋ० वे० ५,२,२१,२। † 'अत्र वारवन्तीयम्'—इति वि०।

१२१२ २ २ १ १
॥ वारवन्तीयम् ॥ एनावोऽग्न । औहोहायि । आ

३ ५ २र २ २ २ १ ५ १
यिन्नामा२३४सा । ऊर्ज्जोनपातमाऊवो२३४हायि । प्रिय

र १ ३र ४र ५ १ ३ ५
ञ्चेतिष्ठमरतिᳲसुवध्वा३४ । औहोवा । ऊहा२३४हायि ।

२ ३ ५ २ १ २ १ ० २ ३र ४र ५
उऊवा२३४राम् । विश्वस्य । दूतममा३४ । औहोवा ।

१ ३ ५ ३र २ ५र
ऊहा२३४हायि । औहो३१२३४ । ताम् । एहिया६

५ २ र र १ १ ३ ५
हा ॥(१) विश्वस्यदूऔहोहायि । तामामा२३४त्ताम् ।

२ ५ ५ १र र र २ ३र ४र ५
सयोजा२३४हा । तेअरुषाविश्वभोजा३४ । औहोवा ।

१ ३ ५ २ ३ ५ २ १ १ १ ० र २
ऊहा२३४हायि । उऊवा२३४सा । सदुद्र । वाश्रुवाऊ

३र ४र ५ १ ३ ५ ३र २ ५ऽ
३४ । औहोवा । ऊहा२३४हायि । औहो३१२३४ । ताः ।

र ५ २ र र १ २ ३ ५
एहिया६हा ॥(२) समुद्रवाऔहोहायि । स्ववाऊ२३४ताः ।

२ १ ५ १ र २ ३र ४र ५
सुब्राह्मा२३४हायि । यज्ञःसुशमीवसू३४ । औहोवा ।

१ ३ ५ २ ३ ५ २र १ २र १
ऊहा२३४हायि । उऊवा२३४नाम् । देवᳲरा । धोज

२ ३र ४र ५ १ ३ ५ ३र २
ना३४। औहोवा। इहा२३४हायि। औहो३१२३४।
५ र ५
नाम्। एहियाइहा(३)॥ ८ * ॥ [१]

४ र र ४ २ ४
॥ महावामदेव्यम् † ॥ आऽ५यिना। वोआ३ना३यिन्न
५ १ र र र र १ २ १
मसा। ज। जोनपातमाऊवेप्रियञ्चेतिष्ठमरतिᳪसुवध्व।
र २ १ २ ३ र ०
राम्। औ२३होहायि। विश्वा२३स्यदू। तमौहो३।
१ १ २ ३ ४ २
ऊम्मा२। मा२र्त्तो३५हायि ॥(१) वा५यिस्व। स्यदू३ना
४ ५ १ र र र २र १
३मम्तताम्। सा:। योजनेऽमृषाविश्वभोज। सा।
२ र २ १ २ ३ र २ १
औ३होहायि। सदू२३द्रवात्। सुवौहो३। ऊम्मा२।
१ २ ३ ४ २ ४र ५
ऊ२तो३५हायि ॥(२) सा५दु। द्रवा३त्सू३वाऊताः।
१ र र २र १ र २
हू। ब्रह्मायम:सुभमीवस्। नाम्। औ२३होहायि।
१र र २ ३र २ १ १
देवा२३ᳪराधाः। जनौहो३। ऊम्मा२। ना२मो३५
२
हायि ॥ ११ ‡ ॥ [२]

* ऊ० गा० ११प्र० २ख० ८सा०।   † 'वामदेव्यम्—इति ख० पु० पाठः।

‡ ऊ० गा० ११प्र० २ख० ११सा०।

१ २ २ १ २२ १२
॥ अध्यम् ॥ एनावोआ२ग्निम्। नमसोवा। ऊर्ज्जो

२१ २ ३२ २ १ २ १ २२ १ २ १
नपा। तमाहुवायि। प्रियञ्चेतिष्ठमरतिᳬस्वध्वरं विश्व

२ २ १ २ १२ १
स्यदूतम्। आ२३। मृताउवा। अधिया२ ॥(१) वि

१ २ १२ २ १ १ २ २२ १
श्वस्यदू२तम्। अमृतोवा। सयोजते। अरुषावायि।

२ २ २ १ २ १ २ १२
अभोजसासन्दूद्रवत्। आ२३। ऊताउवा। अधिया

१ २ १ २ १ २२ १ २
२ ॥(१) सद्द्रवा२त्सु। आहुतोवा। सुब्रह्माया। यः

३ २ १ २ १२ २ १ २ २२ १ २
सुम्नमायि। वसूनान्देवᳬराधोज। ना२३। नाउवा।

१२
अधिया२ ॥ १४ * ॥ [३] १३

अथ द्वितीय-प्रगाथे—

प्रथमा।

१ २ ३ २ १ २ ३ १ ३ २
प्रत्युअदर्श्यायत्यू३ऽच्छन्तीदुहितादिवः।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अपोमहीवृणुतेचक्षुषातमोज्योतिष्कृणोतिसूनरी ॥ १ † ॥

* ऊ० गा० २१प्र० १ख० १४सा०।

† ऋ० चा० ४, १, २, १ (१भा० ६११ पृ०)=ऋ० वे० ५, ६, १, १।

"आयती" आगच्छती "उच्छन्ती" तमांसि विवासयन्ती वर्जयन्ती "दिवः" द्युलोकस्य सूर्य्यस्य वा "दुहिता" पुत्री, एवभूता उषाः "प्रति अदर्शि" सर्वैः प्रति दृश्यते; "उ"—इति पूरणः; सैषा "मही" महत् "तमः" नैशमन्धकारं "चक्षुषा" दर्शनेन "अप उ" [—इति निपातद्वय समुदायः अपेत्यस्यार्थे] "वृणुते" निवारयति। एवं कृत्वा "सुनरी" जनानां सुष्ठु नेत्री उषाः "ज्योतिः" प्रकाशं "कृणोति" करोति॥

"वृणुतेचक्षुषा"-"व्ययतिचक्षुषे"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ २ ३ १र २र ३ २
उदुस्रियाःसृजतेसूर्यःसचाउद्यन्नक्षत्रमर्च्चिवत्।

१ २र ३ २ ३ १ २ ३ २ ३ १ २
तवेदुषोव्युषिसूर्यस्यचसम्भक्तेनगमेमहि॥ २ *॥ १४ †

"सूर्यः" सर्वस्य प्रेरक आदित्यः "उस्रियाः" रश्मीन् "सचा" सह युगपदेव "उत्सृजते" उद्गमयति। तथा "उद्यत्" उद्गच्छत् प्रादुर्भवन् "नक्षत्रं" नभसि दृश्यमानं ग्रहनक्षत्रादिकम् "अर्च्चिवत्" दीप्तिमत् करोति; ["सौरेण तेजसा हि नक्तं चन्द्रप्रभृतीणी नक्षत्राणि भासन्ते", "सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वः"—इति हि निगमान्तरम्। एवञ्च सति हे "उषः"

* ऋ॰ वे॰ ५, ६, १, २। † त्रयोदशच्छन्दसाम्नामसामानि इत्यापितश्राभान्येव।

उषोदेवते ! "तव" "सूर्यस्य" च "व्युषि" विवासने प्रकाशने सति "भक्तेन" अन्नेन "सङ्गसीमहि" वयं गच्छेमहि। "इत्"-शब्दः पूरकः ॥ २ ॥ १४

२ र र १ १ ३
॥ वारवन्तीयम् ॥ प्रत्युवदाऔहोहायि। शौआया२३४
५ २ र र १ ५ १ र र
तायि। उच्छन्तीदुहितादायिवो२३४हायि। अपोमही
र र २ ३र ४र ५ १ ३ ५ २
वृणुतेचक्षुषाता३४। औहोवा। इहा२३४हायि। उक्ष
३ ५ २र १ १ १ ०र २ ३र ४र ५
वा२३४माः। ज्योतिष्कृ। णोतिसूना३४। औहोवा।
१ ३ ५ ३र २ ५ र
इहा२३४हायि। औहो३१२३४। रायि। एहियाइ
५ २र र र १ १ ३ ५
हा ॥(१) ज्योतिष्कृणोऔहोहायि। तायिसूना२३४रा
२ १ ५ १र र र २ ३र
यि। उदूस्रो२३४हा। याःसृजतेसूरियःसा३४। औ
४र ५ १ ३ ५ २ ३ ५ २ १ २
होवा। इहा२३४हायि। उक्षवा२३४चा। उद्यन्न।
१ ० २ ३र ४र ५ १ ३ ५ ३र २
क्षात्रमर्चा३४। औहोवा। इहा२३४हायि। औहो३
५र ५ २ र र १ २
१२३४। वात्। एहियाइहा ॥(२) उद्यन्नक्षाऔहोहा

यि। वामर्चा२३४यिवात्। तविदू२३४हायि। घोक्यि
षिस्रियस्या३४। औहोवा। दूहा२३४हायि। उक्ष
वा२३४चा। समभक्तो। नागमेमा३४। औहोवा। दू
हा२३४हायि। औहो३१२३४। हायि। एहियाइ
हा(३)॥८*॥[१]

॥वामदेव्यम्॥ प्रा॒५त्यु। अदा३र्शा३आयतायि। ऊ।
च्छन्तीदुहितादिवोअपोमहीवृणुतेचक्षुषात। मा। औ३
होहायि। ज्योता२३यिष्कृणों। तिसौहो३। ऊम्मा
२। ना॒२रो३५हायि॥(१) ज्यो॒५तिः। कृणो३ता३यि
सूनरायि। ऊत्। उस्रियाःसृजतेसूरियस्साचा। औ
३होहायि। उद्या२३न्नक्षा। त्रमौहो३। ऊम्मा२।
चा॒२यिवो३५हायि॥(२) ऊ॒५द्यन्। नक्षा३त्रा३मर्चिवात्।

* ऊ० गा० २१प्र० २ख० ९सा०।

ता। वेङ्कषोवियुषिस्‌रियस्य। चा। औ३होवायि। सम्भा२३क्ता। गमीवो३। ऊम्मा२। मा२३हो३५ वायि(३)॥१२ *॥[२]

॥अध्यम्॥ प्रत्युवदा२र्शि। आयतोवा। उच्छ न्तोदु। हिताद्दिवाः। अपोमहीवृणुतेचक्षुषातमोज्यो तिष्कृणोति। स२३। नराउवा। अधिया२॥(१) ज्योतिष्कृणो२ति। स्‌नरोवा। उदुस्रियाः। सृजते स्‌। रियःसचाउद्यन्नचत्रम्। आ२३। विवाउवा। अधिया२॥ उद्यन्नचा२त्रम्। अर्चिवोवा। तवेदुषो। वियुषिस्‌। रियस्यचसम्भक्तेनग। मा२३यि। महाउ वा। अधिया२(३)॥१५ †॥[३] १४

* ऊ० गा० २१प्र० २ख० १२सा०।
† ऊ० गा० २१प्र० २ख० १५ सा०।

अथ तृतीये प्रपाठे—

प्रथमा।

२ १ २ ३ १ २ २ १ १
इमाउवान्दिविष्टयउस्राहवन्तअश्विना।

३१ २ ३ १२ ३ १ २ ३ १र २र
अयंवामह्वेवसेशचीवसूविशंविश ᳪहिगच्छथः॥ १ * ॥

"इमाः" "दिविष्टयः" दिवमिच्छन्त्यः प्रजा ऋत्विजोऽपि "उ"—इति चार्थे; हे "अश्विना!" "उस्रा" वासकौ उस्रौ वा "हवन्ते" आह्वयन्ति "अयं" स्तोतापि हे "शचीवसो" कर्मधन!; "वां" युवाम् "अवसे" अस्मद्रक्षणाय युवयोस्तर्पणाय वा "अह्वे" आह्वयामि। किमर्थम्? एवं प्रजा अपि, अयमपीत्यादरोक्ति-रिति "विशं विशं हि गच्छथः" सर्वाः स्तुतिकर्त्रीः प्रजाः प्रति युवां गच्छतः खलु, तस्मादेवमुच्यत इति॥ १॥

अथ द्वितीया।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
युवञ्चित्रन्ददथुर्भोजनन्नराचोदेथा ᳪसूनृतावते।

३ १उ ३ १२ ३ १२ ३ १ २ ३ १ १र
अर्वाग्रथ ᳪसमनसानियच्छतम्पिबत ᳪसोम्यम्मधु॥२†॥१५‡

---

* ऋ० आ० ४, १, ९, २ (१भा० ६१३पृ०)=ऋ० वे० ५, ५, २१, १।

† ऋ० वे० ५, ५, २१, २। ‡ त्रयोदश-चतुर्दशस्वतयोर्यन्यानि सामानि इहापि तान्यामान्येव।

हे "नरा" नेतारावश्विनौ ! "युवं" युवां "चित्रं" चायनीयं "भोजनं" धनं "ददथुः" धारयेथे, तद्वत् "सूनृतावते" स्तुतिमते स्तोत्रे "चोदेथां" प्रेरयतम्, * तदर्थं "समनसा" समानमनस्कौ सन्तौ "रथं" युवयोः सम्बन्धिनम् "अर्वाग्" अस्मदभिमुखं "नियच्छतं" नियमतम्, तथा कृत्वा "सोम्यं" सोमसम्बन्धिनं "मधु" मधुरसञ्च † "पिबतम्" ॥ २ ॥ १५

॥ वारवन्तीयम् ॥ इमाउवाऔहोहायि। हायिविष्टार २३४याः। उस्राहवन्तेअस्वायिनो२३४हायि। अयंवामह्वे अवसेश्चचोवा३४। औहोवा। इहा२३४हायि। उह्व वा२३४सू। विशंवि। शाऽ३हिगच्छा३४। औहोवा। इहार२३४हायि। औहो३१२३४। थाः। एहियाईहा ॥(१) विशंविशाऔहोहायि। हायिगच्छा२३४थाः। युवाह्वा

* 'चोदेथां सूनृतावते—एनं चोदनां कुरुतां यथा सुनृता वयं भवेम !'—इति वि०।

† 'सोम्यं मधु—सोमे भवं स्वादुद्रव्यम्'—इति वि०। "मये च (४, ४, १३८) —इति पा०। "सोममर्हन्दायः स्वान्मयद्धर्थे। सोम्यं मध सोममयमित्यर्थः ॥"—इति च तत्र दीक्षितः।

५ १ र २ ३र ४र ५ १ २
२३४यिहायि। ऋन्ददयुर्भोजनन्ना२३४। औहोवा। इहा

५ २ ३ ५ २र१र२र १७र२
२३४हायि। उद्भवा२३४रा। चोदेयाम्। हनूतावा३४।

३र४र५ १ २ ५ ३र २ ५र
औहोवा। इहा२३४हायि। औहो३१२३४। तायि। एहि

५ १र२र २ र र १ २ २ ५
याई्हा॥(२) चोदेथाऽऽसूऔहौहायि। नात्तीवा२३४तायि।

२ १ ५ १ र २ ३र ४र ५
अर्वाग्रा२३४हा। थऽऽसमनसानियच्छा३४। औहोवा।

१ २ ५ २ ३ ५ २ १ २ १ ७
इहा२३४हायि। उद्भवा२३४ताम्। पिबतम्। सौमि

२ ३र ४र ५ १ २ ५ ३र २
यम्मा३४। औहोवा। इहा२३४हायि। औहो३१२३

५र ५ ४
४। धू। एहियाई्हा। होपूई। डा(३)॥१०*॥ [१]

२ र ४ २ ४ ५
॥ वामदेव्यम्॥ आऽपूयिमाः। उवा३न्दा३यिविष्टयाः।

१ र र र र र र २११
ऊ। स्वाहवन्तेअश्विनाअयंवामह्वेअवसेशचीव। स्व।

२ र २ १ २ ३र २ १
औ३होहायि। विशा२३विशाम्। हिगौहो३। ऊम्मा

१ २ २ ४
२। काऽ२र्थो३पूहायि ॥(१) वाऽपूयिशम्। विशा३ऽऽ

* ऊ० गा० ११प्र० २ख० १०सा०।

१ ४ ५ १ र १ १
हाऽ३यिगच्छथाः। यू। वञ्चित्रन्ददथुर्भोजनन्न। रा।
१ र १ १र र २ ३ र १ १
औ३होवायि। चोदे२३थाꣳसू। नृतौहो३। ऊम्मा
१ २ ३ र ४ २
२। वाऽ२तो३५हायि॥(२) चोऽ५दे। थाꣳसूं३ना३
४र ५ १ र र २ १
र्त्तावतायि। आ। र्वाग्रथꣳसमनसानियच्छ। ताम्।
र २ १ २ ३ र २ १
औ२३होवायि। पिबा२३तꣳसो। मियौहो३। ऊम्मा
१ २
२। मा२धो३५हायि३॥ १२ *॥ [२]

१ र १ २ १र
॥ अध्यम् ॥ इमाउवा२न्दि। विष्टयोवा। उस्रा
२ १ १र ३ २ १ २ १र २ १र २र १ र १२ १ २
हवा। तेअश्विना। अयवामह्वेवसेशचीवह्वविशांविशꣳ
१ २ १र १
हि। गा२३। च्छथाउ। वा। अधिया२॥(१) वि
१ १ १ २ १ २ ३ २ १
शांविशा२ꣳहि। गच्छथोवा। युवञ्चित्राम्। ददथुर्भो।
२ र १र र २र र १ २ १र
जनन्नराचोदेथाꣳह्वन्। ता२३। वताउवा। अधिया
१र र र र १ २ १र २ १
२॥(२) चोदेथाꣳस२न्। तावतोवा। अर्वाग्रथाम्।

* ऊ० गा० ११प्र० २अ० १२मा०।

२ ३ १ १          २   १ २ र १                    १
समनसा । नियच्छतम्पिबत२सोमि । या२३म् । मधा
      १र       १   १                    १
उवा । अ्धिया२ । ए२३हिया ३ ४ ३ । ओ२३४५ई ।
डा ॥ १६ * ॥ [३] १५

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य चतुर्थः खण्डः† ॥ ४ ॥

---

अथ पञ्चम-खण्डे‡—

अस्यप्रत्नेति नवर्चसूक्ते, प्रथमा ।

२ १ ३ १उ  ३ १ १  २ १ २  ३ १ २
अस्यप्रत्नामनुद्युत२शुक्रन्दुदुह्रे अह्रयः ।
   १ २   ३ १र  २र
पयःसहस्रसामृषिम् ॥ १ ¶ ॥

"अस्य" सोमस्य "प्रत्नां" पुरातनां "द्युतं" द्योतमानां तनुम् "अनु" "शुक्रं" दीप्तं "सहस्रसां" अभिलषितस्यापरि-

---

* ऊ० गा० १प्र० २अ० १६सा० ।

† 'समाप्ता अग्निः । अथ षोडशिकोऽतिरात्रो ब्राह्मण-समाम्नायेऽथ ऋक्समाम्नाये न तथा कल्पकारः क्लृप्तो ज्योतिष्टोमोऽतिरात्रः षोडशिकः । तथा च लक्षणकारः—अतिरात्रो ० ० ०'—इति वि० ।

‡ 'इदानीं द्वादशाहस्य प्रथममहस्तस्य बहिष्पवमानम्'—इति वि० ।

¶ छ० आ० ९, १६=ऋ० वे० ७, १, ९, १ ।

मितस्य फलस्य दातारम् “ऋषिम्” अतीन्द्रियकर्म्मफल-द्रष्टारं “पयः” पातव्यं * “अह्रयः” कवयः † “दुह्रे” दुहन्ति ‡ ॥ १ ॥

---

* ‘पयः—क्षीरम्’—इति वि० ।

† ‘अह्रयः—अह्रीकाराः’—इति वि० ।

‡ अत्र महीधरः—“गायत्र्यावत्सारदृष्टा गोऽग्निपयोदेवत्या । अस्याग्नेः प्रत्नां चिरन्तनकालभवां द्युतमन् दीप्तिमनुलक्ष्य । अह्रयः नास्ति ह्रीर्येषामीदृशा लज्जारहिता दोग्धारः ऋषिं गां शुक्रं शुद्धं पयो दुदुह्रे दुदुहिरे। दुहेर्लिटि इरयो रे इति रे आदेशे रूपम्। ऋष गतौ। अर्षति दोहनस्थानं गच्छतीति ऋषिर्गाः। तां धोमार्थं दुग्धवन्तः। सायं दोहनकालेऽग्निप्रकाशाभावे दुह्यमानं पयो भूमौ पति-ष्यतीति शङ्कया दोग्धृणां लज्जा भवति। सत्यामग्निदीप्तौ स्कन्दशङ्कानुदयाल्लज्जाभा-वादह्रयो दोग्धारः। किम्भूतामृषिं सहस्रसाम्। योऽन्तकर्म्माणि। सहस्रसङ्ख्या-कानि कर्म्माणि स्यति समापयति क्षीरदध्याज्यहविःप्रदानेनेति सहस्रसा ताम्। स्यतेः क्विप्। तद्वास्या ऋचोऽर्थान्तरम्। गाम्प्रकृत्याग्निहोत्रब्राह्मणे श्रूयते। ताम् ह्याग्नि-रभिदध्यौ मिथुन्येऽनया स्यामिति तां सम्बभूव तस्यां रेतः प्रासिञ्चत्तत्पयोऽभवदित्या-दि (२.२,४,१५)। तदभिप्रायमेषा ऋग्वदति। अह्रयः गावः नास्ति ह्रीर्लज्जा यासां ता अह्रयः अलज्जा उज्ज्वलाः प्रशस्ता इत्यर्थः। मलिनो हि लज्जते। अह्रयो गावोऽस्याग्नेः प्रत्नां चिरन्तनीमात्मानुषक्तां द्युतं दीप्तिं शुक्रं शुक्ररूपापन्नां द्युतमेव पयो दुग्धं दुदुह्रे दुहन्ति क्षरन्ति। अग्निना शुक्ररूपेण सिक्तां स्वकान्तिमेव गावो दुग्धरूपेण क्षरन्ती-त्यर्थः। सहस्रसामृषिमिति विशेषणद्वयं पयसः। सहस्रं सनोति सहस्रसास्तम्। चातुर्मास्यपशुसोमानां सम्भक्तारम्। पुंस्त्वमार्षम्। जनसनखनक्रमगमो विडिति विट्प्रत्यये विड्वनोरनुनासिकस्यादित्याकारे वेर्लोपे सहस्रसा इति रूपम्। तथा ऋषिं द्रष्टारम्। गवि वर्त्तमानं दृष्टुत्वं पयस्युपचर्यते। सा हैनामुदीक्ष्य हिङ्कारेत्युपक्रम्य ते देवा विदाञ्चक्रुरेष साम्नो हिङ्कार इत्यादिना मन्त्रेण गोभिर्हिङ्कारो दृष्ट इति प्रत्यपादि। यद्वा सहस्रसामृषिमिति विभक्तिलिङ्गवचनव्यत्ययेन अह्रय इत्यस्य विशे-षणद्वयम्। किम्भूता अह्रयः सहस्रसाः ऋषयः। पूर्ववदर्थो वा”—इति ॥

अथ द्वितीया ।

२ १  १ १र  १ २ १ १र  २र
अयꣳसूर्यइवोपदृगयꣳसराꣳसिधावति ।

३ २ ३ १र३  १र  २र
सप्तप्रवतआदिवम् ॥ २* ॥

"अयं" सोमः "सूर्य्य इव" यथा सूर्य्यः सर्व्वस्य लोकस्योपद्रष्टा, तथा कर्म्मणाम् "उपदृक्" उपद्रष्टा ; अपिच "अयं" सोमः "सरांसि" त्रिंशत् उक्थपात्राणि [—इति केचिद् वदन्ति, अपरेतु त्रिंशदहोरात्राणि सरांसीति], तानि "धावति" प्रति गच्छति [तथाच यास्कः—"तत्रैतद् याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि, माध्यन्दिने सवने एकदेवतानि, तान्येतस्मिन् काल एकेन प्रतिधानेन पिबन्ति, तान्यत्र सरांस्युच्यन्ते—त्रिंशदपरपक्षस्याहोरात्राः त्रिंशत् पूर्व्वपक्षस्येति नैरुक्ताः ( ५, ११ ) इति † ]। अपिचायं सोमः "दिवम्" अधिकृत्य "सप्त प्रवत" सप्त नदीरातिष्ठति‡ ॥ २ ॥

---

* ऋ० वे० ७, १, २, २ ।

† "तस्या एतास्यान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति । तथापि निगमो भवति । यमक्षितिमक्षितयः पिबन्तीति तं पूर्व्वपक्ष आप्याययन्ति। तथापि निगमो भवति । यथा देवा अंशुमाप्याययन्तीति"—इति च तच्छिष्टांशः ।

‡ 'सप्त प्रवत—सप्त लोकान् प्रवत । अथवा सप्त छन्दांसि'—इति वि० ।

अथ तृतीया ।

१ २र २र ३ १र २र३ १ २

अयंविश्वानितिष्ठतिपुनानोभुवनोपरि ।

१ २ ३ १र २र

सोमोदेवोनसूर्यः ॥ ३* ॥ १६ †

"पुनानः" पूयमानः "अयं" "सोमः" "विश्वानि" सर्वाणि "भुवना" भुवनानि सर्वेषां भुवनानाम् "उपरि" "तिष्ठति"। तत्र दृष्टान्तमाह—"देवो न सूर्यः" यथा सूर्यो देवः सर्वेषां भुवनानामुपरि तिष्ठति तद्वदयं सोमोऽपीत्यर्थः ॥ ३ ॥ १६

३ २ र

॥ सत्रासाहीयम् ॥ अस्या२३ । पुनामनुद्युतम् ।

५ ५ १ र १ १

ओ६वा । ऋक्रन्दुदुहे अद्वा२याः । पा२याः । सा२३

२ १ ऽ २र २र २ १ ५ ५

हा । ससौ३हो वाहा३४३यि । आ२३४र्षो६हायि ॥

३ २ र र ५ ५ १

(१) अया३४म् । सूर्य्य इवोपदृक् । ओ६वा । अय९

र र १ १ १ १ ऽ

सरा९सिधावा२तायि । सा२मा । पा२३वा । तऔ

२र ३र २ १ ५ ५ ३ २

३हो । वाहा३४३यि । दा२३४यिवो६हायि ॥(२) अया

---

* ऋ० व० ७, १, २, ३ ।

† मूलेत्येतदङ्क एव षोडशं खण्डम्, विवरणादि-मतेप्येतमेव । 'उक्तः प्रथमपर्य्यायः'—इति वि० ।

२ ५ ५ १ २ २ २
३४म्। विश्वानितिष्ठति। ओ६वा। पुनानोभुवनो

१ १ २ १ ऽ २र २र
पा२रायि। सो२मो। दा२३यिवाः। नसौ३हो। वा

२ १ ५ ५
हा३४३यि। रा२३४योद्दायि(३)॥ ८*॥ [१]

५ २ ४र ५ २
॥ आमहीयवम्॥ अस्यप्रा३त्नामनुद्युताम्। शु

१ २ १र २ १ ११
क्रान्दू१दू२। ह्रे आ२३ह्रयाः। पयःसहा। स्सा२३

२ ५ २ ४ ५र २१ २
मुषाउ। वा३॥(१) अयंउस३र्य्यइवोपहक्। अयंउसा

१ २ १२१ २
१रा२। सिधा२३वतायि। सप्तप्रवा। तआ२३दिवाउ।

५ १ ४र ५ २ १ २ १
वा३॥(२) अयंवा३यिश्वानितिष्ठतायि। पुनानो१भू२। व

२ र १र १र१ २
नो२३परायि। सोमोदेवाः। नसू२३रियाउ। वा३।

२र १ १ १ १
स्तोषे३४५ (३)॥ ३†॥ [२]

२ १ २ १ २ १
॥ जराबोधीयम्॥ अस्यप्रत्नोवा। आनुद्युताम्।

२ १ २ र २ ४ ५र २ १
शुक्रान्दू२३दू। ह्रे याःसा१हा२३स्रा। साम्। ऋषो३

* ऊ० गा० ८प्र० १ख० ८सा०। † ऊ० गा० ८प्र० १ख० ३सा०।

४५ई। डा॥(१) अयꣳसूर्य्योवा। आयिवोपदृक्। अयाꣳसार२३रा। सिधावातायि। सप्ताप्रा१वार२३ताः। स्वा। दिवो३४५ई। डा॥(२) अयंविश्वोवा। नायि तिष्ठतायि पुनानोर२३भू। वनोपारायि। सोमोदा१ यिवार२३ना। स। रियो३४५ई। डा(३)॥१०॥[३]

॥हाविश्मतम्॥ हावस्यप्रत्नामनुद्युतꣳहाउ। शुक्रन्दुदू३। ह्रेअह्वार२३४याः। ऐ२हो१आ२३यिहो। पयाःसा३हा। सुसाम्। आ२र्षा२३४औहोवा॥(१) हावयꣳसूर्य्यइवोपदृग्घाउ। अयꣳसरा३। सायिधावार२३४तायि। ऐ२हो१आ२३यिहो। सप्ताप्रा३वा। तआ। दा२यिवा२३४औहोवा॥(२) हावयंविश्वानितिष्ठतिहाउ। पुमानोभु३। वानोपार२३४रायि। ऐ२हो१आर२३यिहो।

* ज० गा० ६प्र० ३ख० १०सा०।

१र २ २ १र ३ ५र र २ १

सोमोदा३यिवाः। नद्ध। रा२या२३४औहोवा। ह्वि

२१११११

ष्मते२३४५ ॥ ८ * ॥ [४]

२ १ २ १र १ १

॥ आष्टुभार्गवम् ॥ अस्वप्नताम्। नुद्यू३ताम्।

१ २ १ ३ ५ ५ २

प्रुक्रन्दुदू३। हृ आ२ह्रा२३४याः। पयाःसा१हा२।

१ २ १ ५ ५ २ १ र २र

स्वसा३म्। आ२३४यौहोवा॥(१) अयꣳसूर्यः। इवो

२ १ २ १ ३ ५ १

पा३दृक्। आयꣳसरा३। सायिधा२वा२३४तायि। म

२ ३ २ १ ५ ५ २ १

ष्ठाप्रा१वा२। तआ३। दा२३४यिवोइहायि॥(२) अर्षं

र २ २ १ र र २ १ ३

विश्वानि। तिषा३तायि। पूनानोमू३। वानो२पा२३

५ १र २ ३ २ १ ५ ५

४रायि। सोमोदा१यिवा२ः। नद्ध३। रा२३४योइहा

यि॥ १९ † ॥ [५]

२ र १ २ १

॥ मार्गीयवाद्यम् ॥ अस्वौहोवा। प्राप्ता२म्। च

१ ३ ५ १ १ २ र १ २ १

नूद्यू२३४ताम्। प्रुक्रन्दुदू। हृ आह्रा१या२ः। पयः।

---

* ज० गा० ११प्र० २ख० ८सा०। † ज० गा० १४प्र० १ख० १९सा०।

१ २ ३ ५ १ २ ५र र
हा । औ३होयि । सा२३४हा । सा२सा२३४औहो

२ १ ११११ २ र १ २ १
वा । ए३ । ऋषा२३४५यिम् ॥(१) अयौहोवा । सू

३ २ ३ ५ ११ १र १ २
र्य्याः । द्रवोपा२३४हक् । अय८सरा । सिधावा१ता२

१ २ २ ३ ५ १ २
यि । सप्त । हा । औ३होयि । प्रा२३४वा । ता२आ

५र र २ १ ११११ २ २ १ १
२३४औहोवा । ए३ । दिवा२३४५म् ॥(२) औयौहोवा ।

१ ३ २ ३ ५ १ र २र १
वायिश्वा२ । नितायिष्ठा२३४तायि । पुनानोभु । वनो

२ १र २ २ ३
पा१रा२यि । सोमः । हा । औ३होयि । दा२३४यि

५ १ २ ५र र २ १ १ १
वाः । ना२स२३४ औहोवा । ए३ । रिया२३

१ १
४५:(३) ॥ २० * ॥ [६]

२ र २ १
॥ सौमित्रम् ॥ अस्यप्रत्नामनुद्यु ता३मे । शुक्रन्दु

१र २ १ २
दुह्रे । आ२१२३ । ह्रया३४३: । पा२३याः । सहा

१ ४ ५ ४ ५ २ र
२ओ२३ । स्रमोवा । आ५र्षीई्हायि ॥(१) अय८म्य्र्य

* ऊ० गा० १४प्र० १ख० २०सा० ।

र २ १ २र २
इवोपहङ्गे । अयꣳसराꣳसि । धा२१ऽ२३ । वता३४

१ २ १ ४ ५ ४
३यि । सार३मा । प्रवा२ओर३ । तओवा । दा५यिवो

५ २ र २ १ र २र
६हायि ॥(२) अयंविश्वानितिष्ठता३ए । पुनानोभुव

२ १ २ र १
नो२१ऽ२३ । परा३४३यि । सोर३मा: । देवा२ओर

४ ५ ४ ५
३ । नओवा । रा५योईहायि(३) ॥ १ * ॥ [७]

१ २ १ २ र
॥ ऐटतम् ॥ अस्य । एआस्या । प्रत्नाम । नू३ ।

१ २ ५र र १ ५ २ १ २ ५
आ२नू२३४औहोवा । द्यू२३४ताम् । शुक्रान्दू२३४दू ।

१र २ १ २ ५र र २ ५ २
ह्रे आ३ । ह्रे२आ२३४औहोवा । ह्वा२३४या: । पया:

२ ५ २२ १ २ ५र र २
सा२३४हा । ससा३ । सा२सा२३४औहोवा । आ२३

१ २ १ २ र
४र्षीम् ॥(१) अयम् । एआयाम् । सूर्यइ । वा३ ।

१ २ ५र र २ ५ २ २
आ२यिवा२३४औहोवा । पा२३४इक् । अया२ꣳसा२३४

* ज० गा० १४प्र० १ख० १सा० ।

रा। मिधा३। सा२यिधा२३४औहोवा। वा२३४ती। सप्राप्रा२३४वा। तआ३। ता२आ२३४औहोवा। दी२३४वाम्॥(२) अयम्। एआयाम्। विश्वानि। ता३यि। ना२यिता२३४औहोवा। छा२३४ती। पुनानो२३४भू। वनो३। वा२नो२३४औहोवा। पा२३४री। सोमोदा२३४यिवाः। नस्३। ना२म्२३४औहोवा। री२३४याः॥ २ *॥ [८]

॥ धुरासाकमश्वम्॥ अस्यप्रत्ना३म्। हौ३हो३१यि। अनुद्युता३म्। हौ३हो३१यि। शुक्रन्दुदू३। हौ३हो३१। दुह्रे अह्रयाः३:। हौ३हो३१यि। पयःसहा३। हौ३हो३१। सहस्रामृषा३यिम्। हौ३हो३१२३४५ई। डा॥(१)

* ऊ० गा० १४प्र० १अ० २सा०।

१ र २ ५ २ र १ ५ २
अयꣳसूर्य्यो३ः । हौ३हो३१यि । इवोपदृ३क् । हौ३हो

२ ५ १ र २
३१ । यि । अयꣳसरा३ । हौ३हो३१ । सिधावता३

४ ३ ४र ५ र २ २ १ ५
यि । अयꣳसराꣳसिधा । हा३हा३यि । वा२३४ता

१ २ २ १ ३ ५र र २ र
यि । साप्ता३उवा३ । प्रा२वा२३४औहोवा । तआदि

५ २ १ ५ २ र
यि । हौ३हो३१यि । सप्तप्रवा३ । हौ३हो३१ । तआ

२ ५ २ १ २
दिवा३म् । हौ३हो३१२३४५ई । डा ॥(२) अयंविश्वा३ ।

५ २ २ ५ २ १ र र २
हौ३हो३१ । नितिष्ठता३यि । हौ३होयि । पुनानोभू

५ २ र २ ५ २ र
३ । हौ३हो३१ । वनोपरा३यि । हौ३हो३१यि । सो

र र १ ५ २ र २ ५ २
मोदेवा३ः । हौ३हो३१ । नसूरिया३ः । हौ३हो३१२

३४५ई । डा ॥ ३ * ॥ [९]

२ १२१र २ १ ११
॥ विलम्बसौपर्णम् ॥ अस्यप्रत्नामनुद्युतम् । ईयद्द

२ ४ ३ ४ ५र र २ २ १
याहायि । शुक्रन्दुदुह्रेभा । हा३हा३ । ह्रा २ ३ ४

* ऊ० गा० १४प्र० २ख० ३गा० ।

५ १ २ २ १ ३ ५र र २ र
याः। पाया३उवा३। सा२हा२३४औहोवा। स्वसाम्न

३ १ १ १ १ २ १ र २ र १ ११ २
षा२३४५यिम्॥(१) अयꣳसूर्य्यइवोपदृक्। ईयइयाहा

४ ३ ४र ५ र २ २ १ ५
यि। अयꣳसराꣳसिधा। हा३हा३यि। वा२३४तायि।

३ २ २ १ ३ ५र र २ र
साम्ना ३ उवा ३। प्रा २ वा २ ३ ४ औहोवा। तन्त्रादि

३ १ १ १ १ २ १ र २ १ १ १ २
वा२३४५म्॥(२) अयंविश्वानितिष्ठति। ईयइयाहायि।

४ र २र ४ ५र २ २ १ ५ १ २
पुनानोभुवनो। हा३हा३यि। पा२३४रायि। सोमा३

२ १ ३ ५र र २ र २
उवा ३। दा २ यिवा २ ३ ४ औहोवा। नसूरिया २ ३

४ ५ः॥ ४*॥ [१०] १६

अथ चतुर्थी†।

३ २ ३ २ ३ १ २ ३ २ ३ १ २ १ २
एषप्रत्नेनजन्मनादेवोदेवेभ्यःसुतः।

१ २ ३ १ २
हरिःपवित्रेअर्षति॥ १‡॥

---

* ऊ० गा० १४प्र० २अ० ४सा०।

† मूलेत्वियं सप्तदशसूक्तस्य प्रथमा, विवरणादि-मतेष्वेवमेव। तथैवाग्रेऽपरत्र बोध्यम्।

‡ इयमत्रैव पुनः श्रोष्यमाणा पञ्चम-द्वितीय-द्वितीय-नवमे। छ० वे०६, ७, ११, ४।

"हरिः" हरितवर्णः "देवः" द्योतमानः "एषः" सोमः "प्रत्नेन" पुराणेन "जन्मना" जननेन * "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् "पवित्रे" "अर्षति" आरोचते ॥ ४ ॥

अथ पञ्चमी।

३ १ २ २ ३ १ २ ३ २ ३ १ २ ३ १ २
एषप्रत्नेनमन्मनादेवोदेवेभ्यस्परि।

३ १२ ३२
कविर्विप्रेणवावृधे ॥ २ ॥

"प्रत्नेन" पुराणेन "मन्मना" साधनेन स्तोत्रेण युक्त इति शेषः † "देवः" द्योतमानः "एषः" सोमः "देवेभ्यः" देवार्थं "कविः" मेधावी सन् "विप्रेण" मेधाविना यजमानेन ऋत्विजा "परिवावृधे" परिवर्द्धते ॥ ५ ॥

अथ षष्ठी‡।

३ २ ३ १२ ३२ ३ ३ १ १ २
दुहानःप्रत्नमित्पयःपवित्रेपरिषिच्यसे।

१ २ ३ १ २
क्रन्दन्देवाँअजीजनः ॥ ३ ¶ ॥ १७

---

* 'जन्मना—कर्मणा, नाम्ना वा'—इति वि०।

† 'मन्मना—मन्म बलमभिधीयते, बलेन'—इति वि०।

‡ मूले त्वेतदन्तमेव सप्तदशं सूक्तम्, विवरणादि-मतेऽप्येवमेव।

¶ ऋ० वे० ६, ८, १२, ४।

"प्रत्नमित्" पुराणमेव "पयः" रसं * "दुहानः" हे सोम ! पवित्रे परिषिच्यसे । हे सोम ! त्वं "क्रन्दन्" शब्दं कुर्वन् "देवान्" इन्द्रादीन् "अजीजनः" स्वसमीपे जनयति । यत्र सोमोऽभिषुते तत्र देवा नियतं प्रादुर्भवन्तीत्यर्थः ॥

"अजीजनः"-"अजीजनत्"—इति पाठौ † ॥ ६ ॥ १७

अथ सप्तमी ‡ ।

१ २ २ १ २ ३ २ ३ १ २ ३ १ १
उपशिक्षापतस्थुषोभियसमाधेहिशत्रवे ।
१ २ ३ १ ३ १
पवमानविदारयिम् ॥ १ ¶ ॥

हे "पवमान" सोम ! "उपशिक्ष" त्वं समीपे कुरु । कान् ? "उपतस्थुषः" उपक्रम्य स्थितानस्मदभिमतानित्यर्थः । "शत्रवे" शत्रुषु अस्मद्विरोधिषु "भियसं" भयम् "आधेहि" कुरु जय । किञ्च तेषां शत्रूणां "रयिं" धनं "विदाः" § अस्मभ्यं विद्धि देहीत्यर्थः ॥ ७ ॥

* 'पयः—स्वादु-द्रव्यम्, अथवा पय उदकं क्षीरं वा'—इति वि० ।

† "सिच्यसे"-"सिच्यते"—इत्यपि पाठभेदः ।

‡ मूले लिखमष्टादशसूक्तस्य प्रथमा, विवरणादिमतेऽप्येवमेव । तथैवाग्रोत्तरत्र बोध्यम् ।

¶ ऋ० वे० ६, ८, ९, ५ ।

§ 'विदज्ञाने, विद्लृलाभे, विदसत्तायामित्यस्येदं रूपम्'—इति वि० ।

अथ अष्टमी-नवम्योर्ऋचोः प्रतीकमेव माम्नातम्—"उपोषु-जातमप्तुरम्"—इति, "उपास्मैगायतानरः"—इति च॥

तेष्वष्टमी प्रदेशान्तरे* आम्नाता—

२ ३ २ ३ १ ३ २ ३ १ २ ३ १ २र
उपोषुजातमप्तुरं(गोभिर्भङ्गम्परिष्कृतम्।

१ २ ३ १ २
इन्दुन्देवाअयासिषुः)॥ २ †॥

"जातं" सम्यक् प्रादुर्भूतम् "अप्तुरम्" वसतीवरीभिः अद्भिः प्रेरितं "भङ्ग" शत्रूणां भञ्जकं "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतं संस्कृतम् "इन्दुं" सोमं "देवाः" इन्द्रादयः "उप उ"—इति निपातद्वयसमुदायः उपेत्यस्यार्थे वर्त्तते सुष्ठु "उप अयासिषुः" उपागच्छन्ति॥ ८॥

नवमीत्वेव मन्यत्राम्नाता‡—

१ २ ३ १ २ ३ १ २
उपास्मैगायतानरः(पवमानायेन्दवे।

३ २ ३ १ २र
अभिदेवाꣳइयक्षते)॥ ३ ¶॥ १८

* अत्रैव पञ्चमे इति बोध्यम्। परमाश्चर्य्यमेतत्—भविष्यत्पाठस्य पूर्व्वम्प्रतीक-ग्रहणमिति।

† छ० आ० ६, १, १, १ (२भा० ४२ पृ०)—अत्रैव ५, २, १०, १—ऋ० वे० ७, १, २०, २।

‡ उत्तराग्रन्थारम्भे एव।

¶ अत्रैव १, १, १, १ (२भा० ४पृ०)—ऋ० वे० ६, ७, २९, १।

हे "नरः" नेतारः ! यज्ञस्य "देवान्" इन्द्रादीन् "अभि इयक्षते" आभिमुख्येन यष्टुमिच्छते यजमानाय चरते "अस्मै" अभिषूयमाणाय "इन्दवे" सोमाय "उप गायत" उपगानं कुरुत ॥ ८ ॥ १८

॥ आध्यम् ॥ उपोषुजा२तम् । अप्तुरोवा । गोभिर्भङ्गाम् । परिष्कृताम् । इन्दुदेवाऔ । या२३ । सिषाउवा । आधिया२ ॥(१) तमिद्वर्द्धा२न्तु । नोगिरोवा । वत्सꣳसꣳशायि । स्वरीरिवा । यइन्द्रस्यहृ । दा२३म् । सनाउवा । आधिया२ ॥(२) अर्षानःसो२म । शङ्गवोवा । धुक्षस्वपायि । प्युषीमिषाम् । वर्द्धासमुद्रम् । ऊ२३ । क्थियाउवा । आधिया२ । ए२३धिया२३४३ । ओ२३४५ई । डा ॥ ५ * ॥ [१]

॥ प्रतीचीनेडङ्काशी ॥ उपोषुजातम् । आ२प्त,

---

* ऊ० गा० ६प्र० १ख० ५सा० ।

१ २ १ ० १र २
रामं। गोभिर्भङ्क्षम्। पराखिष्कृता२३४म्। हाहो

१ र २ २ १ ४ ५
यि। इन्दुन्देवाश्रा३या। मिषू। औ २ ३ होवा॥(१)

१ २ १ २ १
तमिद्वर्द्धन्तु। नो२गिराः। वात्स७संशि। श्वरायि

० ३र १ १ १ २ १
रिवा२३४। हाहोयि। यइन्द्रस्याहा३र्दाम्। सनायिः।

४ ५ १ र र र १
औ२३होवा॥(२) अर्षानःसोम। शा२ङ्गवायि। धू

२ १ ० ३र २ १र २
क्षपि। प्युषायिमिषा२३४म्। हाहोयि। वर्द्धासमूद्रा

२ १ २ ४ ५ ४ ५
३मू। क्थिया। औ३होवा। ईडा(३)॥ ११॥ [२]*

४ ५ र ४ २ ४र ५
॥ यज्ञायज्ञीयम्॥ उपा५पुक्षौ। गा३या३तानाराः।

२ १ २ २ १ २ १ २ २
पा३वामा३ना। या२३श्रा। ऊम्मायि। दा३वायि।

१ रर ३२ १ २ १र २
आभिदेवा७इयार२त्ताउ॥ ते(१)श्रा। भितेमा। धू३

१ २ २ १ १र र २ १
नापा३याः। आथा२र्वा। णोश्रा२३श्रा। ऊम्मायि।

२ १ १ र र ३ २ १ २ १
आ३यूः। दायिवन्देवायदा२यिवयाउ॥ यू(२)साः। नः

* ऊ० गा० १८प्र० २ख० ११गा०।

२ १ २ २ १ १र २
पवा । स्ना३ग्रा३ग्रा३वायि । शग्ना२ना । यग्रा२३मा ।
१ २ २ १ र र २ १
ऊम्मायि । वा३ताायि । ग्रा(१)राजन्नोषधारयिभ्यआउ ।

॥ ११ * ॥ [३]

२ १ २ ४र ५ १ २ ५ २ १
॥ सफम् ॥ उपग्नो३त्ताप । तस्थू२३४षाः । भिया
र १ २ ४ २ ५ २ १
सा२म् । आधायिह्वी३ग्रा३ । चा३२३४वायि । पवा ।
र २ ४ २ ५
मानावी३दा३ः । रा३४५यो६हायि ॥ २ † ॥ [४] १८

इति सामवेदार्थ-प्रकाशे उत्तरार्चिकस्य द्वितीयस्याध्यायस्य

पञ्चमः खण्डः‡ ॥ ५ ॥

---

* ऊ० गा० ११प्र० २ख० ११सा० ।

† ऊ० गा० ११प्र० १ख० २सा० ।

‡ 'प्रथमख्योऽवस्थितमानमुक्तम् । तृतत्सौमिकवेदमध्य: प्रभवती क्षिष्टोपवती क्षिपे कषिष्यमानम्'—इति वि० ।

षष्ठे खण्डे *—

प्रथमतृचे, प्रथमा ।

१ २र २ १ १ १ २ २ १ २
प्रसोमासोविपश्चितोपोनयन्तऊर्मयः ।
१ २ २ १ २
वनानिमहिषाइव ॥ १† ॥

"विपश्चितः" मेधाविनः "ऊर्मयः" प्रवृद्धाः "सोमासः" सोमाः "अपः" वसतीवर्याख्याः "प्र नयन्ते" प्राप्नुवन्ति । तत्र दृष्टान्तः— "वनानि महिषा इव" यथा प्रवृद्धा मृगा वनानि प्राप्नुवन्ति तद्वत् ॥

"अपोनयन्ते"-"अपांनयन्ति"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ १ २र ३ १ २ ३ १ ३ २ ३ १ २
अभिद्रोणानिबभ्रवःशुक्राऋतस्यधारया ।
२ ३ १ २
वाजङ्गोमन्तमक्षरन् ॥ २‡ ॥

---

* 'इदानीं माध्यन्दिनः पवमानो वक्तव्यः, स च त्रिच्छन्दा उक्तः । स च उच्यते— प्रसोमास इति'—इति वि० ।

† छ० आ० ५, २, ५, २ (२भा० ९१ पृ०)=ऋ० वे० ९, ८, ३३, १ ।

‡ ऋ० वे० ९, ८, ३३, २ ।

"अभि" चरन्तीति शेषः अभि शब्दश्रुतेरुचित-क्रियाध्याहारः। किम्प्रति? "द्रोणानि" द्रोणकलशान् * [यद्यपि द्रोणकलश एक एव तथापि तत्प्राधान्यादितराण्यपि पात्राणि द्रोणानीत्युच्यन्ते। अथवैकस्मिन्नेव पूजार्थं बहुवचनम्। के "बभ्रवः" बभ्रुवर्णाः सोमाः "शुक्राः" दीप्ताः। केन प्रकारेण? "धारया" धाराकारेण। कस्मै प्रयोजनाय? † ॥ २ ॥

अथ तृतीया।

२ १ २र ३ २ ३ १ २ ३ १ २
सुताइन्द्रायवायवेवरुणायमरुद्भ्यः।

१ २ ३ १ २
सोमाअर्षन्तुविष्णवे ॥ ३ ‡ ॥ १८ ¶

"सुताः" अभिषुताः सोमाः इन्द्रादिदेवार्थम् "अर्षन्तु" गच्छन्तु § ॥

"अर्षन्तु"-'अर्षन्ति'—इति पाठौ ॥ ३ ॥ १८

---

* 'द्रोणानि—द्रोणकलश सम्बन्धीनि ग्रह-चमसादीनि पात्राणि, तानि'—इति वि०।

† परवाक्यशः। ‡ ऋ० वे० ६, ८, ११, ३।

¶ 'अथ गायत्री भवति'—इति वि०। § पूर्ववदन्वयः।

१ २ १ २ १२
॥ आश्वम् * ॥ अभिद्रोणा२नि बभ्रवः। शुक्रा ऋतस्य

२ १ २१२ २ १ ५ २
धारा२या। वाजङ्गोमा२३न्ताम्। आक्षा३उवा३।

१११
रा२३४५न् (२) ॥ ११ † ॥ [१]

१ २ ५ ३ २ १
॥ सोमसाम ‡ ॥ सुताइन्द्रा। यवायवायि। वारु

२ २ २३२ १ २ ५ ५
णायाश्मा३। रुद्भियाः। सोमाआर्षा३४। हाउ। तु

४
वा५यिष्णवायि। होऽ५इ। डा(३) ॥ १२ ¶ ॥ [२]

१२ २ १ २ १२
॥ आश्वम् ॥ प्रसोमासो२विपश्चिताः। अपोनयन्त

२ १ २ १२ २ ५ २ ११
ऊर्म्मा२याः। वनानिमा२३हो। षा३उवा३। वा२३

११ १ २ १ ३ १२ २
४५ ॥(१) अभिद्रोणा२नि बभ्रवः। शुक्रा ऋतस्यधारा

१ १२१ २ २ १ ५ २ १
२या। वाजङ्गोमा२३न्ताम्। आक्षा३उवा३। रा२

१११ १ २ २१ २
३४५न् ॥(२) सुताइन्द्रा२यवायवायि। वरुणायमरुद्भ्या

* "आश्वसूक्तम्" —इति ख० पु० पाठः। † ऊ० गा० १प्र० २ख० ११सा०।

‡ "आश्वसोमसाम" —इति ख० पु० पाठः। ¶ ऊ० गा० १प्र० २ख० १२सा०।

१ १२ १२ १ ५ २ १ १
२याः। सोमाअर्षा२३तु। वायिष्णा३उवा३। वा२३

१ १
४५यि(३)॥ १२ *॥ [३]

१ २ २२ १२ २ २
॥ आप्तुभार्गवम्॥ प्रसोमासोवि। पश्चा३यिताः।

१२ २ १ ३ ५ १ २
आपोनया३। ताऊ२र्म्मा२३४याः। वनाना१यिमा२।

३ २ १ ५ ५ २ १ २ २
हिषा३ः। आ२३४यिवोई३हायि॥(१) अभिद्रोणानि।

२ २ १ २ २ १ ३ ५ १२
बभ्रा३वाः। शुक्राऋता३। स्याधा२रा२३४या। वाजा

२ ३२ १ ५ ५ २ १२ २
क्रो१मा२। तमा३। त्या२३४रोई३हायि॥ सुतादुन्द्रा

२२ २ १ २१ १ ३ ५
य। वाया३वायि। वारुणाया३। मारुर२द्भ्या२३४याः।

१२ २ ३२ १ ५
सोमाआ१र्षा२। तुवा३यि। ष्णा२३४वोई३हायि(३)॥ ११ †॥ [४]

१२ २१ २ १ २ १ २१
॥ जराबोधीयम्॥ प्रसोमासोवा। वायिपश्चिताः। अपो

२ २ १ २ ४५ ५२
ना२३या। तऊर्म्मायाः। वनाना१यिमा२३हायि। षाः।

---

* ऊ० गा० ६प्र० २अ० १२सा०।

† ऊ० अ० ११प्र० २अ० ११सा०।

२ १ · २ र १ २ १ २ १
दुवोऽ३४५ई । डा ॥(१) अभिद्रोणोवा । नायिवभ्रवाः ।

२ १ २ र १ र २ ४
भुक्काआर२३र्त्ता । स्वधाराया । वाजाङ्गोऽ१मा२३न्ताम् ।

५ ३ १ २ र १ १ १ र २
य । यरो३४५ई । डा ॥(२) सुताइन्द्रोवा । यावाय

१ २ १ २ १ र २
वायि । वह्णा२३या । मरुङ्गायाः । सोमाआ१र्षा

४ ५ ३ २
२३न्तू । वि । ष्णवो२३४ई । डा(३) ॥ १२ * ॥ [५]

१ ०र ३ २ १
॥ सोमसाम† ॥ प्रसोमासः । विपाश्चितः । आपो

२ २ २र ३ २ १ २ ५
मायाऽ३न्ताऽ३यि । ऊर्म्मयः । वानानायिमा३४ । हाउ ।

४ १ २र ३ २ १
हिषा५द्वा ॥(१) अभायिद्रोणा । निवाभ्रवाः । भुक्का

२ १ २र ३ २ १ २ ५
आर्त्ताऽ३था३ । धारया । वाजाङ्गोमा३४ । हाउ ।

२ १ २ ३ २ १
तमा५सरान् ॥(२) सुताइन्द्रा । यवायवायि । वाह्

२ १ २ ३ २ १ २ ४ ४
णायाऽ३मा३ । रुङ्गियाः । सोमाआर्षा३४ । हाउ । तु

४
वा५यिष्णवायि । हो५ई । डा(३) ॥ १३ * ॥ [६]

* ऊ० गा० १४प्र० १ख० १२सा० । † "गायत्रीसोमसाम"—इति ख० पु० पाठः ।

‡ ऊ० गा० १४प्र० १ख० १३सा० ।

१ र २र र १ २
॥ रौहितकुलीयम् * ॥ प्रसोमासोविपाः । चिता २: ।
१ र २ १र २ १ १ २ १
अपोनयन्तऊर्म्मा२३याः । वाना २नायिमा२३ । हिषो२
५ ४ ५ २ १ र २र १ २
३४वा । आ५यिवोई हायि ॥(१) अभिद्रोणानिबा । भ्रवा
१ र २ १र २ १ १
२: । शुक्राऋतस्यधारा२३ या । वाजा २ङ्गोमा २ ३ ।
२ १ ५ ४ ५ २ १र २र १
तमो२३४वा । त्वा५रो ई हायि ॥(२) सुताइन्द्रायवा ।
२ १ र २ १ २ १ १
यवा २यि । वरुणायमरुद्भ्या२३याः । सोमा २ आर्षा२३ ।
२ १ ५ ४ ५
तुवो२३४वा । ष्णा५वोई हायि ॥ १४ † ॥ [७]

१र १ २ १ ३ २
॥ मार्गीयवाद्यम् ॥ प्रसौ होवा । मासो२ । विपा
३ ५ १ र २ १ २ १ र
श्चा२३४यिताः । अपोनय । तऊर्म्मा१या २: । वना ।
२ २ ३ ५ १ ३ ५र
हा । औ३होयि । ना२३४यिमा । हा२यिषा२३४औ
र २ १ १ १ १ १ २ र १ २ १
होवा । ए३ । हुवा२३४५ ॥(१) अभौ होवा । द्रोणा
३ २ ३ ५ १ र २ १ २
२ । निबाभ्रा२३४वाः । शुक्राऋत । स्याधा१राया २ ।

* "रौहित कुलीयोत्तरम्"—इति ख०पु०पाठः । † ऊ० गा० १४प्र० १ख० १८सा० ।

१र २ २ ३ ५ १ ३
वाजम्। हा। औ३होयि। गो२३४मा। तारमा२

५र १ २ १ १११२ २ र १ २
३४औहोवा। ए३। च्यरा२३४५न्॥(२) सुतौहोवा।

१ ३ २ ३ ५ १ २र १ २
सायिन्द्रा२। यवाया२३४वायि। वरुणाय। मरुद्भ्या१

१र र २ २ ३ ५
या२ः। सोमाः। हा। औ३होयि। आ२३४र्षा।

१ ३ ५र र २ १ ११११
तू२वा२३४औहोवा। ए३। ष्णुवा२३४५यि (३)॥ १३*॥[८]

१ र र र ४
॥ आभीकम्॥ प्रा२३४सोमासो५। विपौहोश्चायि

५ १र २ २ २ र ३ ५
ताः। अपोनयन्तऊ१र्म्मा३याः। वनामा२ ३ ४ यिमा।

१ ५ २ २ ५ १
हायिषा३उवा२३४३। आ३४५यिवो६हायि॥(१) आ२३४

र र ४ ५ १ २ २ २
भिद्रोणा५। निबौहोभ्रावाः। शुक्रातस्थधा१रा३या।

र ३ ५ १ ५ २ २
वाजजो२ ३ ४ मा। तामा३उवा३४३। चा३४५रो६हा

५
यि (२)॥ १५ †॥ [९]

२ र र १ २ १ २ ३
॥ ऐडसौपर्णम्॥ प्रसोमासोवा। वायिपश्चा२३४यि

---

* ऊ० गा० १८प्र० १ख० ११सा०। † ऊ० गा० १८प्र० २ख० १५सा०।

५ १ १ २ १ ७ ३ ५ १
नाः। अपोनबा। तऊ२र्म्मा२३४याः। वा२ना। ना
१ १ २र १ २ ४ ५ २ र १
२३यिमा। हायिषाइवा। औ२होवा ॥(१) अभिद्रोणो
२ १ २३ ५ २ १ २ १ ७ २
वा। नायिबभ्रा२३४वाः। प्रुक्राऋता। स्यधा२रा२३
५ १ २ १ २ १
४या। वा२जाम्। गो२३मा। तामत्तरान्। औ२
४ ५ २र १ २ १ २ ३ ५ २१
३होवा ॥(२) सुताइन्द्रोवा। यावा्या२३४वायि। वहु
२ १ ७ ३ ५ १ २
णाया। मरु२द्वा२३४याः। सो२माः। खा२३र्षा।
१ १ १ २ ४ ५
ट्रविषणावा। औ२३होवा। हो५ई। डा (३)॥ १६* ॥[१०]१९

अथ प्रगाथात्मके—

द्वितीयसूक्ते, प्रथमा।

१ २ ३ १ २ ३ २ ३१ २३ १२
प्रसोमदेववीतयेसिन्धुर्नपिप्येअर्णसा।

३ १र २र ३ १र १र ३ २ ३ १ २ ३ १ २
अꣳशोःपयसामदिरोनजागृविरच्छाकोशम्मधुश्चुतम्॥१†॥

---

* ऊ० गा० १९प्र० २अ० १६सा०।

† ऋ० आ० ६, १, २, ४ ( २भा० ८६पृ० )=ऋ० वे० ७, ५, १४, १।

हे "सोम!" त्वं "देववीतये" देवानां पानाय तदर्थम् "अर्णसा" वसतीवर्याख्येन "प्रपिप्ये" प्राप्यायसे। तत्र दृष्टान्तः— "सिन्धुः न" यथा सिन्धुः उदकेन प्रपिप्ये प्रप्यायते तद्वत् [प्यायतेर्लिटि "लिड्यङोश्च(६,१,२९)"—इति पी-भावः], स त्वं "मदिरो न" मदकरः सुरादिरिव "जागृविः" जागरणशीलः। यद्वा, नेति सम्प्रत्यर्थे। इदानीं मदकरो जागरणशीलस्त्वम्। "अंशोः" लताखण्डस्य "पयसा" रसेन "मधुश्चुतं" मधुर-रसस्य स्रावयितारं "कोशं" द्रोणकलशम् "अच्छ" अभि गच्छसि॥ १॥

अथ द्वितीया।

१ २ ३ १र २र ३ १ २ ३ १ २ १र २र
आ हर्यतो अर्जुनो अत्के अव्यत प्रियः सूनुर्न मर्ज्यः।
१ २ ३ २ ३ १ ३ १ २ ३ १र २र
तमीꣳ हिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः॥ २*॥ २०†

"हर्यतः" स्पृहणीयः "प्रियः" प्रीणयिता "सूनुर्न" सूनुरिव "मर्ज्यः" मार्जनीयः "अर्जुनः" श्वेतवर्णः‡ सोमः "अत्के" रूपे विचित्रे¶ "आ अव्यत" आप्नोति "तम्" "ईम्"§

* ऋ० वे० ७, ५, १४, २।

† 'अत्र शौषाजयं साम'—इति वि०।

‡ 'अर्जुनः—तृणसवर्णः। "एतानि अर्जुनानि सोमप्रतिनिधौ" तस्मादर्जुन इत्युक्तम्'—इति वि०।

¶ 'अत्कं—मित्रं, सोमप्रक्षालित'—इति वि०।

§ 'तम् ईम्—इति पदपूरणः'—इति वि०।

एनं सोमम् अङ्गुलयः "नदीषु" नदमानासु वसतीवरीषु "गभस्त्योः" वाह्वोः "आ" आभिमुख्येन "हिन्वन्ति" प्रेरयन्ति। तत्र दृष्टान्तः—"अपसः यथा" वेगवन्तः शूराः जनाः "रथं" सङ्ग्रामेषु प्रेरयन्ति तद्वत् ॥

"अर्जुनः"-"अर्जुने"—इति पाठौ ॥ २ ॥ २०

॥ यौधाजयम् ॥ प्रसो३१ । मा३दे । व । वायि ता२३४यायि । सायिन्धू३ः । नपा२यि । प्येआ३४५ । पा२३४सा । अꣳशोःपथा । सा । मदिरो२ । नजा ३४५ । गृ२३४वीः । अक्रा२ । कोशा२म् । मधू३४५ । श्चू२३४ताम् ॥(१) अच्छा३१ । को३शम् । म । धूश्चू२ ३४ताम् । आच्छा३ । कोशा२म् । मधू३४५ । श्चू२ ३४ताम् । आद्दार्यता । अ । र्जुनोआ२ । त्केआ३ ४५ । व्या२३४ता । प्रिया२ः । सूनू२ः । नमा३४५ । जी२३४याः ॥(२) प्रिया३१ः । सू३नुः । न । मार्ज्या

५ १ २ १र २ २ ३
२३४याः । प्रायाउ: । ह्वन् २ः । नमा३४५ । जीर३४

५ २ १ १ १ २ १ ३ १
याः । नमायि२हिन्वा । ति । अपसोर२ । यथा३४५ ।

३ ५ २ १ ३ १ ३
रा२३४थाम् । नदा२यि । षुवार२ । गभा३४५ । स्तो

२३४ये:(३) ॥ १३ * ॥ [१]

४ ३ ५ ३ ५ र ३ १
॥ वज्रम् ॥ प्रसो४म । दा४यिववी । नया३यि ।

४ ५ १ र १ १ १ र २
सायिन्धूः । नपायि । प्येआर्णसा३ । आ२ओःपया

१र ३ ५ र ३ १ ३ ५
३ । सामा२दा२३४यिराः । नजा । गृवौवाओर२३४वा ।

र १र २ ३ ५ ४ ४
अक्का । कोशौवाओर२३४वा । मधू५श्चुताम् ॥(१) आ

३ ५र ३ ५ ३ २ ४ ५ १र
च्छा४को । शा४म्मधु । श्चुता३म् । आच्छा । कोशाम् ।

१ २ १ २ १
मधूश्चूता३म् । आहर्य्यजौ३ । अर्जू२नो२३४आ । त्वो

३ २ ३ ५ ३र २ ३ ५
आ । व्यजौवाओ२३४वा । प्रियः । ह्वनौवाओर२३४वा ।

४ ४ ३ ५र ३ ५ १ २
नमा५र्जियाः ॥(२) प्रिया४:ह्व । न्४र्नम । जिया३: ।

* ज० गा० १प्र० २ख० ११सा० ।

प्रायाः। प्रायाः। ह्न्नू:। नमाऽर्ज्जायाइ:। जामीं
ह्निन्वाइ। तियार्पार२३४साः। यथा। रथीवाऔर२३
४वा। नदी। पुत्रौवाऔर२४वा। गभापूस्तियोः। ह्वो
पूई। डा (३)॥ १२ * ॥ [२]

॥ अभीवर्त्तः॥ प्रसोइमाइदेववीतयोवा। सायिन्धु
र्न्नपि। प्येआर्णा१सा२। आर्शोःपयाइ१२२३४। सा
मद्रिरः। नजागृ१वी२:। अच्छाको१शा२म्। मधुइ।
श्चू२३४५। ता२३४५म्(१)॥ १२ † ॥ [३]

॥ गौगवम्॥ प्रसोमाइदेववीतयाग्नि। सायिन्धू२:।
नपिप्येआइ। णासा। अर्शोःपयसामद्दार२इयिरो२।
मजाइगृवीः। अर्शोःपयसामद्रिरः। नजाइगृवीः।

* ऊ० गा० ६प्र० २अ० १२सा०।

† ऊ० गा० ८प्र० १अ० १३सा०।

१ र २र १ २ २ १ ५ ४
आच्छाको । शा । औ३हो । मधो२३४वा । सू५तो

६हायि(१) ॥ १७ * ॥ [४]

१ र १ र १ र २ १
॥ प्राङ्घाप्राङ्घीयाद्यम् † ॥ प्रसोमदेववीतयायि । सि

१र १ २ १ र र २ १र
न्धुर्न पिप्ये अर्णा२३सा । अ‍ंशोःपयसामदिरोनजागृ२३.

२ १र २ १ ३ २ ५र र
वीः । अच्छाको२३शा३म् । मा२ । धवू३४औहोवा ।

३ १ १ १ १
ता२३४५म्(१) ॥ १८ ‡ ॥ [५]

५ र २ ४र ५ ४र ५ १
॥ गौङ्गवम् ॥ प्रसोमा३देववीतयायि । सायिन्धू

१ १र २ ४ ५ १ १र र
२ः । नपिप्ये आ३ । णासा । अ‍ंशोःपयसामदा२३यि

१ १ २ ४ ५ २ १र र ३ २
रो२ । नजा३गृवी । अ‍ंशोःपयसामदिरः । नजा३

४ ५ १ र २र १ १ २ १ ५
गृवीः । आच्छाको । शा । औ३हो । मधो२३४वा ।

४ ५ ५ र २ ४ ५ ४ ५ १
सू५तो६हायि ॥(१) अच्छाको३शम्मधुश्चुताम् । आच्छा

१र १ २ ४ ५ २र १ र
२ । कोशम्मधु३ । श्चुताम् । आहर्य्यतोअर्जुनो२३

* ऊ० गा० ६प्र० २ख० १७सा० । † "प्राङ्घाप्राङ्घीयम्"—इति ख०पु० पाठः ।
‡ ऊ० गा० ६प्र० २ख० १८सा० ।

१ ३र २ ४ ५ २र १ र र २
आ२। त्वा आ३व्याजा। आहय्यंतौअज्जु नोअ। त्वा

२ ४ ५ १ १र १ २ २ १
आ३व्याता। प्रायःद्व। ना। औ३हो। नमो२ ३ ४

५ ४ ५ ५ २ ४ ५ ४ ५ १
वा। जा५यो६हायि॥(२) प्रियःद्व३नुर्न्नमर्जियाः। पा

१र ३ २ ४ ५ २ १र
या२ः। द्वनुर्न्नमा३। जायाः। तमीᳫंह्निन्वन्त्यपा२३

१ ३ २ ४ ५ २ १र ३ २
सो२। यथा३राथाम्। तमीᳫंह्निन्वन्त्यपसः। यथा३

४ ५ १ र २ १ २ २ १ ५
राथाम्। नादीबु। आ। औ३हो। गभो२३४वा।

४ ५
स्ता५योऽ६हायि(३)॥ १७ *॥ [६]

३ १ २ ४ ५ ५
॥ यौधाजयेत्तारान्तम्॥ प्रसो३१। मा३दे। व।

२ ३ ५ १ २ १ र
वायिता२३४यायि। सायिन्धू३ः। नपाऽ२यि। प्येअ

३ १ १ १ १ २ १ ११ २र १
र्णा३४५। सा२३४५। अᳫंशोःपया। सा। मदिराऽ२।

र ३ १ १ १ १ २ १
नजागृ३४५। वी२३४५ः। अच्छा२। कोशाऽ२म्।

३ १ १ १ १ २ २ २ ४
मधुश्च३४५। ता२३४५म्॥(१) अच्छा३१। को३शम्।

* ऊ० गा० ११प्र० १अ० १७सा०।

५ २ १ ५ १ २ १र
म । धुश्चू२३४ताम् । आच्छा३ । कोशाऽ२म् । मधु

२ १ १ १ १ १ २र १ २ १ २ १ र
श्चू३४५ । ता२३४५म् । आचार्य्यतो । च । जुनोआ

र ३ १ १ १ १ १ १
ऽ२ । त्कोअव्या३४५ । ता२३४५ । प्रिया२ः । ह्वनूऽ२ः ।

२ १ १ १ १ ३ २ २ ४ ५
नमर्ज्जा३४५ । या२३४५ः ॥(२) प्रिया३१ः । ह्व३नुः । न ।

२ ३ ५ १ २ १र
मार्ज्जा२३४याः । पाया३ः । ह्वनूऽ२ः । नमर्ज्जा३४५ ।

२ १ १ १ १ २ १ २ १ २ १ र
या२३४५ः । तमायिर्ष्विन्वा । ति । अपसोऽ२ । यथा

३ १ १ १ १ १ १ २
रा३४५ । था२३४५म् । नदा२यि । पूवाऽ२ । गभ

२ १ १ १ १
स्ता३४५ । यो२३४५ः(३) ॥ १५ * ॥ [७]

५ र २ ४र५४र ५ १ २
॥ द्वैगतम् ॥ प्रसोमा३देववीतयायि । सायिन्धुर्न

र १ २ ३ २ ऽ २ २ १
पि । प्येआर्णा१सा२ । अंशोः३ः । हौ३होऽ३वा । पय

र र २ १ १ ३ ५र
सामदिरोनजागृ१वीरः । अच्छा२३ । कोऽ२शा२३४औ

---

* ऋ० आ० १४प्र० १ख० १५सा० ।

२ १ ३ १ १ १ १ ५ र २
होवा। ए३। मधू२श्चुता२३४५म् ॥(१) अच्छाकोर

४ ५ ४ ५ १ र १र १ १
३शम्मधुश्चुताम्। आच्छाकोशम्। मधूश्च् १ता२म्।

१र २ ५ २ २ १ र र ०
आहा३। हौ३हो३। वा। यंतोअजुनोअत्केअव्याता

१ १ २ ५र र २ १
२। प्रिया२३ः। हर२ना२३४औहोवा। ए३। नमा२

१ ३ १ १ १ १ ५ २ ४ ५ ५ ५ १ २र
र्जिया२३४५ः ॥(२) प्रियःहरनुर्न्नमर्जियाः। प्रायःहरनुः।

१ २ ३ २ ५ २ २ १
नमाज्र्जा१या२ः। तमा३यिम्। हौ३हो३वा। हिन्व

र २ १ १ २ ५र
न्त्यपसोयथारा१था२म्। नदा२३यि। पू२वा२३४औ

र २ १ ३ १ १ १ १
होवा। ए३। गभा२स्तिये।२३४५ः(३) ॥ १२ * ॥ [८]

५ र २ ४र५ ४ ५ १
॥ पौरुहन्मनम् ॥ प्रसोमा३देववीतयायि। सायि

२ र १ २ १ १ र २
न्धुर्नपि। प्ये आर्णा१सा२। णासा२। आ९शोःपय।

१५ २ १ २ १ २ ३ ५ १
सा। मदिरो३। मदिरो३। नाजागृ२३४वी। आ

---

* ऊ० गा० १८प्र० १खा० ११ख० ।

१ र १ १ ५ ४
च्छाकोश्राम्। माधुश्चू२३४ताम्। मधू५श्चुताम्॥(१)

५ र २ ४ ५ ४ ५ १ र २र १ १
श्चच्छाकोश्रम्मधुश्चु्ताम्। श्राच्छाकोशम्। मधूश्चू

१ १ १ १ऽ र
१ता२म्। श्चूता२म्। श्राह्वर्यतः। श्रा। जुनो

२ १ र १ १ १ १ ५ १ २र १
श्रा३। जुनोश्रा३। त्केश्रव्या२३४ता। प्रायःसूनूः।

१ १ १ ५ ४ ५ १ ४ ५
नमाऽर्जा२३४याः। नमा५जिर्जयाः॥(२) प्रियःसू३नुर्न

४ ५ १ २र १ २ १
मर्जियाः। प्रायःसूनुः। नमाऽर्जा१या२ः। जाया२ः।

१ र २ १ऽ २ १ १ १ २
तामी३च्छिन्व। तायि। अपसो३। अपसो३। याथा

२ ५ १ २र १ २ ३ ५ ४
रा२३४थाम्। नादीषुवा। गाभस्ता२३४योः। गभा

४
५स्तियोः। द्वो५ई। डा(३)॥ १३ *॥ [८]

१ र र र १
॥ स्वारायणम्॥ प्रसोमदेवोहा२यिववीतयायि। सा

र र २ २ १र
यिन्धुर्नपिप्येश्रर्णसा। शो:पा३या। सामदिरो। न

---

* ऊ० गा० १८प्र० १ख० १२सा०।

२ १ १ र र २ १ ५
आ३हा। गृ्वी२ः। अच्छाकोशम्मधोवा३ओ२३४वा।

४ ५ १ र र १
श्चूतो६हायि ॥(१) अच्छाकोशौहो२यिमधुश्चुताम्। आ

र र र १ २ १ र
च्छाकोशम्मधश्चुतम्। आहार्य्या३तो। अर्ज्जनोआ।

र २ २ १ १ र २ १ ५
त्केआ३हा। व्याता२। प्रियःसूनुर्न्नमोवा३ओ२३४वा।

४ ५ १ २ र १
जा५यो६हायि ॥(२) प्रियःसूनौहो२यिनमर्जिजयाः। प्रा

र २ १ १
यःसूनुर्न्नमर्जिजयः। तमायि२हा३यिन्वा। तियपसो।

२ १ १ १ र र २ १ ५
यथा३हायि। राया२म्। नदीषुवागभोवा३ओ२३४वा।

४ ५
स्ता५यो६हायि(३) ॥ १४ * ॥ [१०]

२ १र ४र ५र
॥ द्विहिङ्कारंवामदेव्यम् ॥ प्रसोमा२३देववीतयायि।

१ र र र २ ३र २
सायिन्धुर्न्नपिप्येअर्णसा२ओः पयसामदिरोऽनजीहो३।

१ १ २ १ र र २ ३र २ १
ऊम्मा२। गृ२३वीः। अच्छाकोशाम्मधौहो३। ऊम्मा

* ऊ० गा० १८प्र० १ख० १४सा०।

·१ ४ ५ २ १र ४
२। स्वुताम्। औ२३होवा॥(१) अच्छाको ३ २ ३ अ

५ १ र र र र र
म्मधुश्चुताम्। आच्छाकोअम्मधुश्चुतमाह्यर्यतोअर्जुनो

६ २ ३र २ १ १ १ १ २ ३र
आत्कऔहो३। ऊम्मा२। व्या२३ता। प्रियस्सूनुर्न्नमौ

२ १ १ २ ४ ५ २ १
हो३। ऊम्मा२। जिया। औ३होवा॥(२) प्रियःसू२

४ ५ १ र र
३नुर्नमर्जियाः। प्रायःसूनुर्न्नमर्जियस्तमीᳫंहिन्वन्त्यपसो

२ ३र २ १ १ २ १र २ ३र
ऽयथौहो३। ऊम्मा२। रा२३थाम्। नदीषुवाऽगभौ

२ १ १ ४ ५ ४
हो३। ऊम्मा२। स्तियोः। औ२३होवा। हो५

ई। डा(३)॥१७*॥ [११]

२र र १ ३र १र १ १ १ २ १
॥ कण्वरथंतरं॥ प्रासोमदेववीतयायि। सिन्धुर्न्न

२ १ २ २ र र र र
पायि। ष्ये३आर्णा३सा। अᳫंशोःपयसामदिरोनजागृ

२ ४र २ १र ५ २
वा२३४ऐहि। अच्छाको२३४अाम्। मधा३१उवा२३।

२ २ ३ २ २र र १र २ १ १ १ २ १र
ए३। स्तमा॥(१) आच्छाकोअम्मधुश्चुताम्। अच्छा

* क० ग्रा० १६प्र० २अ० १७सा०।

कोशाम् । मा३धुसू३ताम् । आदर्य्यंतोअर्जुनोअत्के
अव्यंता२३४ऐही । आ३हार्य्या३तो । अर्जुनोअत्केअ
व्यंता२३४ऐही । पिय:सू२३४नूः । ममा३१उवा२३ । ए३ ।
जियञ्चा ॥(२) प्राय:सूनुर्न्नमर्जिया: । प्रिय:सूनूः । ना
३मार्ज्जा३याः । तमीं ह्रिन्वन्त्यपसोयथा२३४मैही । ना
३मायिं ह्रा३यिन्वा । तियपसोयथारथा२३४मैही । नदी
षू२३४वा । गभा३१उवा२३ । ए३ । स्तियोवा ॥६*॥[१२]२०

अथ तृतीयतृचे, † प्रथमा ।

प्रसोमासोमदच्युत:श्रवसेनोमघोनाम् ।
सुताविदथेअक्रमुः ॥ १ ‡ ॥

---

* ऊ० गा० २२प्र० २अ० ६सा० ।

† 'उक्तो माध्यन्दिनः पवमानः, उक्तानि गायत्राणि ००० । आर्भवः पवमानो वक्तव्यः तस्य ज्योतिष्टोमवत् छन्दांसि साम्नाञ्च नामधेयैरिवोच्यते'—इति वि० ।

‡ छ० आ० ५, २, १ ( १भा० ३०पृ० )=ऋ० वे० ९, ८, ११, १ ।

"सोमासः" सोमाः "मदच्युतः" मदस्राविणः "सुताः" अभिषुताः सन्तः "विदथे" यज्ञे "मघोनां" हविष्मतां "नः" अस्माकं "अवसे" अन्नाय कीर्त्तये वा "प्र अक्रमुः" प्र गच्छन्ति ॥ *

"मघोनां"-"मघोनः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ १२ ३ १ २ ३ २
आदीᳬं᳭सोयथागणंविश्वस्यावीवशन्मतिम् ।
२ ३ १ २१
अत्योनगोभिरज्यते ॥ २ * ॥

"आत्" अपिच "ईम्" अयं सोमः "हंसो† यथा" "गणं" जनसङ्घं स्वगतिविशेषेण स्वनेन वा प्रविशति, तद्वत् "विश्वस्य" सर्वस्य स्तोतृजनस्य "मतिं" स्तुतिं बुद्धिं वा "अवीवशत्" वृषं नयति ; स च सोमः "अत्यो न" अश्व इव "गोभिः" गव्यैरुदकै र्वा "अज्यते" सिच्यते स्निग्धीक्रियते ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ ३ १ २ ३ १ २ ३ १ २
आदींत्रितस्ययोषणोहरिᳬंहिन्वन्त्यद्रिभिः ।
३ २ १ २ ३ १ २
इन्दुमिन्द्रायपीतये ॥ ३ ‡ ॥ २१

---

* ऋ० वे० ६, ८, २१, २ ।

† 'हंसः—आदित्यः'—इति वि० ।

‡ ऋ० वे० ६, ८, २२, २ । अथर्वणि पुनः ५, २, ४, २ । परं तत्र तु "त्रितस्य"—इति पाठः ।

"आत्" अपिच "ईम्" एनं "हरिं" हरितवर्णम् "इन्दुम्" सोमं "त्रितस्य" ऋषेः "योषणः"* अङ्गुलयः "अद्रिभिः" ग्रावभिः "हिन्वन्ति"। किमर्थम्? इन्द्राय इन्द्रस्य "पीतये" पानार्थम्॥ ३॥ २१

॥ सꣳहितम्॥ प्रसोमासोम। दा२च्युताः। अ वा२। सा२३यिनो। मा२घोनाम्। सू२३ताः। वा२यिदा। थेआ२३। हाउवा३। का२३४ मूः (१)॥ १४†॥ [१]

॥ आष्टुभार्गवम्॥ प्रसोमासोम। दच्यू३ताः। आवसिनो३। मा२घो२३४नाम्। सुतावा१यि। दा२। थेआ३। का२३४मो६हायि(१)॥ २०‡॥ [२] २१

---

* 'योषणः—युमिश्रणे, मिश्रणकर्त्तारः ऋत्विजः,—इति वि०।

† ऊ० गा० १प्र० १ख० १४सा०।

‡ ऊ० गा० ११प्र० १ख० २०सा०।

अथैकर्चे चतुर्थसूक्ते*—प्रथमा।

२ १ २ ३१र २र १ २ ३ १ २
अयापवस्वदेवयूरेभन्पर्येषिविश्वतः।

२ ३ १ २
मधोर्धाराअसृक्षत॥ १ ॥ †

हे सोम! "देवयुः" देवान् कामयमानः त्वम् "अया" अनया धारया "पवस्व" चर। ततः "रेभन्" शब्दायमानः "पवित्रं" "विश्वतः" "पर्येषि" परिगच्छसि। अनन्तरं "मधोः" मदकरस्य तव "धाराः" आत्मीयाः "असृक्षत" सृज्यन्ते॥

अत्र द्वितीय-तृतीय-पादौ व्यत्ययेन ‡ पाठौ॥ १॥

अथैकर्चे पञ्चमे—प्रथमा ¶।

१ २ ३ १उ ३ २ ३ १ २ ३ १ २
पवतेहर्यतोहरिरतिह्वरांसिरंह्या।

२क २र ३ १ २ ३ २ ३ १ २
अभ्यर्षंस्तोतृभ्योवीरवद्यशः॥ २॥ §

---

* मूले, गानग्रन्थे, पदकारनये, विवरणमते चेदमपि सूक्तं तृचं; तथाचेदमेव सूक्तमस्य प्रपाठकस्यान्त्यमिति।

† ऋ० वे० ७, ५, ११, ४।

‡ तथाच—"अयापवस्वदेवयुर्मधोर्धाराअसृक्षत। रेभन्पर्येषिविश्वतः"—इति ऋ० पाठः।

¶ मूलादिमते त्रियृचक द्वाविंशति-सूक्तस्य द्वितीयेति।

§ ऋ० आ० ६, २, ३, ११ (२ भा० २२० पृ०) = ऋ० वे० ७, ५, ११, २।

"हर्य्यतः" स्पृहणीयः "हरिः" हरितवर्णः सोमः "रंह्या" तृतीयाया आकारः साधुवेगेन "ह्वरांसि" कुटिलानि अन्तूनि पवित्राणि "अति पवते" अतीत्य गच्छति। किं कुर्व्वन्? स्तोतृभ्यः "वीरवत्" पुत्रयुक्तं "यशः" "अभ्यर्षन्" अभिगमयन् पवते ॥ २ ॥

अथैकर्च्चं षष्ठे प्रथमा *।

१ २ ३ १र २र ३ २ ३ १ २ ३ १र २र
प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।

३ १ २ ३ १ २ ३ २ ३ १र २र
अपश्वानमराधसꣳहतामखन्नभृगवः ॥ ३ † ॥ २२

॥ इति प्रथमः प्रपाठकः ॥

"सुन्वानाय" [षष्ठ्यर्थे चतुर्थी (२,३,६२वा०)] सुन्वानस्य अभिषूयमाणस्य "अन्धसः" अदनीयस्य सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तः" मारकः कर्मविघ्नकारी "न प्र वष्ट" न भजतां न शृणोत्विति यावत्। तथा हे स्तोतारः! "अराधसं" साधककर्म-रहितं "श्वानम्" "अपहत"। तत्र दृष्टान्तः—"मखं न" यथा पुरा अपराद्धं मखम् एतन्नामानं "भृगवः" अपहतवन्तः तथा अपहतेत्यर्थः ॥

"प्रसुन्वानाय"-"सुन्वानस्य", "वष्ट"-"हत"—इति पाठौ ॥१॥२२

---

* मूलादिनवे लियम्ब्क् द्वाविंशति-सूक्तस्य तृतीयेति।

† उ० आ० ६, २, १, ९ (२भा० १९८ पृ०) = ऋ० वे० ७, ५, ९, ३ = ऋचे-योगगायां पुनः ६, २, ३, १।

॥ आक्षारम् ॥ पव । तेहा३४ । औहोऽ५य्यंतोहरा
यिः । अतिह्वरा२ँसिर२ँ । हा२३या३४ । अर्षा । स्तो
तृभ्योवायि । रा३वद्य । श्मा२३४५ः (३) ॥ १६ * ॥ [१]

॥ गौरोवितम् ॥ प्रसु । न्वाना ३ । यअन्धसाः । म
र्तोनवष्टतद्वचा२३ः । आपश्वाना३१२३म् । अरा५धमा
म् । हातामखा३१२३म् । नभोवा । गा५वो६हायि ॥
(३)॥ १७ † ॥ [२]

॥ सुज्ञानम् ॥ पवतेहा । य्यंतोहरायिः । अजिह्वा
रा२ । सिर२ँहिया । अभियार्षा२ । स्तोतृ । भ्यो
र्वा२३४औहोवा । रवद्यश्मय३उपा२३४५ (२) ॥१५ ‡॥ [३]

॥ काशीजम् ॥ पवतेहा । य्यंतोहा२३रा३४यिः ।

---

* ऊ० गा० १६प्र० २अ० १६सा० ।

† ऊ० गा० १प्र० २अ० १७सा० ।

‡ ऊ० गा० ६प्र० २अ० १५सा० ।

२ र १ १ .र र
अजिक्करा । सिर७हा२३या३४। अभियर्षा। स्तोतृभ्यो

र १ ३ ५र र ३
वीरवत्। या२। भा २ ३ ४। औहोवा। ऊ २ ३ ४

५
पा(२) ॥ १६* ॥ [४]

२ १ २ ४ ५ १ ३ ५
॥ पौष्कलम् ॥ पवते३ हर्य्य। तोहा २ ३ ४रायिः।

२ १ २ १ २ ३ ५ २ १ ७र
अतिक्करा। सायिर७हा२३४या। अभाअर्षा। स्तोतृ

३ २ १ २ १ १ १ १
२भ्यो२३४५वा६५६यि। रवद्यभा२३४५ः ॥ २ † ॥ [५]२२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य षष्ठः खण्डः‡ ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे द्वितीयोऽध्यायः¶ ॥

---

* ऊ० गा० ६प्र० २अ० १६सा० ।

† ऊ० गा० ६प्र० २अ० २सा० ।

‡ 'विंशत्त्रीमिकं प्रथममर्द्धः समाप्तम्'—इति वि० ।

¶ 'समाप्तश्च प्रथमः प्रपाठकः'—इति वि० मूला दिग्वसर्वसम्मतश्च तदिति भ्रम।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥

## ॥ अथ तृतीयोऽध्यायः आरभ्यते * ॥

तत्र,

पवस्ववाचइति पञ्चतृचात्मके प्रथमखण्डे—

प्रथमतृचे—प्रथमा ।

१ २ ३ १ २ ३१र २र ३ १ ३ ३ १ २
पवस्ववाचोअग्रियःसोमचित्राभिरूतिभिः ।

३ १ १र ३ १ २
अभिविश्वानिकाव्या ॥ १ ॥ †

हे "सोम !" "अग्रियः" मुख्यः‡ त्वं "चित्राभिः" पूजनीयैः¶ "ऊतिभिः" रक्षणीयैः सह "वाचः" अस्मदीयाः स्तुतीः

---

* 'इदानीं द्वितीयमहरारभ्यते द्वितीयश्च प्रपाठकः । पञ्चदशस्तौमिकं द्वितीयमहः'—इति वि० ।

† ऋ० वे० ७, १, २८, ५ ।

‡ 'अग्रियः प्रधानभूताः'—इति वि० । अग्रिय शब्दमेवं व्याचख्यौ भगवान् यास्कः—"अग्रगमनेनेति वाग्रगरणेनेति वाग्रसम्पादिन इति वा । अपिवाग्रमित्येतदनर्थकमुपबन्धमाददीत"—इति ६, १५ ।

¶ 'चित्राभि र्विचित्राभिः नानाप्रकारैः'—इति वि० ।

प्रति "पवस्व"। [उत्तरार्द्धं उक्तमेवार्थं विशदयति—] "विश्वानि" सर्वाणि "काव्या" काव्यानि स्तुत्यात्मकानि वाक्यानि "अभि" पवस्वेति ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ २ १र २र ३ १ २
त्वꣳसमुद्रिया अपोग्रियोवाचईरयन्।
१ २
पवस्वविश्वचर्षणे॥ २ ॥ *

हे "विश्वचर्षणे" सर्वस्य द्रष्टः सोम! "अग्रियः" मुख्यः त्वं "वाचः"† "ईरयन्" प्रेरयन् "समुद्रियाः" आन्तरिक्षाणि‡ "अपः" उदकानि¶ "पवस्व" धारया क्षर॥

"विश्वचर्षणे"-"विश्वमेजय"—इति छन्दोग-बह्वृचानां पाठौ॥ २ ॥

अथ तृतीया।

२ ३ १र २र ३ १ २
तुभ्येमाभुवनाकवेमहिम्नेसोमतस्थिरे।
१ २ ३ १ २
तुभ्यन्धावन्तिधेनवः॥ ३ §॥ १

* ऋ० वे० ७, १, २९, १।

† 'अग्रियो वाचः—प्रधानभूताः ऋग्यजुःसामलक्षणाः'—इति वि०।

‡ "समुद्रः"—इत्यन्तरिक्षनामसु निघण्टौ पञ्चदशं पदम् (१, ३)।

¶ 'समुद्रिया अपः—समुद्रे भवाः आपः समुद्रियाः। द्रोणकलशः समुद्रः'—इति वि०।

§ ऋ० वे० ७, १, २९, २।

हे "कवे" क्रान्तकर्म्मन् सोम ! "तुभ्यं" तव "महिम्ने" "इमा" इमानि "भुवना" भुवनानि "तस्थिरे" तिष्ठन्ति त्वामेव पुरस्कुर्वन्तीत्यर्थः। किञ्च "धेनवः" नवप्रसूतिकाः देवानां हविःप्रदानेन प्रीणयित्रो गावः * "तुभ्यं" त्वदर्थमेव 'आशिरं प्रयस्व मे'—इति "धावन्ति" आगच्छन्ति ॥

"धावन्तिधेनवः"—इति छन्दोगाः, "अर्षन्तिधेनवः"—इति बह्वृचाः ॥ ३ ॥ १

अथ द्वितीयतृचे—प्रथमा ।

१ २ ३ १ २ ३ २ ३ १ २ ३२ ३ १ २
पवस्वेन्दोवृषासुतःकृधीनोयशसोजने ।
२ ३ २ ३ १ २
विश्वाअपद्विषोजहि ॥ १ ॥ †

हे "इन्दो" सोम ! "सुतः अभिषुतः "वृषा" कामानां वर्षिता "पवस्व" धारया क्षर "जने" जनपदे "नः" अस्मान् "यशसः" यशस्विनः "कृधि" कुरु ; "विश्वा" विश्वान् सर्वान् "द्विषः" द्वेष्टृन् शत्रून् "अपजहि" मारय च ॥ १ ॥

* 'धेनवः—गावः । अथवा धेनव आदित्यरश्मयः'—इति वि० ।

† छ० आ० ५, १, ५, ३ ( २भा० ३२४० ) = ऋ० वे० ७, १, २३, १ ।

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ २
यस्यतेसख्येवयꣳसासह्यामपृतन्यतः।
१ २ ३ १ २ ३ २
तवेन्दोद्युम्नउत्तमे॥२॥*

हे "इन्दो" सोम! "अस्य"† अस्मिन् यागे वर्त्तमानस्य "ते" तव "सख्ये" सखित्वे सति वयं स्तोतारः "तव" त्वदीये "उत्तमे" श्रेष्ठे "द्युम्ने" अन्ने तृप्तिं प्राप्ताः [तथाच यास्कः—"द्युम्नं द्योततेर्यशो वान्नं वा (निरु० नै० ५, ५)"—इति] "पृतन्यतः" युद्धमितः शत्रून् ‡ "सासह्याम" अभिभवेम ¶॥

द्वितीय-तृतीयपादौ व्यत्ययेन पाठौ॥२॥

अथ तृतीया।

१ २ ३ १र २र ३ २ ३ २ ३ १ २
यातेभीमान्यायुधातिग्मानिसन्तिधूर्वणे।
१ २ ३ २
रक्षासमस्यनोनिदः॥३§॥२

* ऋ० वे० ७, १, २३, ४।

† मूलपाठस्तु "यस्य"—इति; विवरणकृतापि तथैव व्याख्यातम्, पदग्रन्थ-गान-ग्रन्थादावपि तथैव श्रूयते।

‡ 'पृतन्यतः—पृतनाः सेनाः, ताभिर्ये यान्त्ययं ते स्थिताः वीरपुरुषाः'—इति वि०। "पृतनाः"—इति सङ्ग्रामनामसु निघण्टौ अष्टादशं पदम् (२, १७।

¶ 'सासह्याम—सहेम'—इति वि०।

§ ऋ० वे० ७, १, २३, ५,।

हे "सोम!" "ते" तव "या" यानि "भीमानि" शत्रूणां भयङ्कराणि "तिग्मानि" तीक्ष्णानि "आयुधा" आयुधानि * "धुर्वणे" शत्रुवधार्थं सन्ति तैः "आयुधैः" "समस्य" सर्वस्य शत्रोः "निदः" निन्दायाः† "नः" अस्मान् "रक्ष" पालय ॥३॥ २

अथ तृतीयतृचे—प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २
वृषासोमद्युमाꣳअसिवृषादेववृषव्रतः।
२ ३ १ २
वृषाधर्म्माणिदध्रिषे ॥ १ ॥‡

हे "सोम!" "वृषा" कामानां वर्षिता त्वं "द्युमान्" दीप्तिमान् "असि"। अपिच हे "देव" द्योतमान सोम! "वृषा" त्वं "वृषव्रतः" वर्षणशीलकर्मासि। किञ्च हे सोम! "वृषा" त्वं "धर्माणि" देवानां मनुष्याणाञ्च हितानि कर्माणि "दध्रिषे" धारयसि॥

"दध्रिषे"-"दधिषे"—इति पाठौ ॥ १ ॥

---

* 'शतघ्नीप्रासतोमरादीनि'—इति वि०।

† 'निदः—नितरां हन्ति निदः, तस्य सम्बोधनं निदः'—इति वि०।

‡ छ० आ० ६, १, २, ८ (२भा० ६३ पृ०) = ऋ० वे० ७, १, २९, १।

अथ द्वितीया ।

१ २ ३ १ २ २ ३ २ ३ १ २ १ २ २ १
वृष्णस्तेवृष्ण्यꣳशवोवृषावनंवृषासुतः ।
१र २र ३ १र २र
सत्वंवृषन्वृषेदसि ॥ २ ॥*

हे "वृषन्" कामानां वर्षक सोम ! "वृष्णः" वर्षितुः† "ते" तव "शवः" बलं‡ "वृष्ण्यं" वर्षणशीलं भवति "वनं" तव भजनमपि, "वृषा" वर्षणशीलं "सुतः" अभिषुतः तव रसोऽपि "वृषा" वर्षणशीलः "स त्वं" "वृषेदसि" वर्षणशील एवासि भवसि ॥

"सुतोमदः"—इति, "सत्वंसत्यम्"—इति च पाठौ ॥ २ ॥

अथ तृतीया ।

१ ३ १ २ ३ २ ३ १र २र ३ १र २र
अश्वोनचक्रदोवृषासङ्गाइन्दोसमर्वतः ।
१ २ ३ १र २र
विनोरायेदुरोवृधि ॥ ३ ¶ ॥ ३

हे "इन्दो" सोम ! "वृषा" त्वं "अश्वोन" अश्वइव "सञ्चक्रदः" सङ्क्रन्दसे । अपिच "गाः" पशून् "अर्वतः" अश्वांश्च अस्मभ्यं

---

* ऋ० वे० ७, १, ३९, २ ।

† 'वृष्णः'—वृषु सेचने (भ्वा० पर०) सेचन-समर्थस्य ते'—इति वि० ।

‡ "शवः"—इति बलनामसु निघण्टौ तृतीयं पदम् (२, ९) ।

¶ ऋ० वे० ७, १, ३९, ३ ।

सम्प्रयच्छसीति शेषः । किञ्च "नः" अस्माकं * "राये" धनाय "दुरः" द्वाराणि "विहृधि" विहृतानि कुरु ॥ ३ ॥ ३

अथ चतुर्थतृचे—प्रथमा ।

२ ३ १ २ ३ १ १ ३ १ २
वृषाह्यसिभानुनाद्युमन्तन्त्वाहवामहे ।
१ २ ३ १ २
पवमानस्वर्दृशम् ॥ १ ॥ †

हे सोम ! त्वं "वृषासि हि" अभिमत-फलानां वर्षिता भवसि खलु । तस्मात् हे "पवमान" पूयमान वा सोम ! "स्वर्दृशं" सर्वस्य [ सूर्यस्य वा ] द्रष्टारं [ सर्वैर्देवैर्द्रष्टव्यं वा ] "भानुना" तेजसा "द्युमन्तं" दीप्तिमन्तम् अतिशयेन तेजस्विनमित्यर्थः [ स्तुतिमन्तं वा ], "त्वा" त्वां वयं "हवामहे" यज्ञेषु आह्वयामहे ॥ १ ॥

अथ द्वितीया ।

२ १ १ २ १ १ २ १ १ २ ३ १ २
यदद्भिःपरिषिच्यसेमर्म्मृज्यमानआयुभिः ।
१ २ ३ १ ३ १ २
द्रोणेसधस्थमश्नुषे ॥ २ ॥ ‡

---

* 'नः-अस्मभ्यम्'—इति वि० ।

† ऋ० भा० ५, २, ५, ४ ( २भा० ३३पृ० ) = ऋ० वे० ७, २, १, ४ ।

‡ ऋ० वे० ७, २, १, १ ।

हे सोम! त्वम् "आयुभिः" मनुष्यैः * ऋत्विग्भिः "मृज्य-मानः" अतिशयेन शोध्यमानः सन् "अद्भिः" वसतीवर्य्याख्याभिः "यद्" यदा "परि सिच्यसे" परितः सिच्यमानो भवसि, तदानीं "द्रोणे" द्रोणकलशेन गृह्यमाणः सन् "सधस्थं" सह तिष्ठन्त्यत्रेति सधस्थं स्थानं ग्रहचमसादिकम् "अश्नुषे" व्याप्नोषि॥

"मृज्यमान आयुभिः"-"मृज्यमानो गभस्त्योः"—इति, "द्रोणे"-"द्रुणा"—इति च पाठौ॥ २॥

अथ तृतीया।

१ २ ३ २ ३ १ २
आपवस्व सुवीर्य्यम्मन्दमानः स्वायुध।

३ १ २ ३ १ २
इहोष्विन्दवागहि॥ ३ †॥ ४

हे "स्वायुध"! यत्र 'स्फ्य-कपालादीनि दशायुधानि-इत्यभि-धीयन्ते, शोभनानि तानि यस्य स तथोक्तः। यद्वा धनुरादीन्या-युधानि यस्य सः, तादृश हे सोम! त्वं "मन्दमानः" मोदमानः सन् [अन्तर्णीतण्यर्थः] देवान् स्वयं मादयन् ‡ "सुवीर्य्यं" शोभनवीर्य्योपेतं पुत्रादिकमस्माकम् "आ पवस्व" पवतिर्गत्यर्थः, आ प्रापय। किञ्च हे इन्दो! ग्रहेषु चमसेषु रक्षणशील सोम!

---

* "आयवः"—इति निघण्टौ मनुष्यनामसु सप्तदशं पदम् (२ ३)।

† ऋ० वे० ७, १, १, ५।

‡ 'मन्दमानः—शोध्यमानः तप्यमानो वा'—इति वि०।

"इह उ" इहैव* अस्मदीये यज्ञे "सु आगहि" सुष्ठु† आगच्छ ॥ ३ ॥ ४

अथ पञ्चमतृचे—प्रथमा ।

१२ २१२११ २ २
पवमानस्यतेवयम्पवित्रमभ्युन्दतः।

२ १ २र
सखित्वमावृणीमहे ॥ १ ॥ ‡

हे सोम ! "पवित्रम् अभ्युन्दतः" पवित्रमभिद्रयतः¶ "पवमानस्य" चरतस्व "ते" तव "सखित्वं" सख्यं वयम् अस्मदीयाः आङ्गिरसाः स्तोतारः "आ वृणीमहे" प्रार्थयामहे ॥ १ ॥

अथ द्वितीया ।

१२३१२२१ २ ३ १२ २१ २
येतेपवित्रमूर्मयोभिक्षरन्तिधारया।

१ २
तेभिर्नःसोममृडय ॥ २ ॥ §

हे सोम ! "ते" तव "ये" ऊर्म्मयः तरङ्गाः ‖ "पवित्र"

---

*,† 'उ, सु—इति द्वावपि पदपूरणौ,—इति वि० ।

‡ ऋ० वे० ७, १, १८, ४ ।

¶ 'अभ्युन्दतः—आर्द्र' कुर्वन्,—इति वि० ।

§ ऋ० वे० ७, १, १८, ५ ।

‖ 'ऊर्मयः—लहोयाः, सोमसङ्घाताः—इति वि० ।

"धारया" "अभि चरन्ति" तेभिः तैः ऊर्मिभिः "नः" अस्मान् "मृड्य" सुखय॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ २ ३ १ २ ३ १ २
सनःपुनानआभररयिंवीरवतीमिषम्।
१ २ ३ १ २
ईशानःसोमविश्वतः॥ ३ *॥ ५

हे सोम! "विश्वतः" सर्वस्य जगतः "ईशानः" ईश्वरः "सः" अभिषुतः "पुनानः" पूयमानः त्वं "नः" अस्मभ्यं "रयिं" धनं "वीरवतीं" पुत्राद्युपेतम् "इषम्" † तम् "आभर" आहर॥ ३॥ ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य प्रथमः खण्डः ‡॥ १॥

——000——

* ऋ० वे० ७, १, १९, १।

† 'इषं—इष्टिमन्नं वा—इति वि०।

‡ 'उक्तं वर्त्तिष्यमाणम्'—इति वि०।

अथ द्वितीयखण्डे *—

प्रथमतृचे—प्रथमा ।

३ २ ३ १ ३ १ २ ३ १ २
अग्निन्दूतंवृणीमहेहोतारंविश्ववेदसम् ।
३ २३१२ ३१२
अस्ययज्ञस्यसुक्रतुम् ॥ १ ॥ †

[ अग्नेर्दूतत्वमेतन्मन्त्रव्याख्याने तैत्तिरीयब्राह्मणे समाम्नायते—'अग्निर्देवानां दूत आसीदुशनाकाव्योऽसुराणाम्'—इति ] तादृशं देवं "दूतम्" अग्निम् अस्मिन् कर्म्मणि वृणीमहे भजामः । कीदृशं "होतारं" देवानामाह्वातारं "विश्ववेदसं" सर्वधनोपेतं [ बहुव्रीहौ विश्वं सञ्ज्ञायाम् ( ६, २, १०६ )"—इति पूर्वपदान्तोदात्तत्वम् ] "अस्य" प्रवर्त्तमानस्य यज्ञस्य निदानत्वेन "सुक्रतु" शोभन-कर्माणं शोभन-प्रज्ञं वा ॥ १ ॥

अथ द्वितीया ।

२ १ २ ३ १ २ ३ १ २ ३ १ २
अग्निमग्निंहवीमभिःसदाहवन्तविशपतिम् ।
३ १ २ ३ २
हव्यवाहम्पुरुप्रियम् ॥ २ ॥ ‡

---

* 'इदानीमाख्यानि'—इति वि० ।

† ऋ० ब्रा० १, ६, १, २ ( १भा० ८७ पृ० ) = ऋ० वे० १, १, २१, १ ।

‡ ऋ० वे० १, १, २१, २ ।

[ यद्यप्यग्निः स्वरूपेणैक एव तथापि प्रयोगभेदादाहवनीयादिस्थानभेदाद्वा बहुविधत्वमभिप्रेत्य ] "अग्निम्-अग्निम्"—इति वीप्सा तं "हवीमभिः" आह्वानकरणैर्मन्त्रैः "सदा हवन्त" निरन्तरमनुष्ठातार आह्वयन्ति *। कीदृशम्? "विश्पतिं" विशां प्रजानां होत्रादीनां पालकं "हव्यवाहं" यजमान-समर्पितस्य हविषः देवान् प्रति वोढारम् अतएव "पुरुप्रियं" बहूनां देवानां प्रीत्यास्पदम् ॥ [अग्निमग्निम्—"नित्यवीप्सयोः ( ८, १, ४ )"—इति वीप्सायां द्विर्भावः; "तस्य परमाम्रेडितम् ( ८, १,२ )"—इत्युत्तरस्य आम्रेडित-सञ्ज्ञायाम् "अनुदात्तञ्च ( ८, १, ३ )"—इत्यनुदात्तत्वम्। हवीमभिः—'ह्वेञ् स्पर्द्धायां शब्दे च ( भ्वा०, उभ० ); आह्वानकरणभूतेषु मन्त्रेषु स्वव्यापारस्वातन्त्र्यात् कर्त्तृत्वविवक्षया "अन्येभ्योऽपि दृश्यन्ते ( ३, २, ७५ )"—इति कर्त्तरि मनिन्; तस्य छान्दस ईडागमः; बहुलं छन्दसि ( ६, १, ३४ )"—इति धातोः सम्प्रसारणम्; परपूर्वत्वं; गुणावादेशौ; नित्त्वादाद्युदात्तत्वं ( ६, १, १९ )। सदा—"सर्वकान्येत्यादिना ( ५, ३, १५ )" सर्वशब्दाद्दाप्रत्ययः "सर्वस्य सोऽन्यतरस्याम् ( ५, ३, ६ )"—इति सभावः; व्यत्ययेनाद्युदात्तत्वम् ( ३, १, ८५ )। हवन्त—ह्वेञो लट् झस्य अन्तादेशः ( ७,१,३ ); टेरेभावश्छान्दसः ( ६, ४, ७६ ) अपि "बहुलं छन्दसि ( ६, १, ३४ )"—इति सम्प्रसारणम्; "तिङ-

* 'हवीमभिः—होतव्यैः सदा हवन्तः आह्वयन्तः; यानि होतव्यानि हवींषि, तैः पुरतोऽवस्थितैः सदाह्वयन्ते इति वि०।

तिङः ( ८, १, २८ )"—इति निघातः। विश्पतिं—"पत्यावैश्वर्ये ( ६, २, १८ )"—इति पूर्वपदप्रकृतिस्वरे प्राप्ते, "परादिश्छन्दसि ( ६, २, १९९ )"—इत्युत्तरपदाद्युदात्तत्वम्। हव्यवाहम्—'वह प्रापणे ( भ्वा०, उभ० ), "वहश्च ( ३, २, ६४ )" —इति ण्विप्रत्ययः ; कृदुत्तरप्रकृतिस्वरत्वम् ( ६, २, १३९ )। पुरूणां प्रियं—समासान्तोदात्तत्वम् ( ८, १, २२३ ) ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ २ ३ १ २
अग्ने देवाꣳ इहावह जज्ञानो वृक्तबर्हिषे ।
२ ३ १ २ ३ १ २
असि होता न ईड्यः ॥ ३ * ॥ ६ †

हे "अग्ने !" "जज्ञानः"‡ अरण्योरुत्पन्नः त्वं "वृक्तबर्हिषे" आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय । तं 'यजमान मनुग्रहीतुम् "इह" कर्मणि हविर्भुजो देवानावह—"नः" अस्मदर्थं "होता" देवानामाह्वाता त्वम् "ईड्योसि" स्तुत्यो भवसि ॥ ३ ॥ ६

द्वितीयतृचे¶—प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २
मित्रं वयꣳ हवामहे वरुणꣳ सोमपीतये ।
२ ३ २ ३ १ २
या जाता पूतदक्षसा ॥ १ ॥ §

* ऋ० वे० १, १, १२, ३ ।　　† "आग्नेय माज्यमुक्तम्"—इति वि० ।

‡ 'जज्ञानः—जायमानः, अथवा यजमानः'—इति वि० ।

¶ 'इदानीं मैत्रावरुणमुच्यते'—इति वि०　आज्यमिति शेषः ।

§ य० वे० ३३, ४६=ऋ० वे० १, २, ८, ४ ।

"वयम्" अनुष्ठातारः "सोमपीतये"* सोमपानार्थं [ "दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ] "मित्र" "वरुणं" च उभावाह्वयामः। कीदृशावुभौ? "या जाता" यौ जातौ सन्तौ प्रदेशं प्रादुर्भवन्तौ, "पूतदक्षसा" शुद्धबलौ †। [ पूञ् पवने ( क्र्या०, उभ० ); "निष्ठा (३, २, १०२ )"—इति क्तः, "श्र्युकः किति ( ७, २, ११ )"—इति इट् प्रतिषेधः। पूतं दक्षौ ययोस्तौ "बहुव्रीहौ प्रकृत्या ( ६, २, १ )"—इति पूर्वपद-प्रकृतिस्वरत्वम् ॥

"याजाता"-"जज्ञाना"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ऋतेनयावृतावृधावृतस्यज्योतिषस्पती।
२ ३ १२ २२
तामित्रावरुणाहुवे ॥ २ ‡ ॥

"यौ" मित्रावरुणौ "ऋतेन" सत्यवचनेन¶ यजमानानुग्रह-कारिणा "ऋतावृधौ" ऋतमवश्यम्भावितया सत्यं कर्मफलं तस्य वर्द्धकौ "ऋतस्य" सत्यस्य प्रशस्तस्य "ज्योतिषः" प्रकाशस्य "पती" पालकौ § [ श्रुत्यन्तरे मित्रावरुणयोरदिति-पुत्रत्वेन श्रुतत्वात्

* "मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः" —इति पा० ६। २। १५१।

† "पूतदक्षौ—पूतत्वेन दक्षत्वेन च सम्पन्नौ"—इति वि०।

‡ ऋ० वे० १, २, ८, ५।

¶ 'ऋतेन—यज्ञेन—इति वि०।

§ 'ज्योतिषः नक्षत्रजातस्य ज्योतिर्दीप्तिमतो वा पती'—इति वि०।

द्वादशादित्येष्वन्तर्भूतत्वेन ज्योतिषः पालकत्वं युक्तम्, श्रुत्यन्तरे च अष्टौ पुत्रासो अदितेरित्युपक्रम्य मित्रश्च वरुणश्चेत्यादिकमाम्नातम् तौ मित्रावरुणौ। तथाविधैर्मित्रावरुणैः "सुपां सुलुगिति (७, १, ३९) पूर्वसवर्णदीर्घ आकारः] "हुवे" आह्वयामि। [ह्वेञ आत्मनेपदोत्तमपुरुषैकवचने सम्प्रसारणे (६, १, ३४) पूर्वरूपत्वे च (६, १, १०८) "बहुलं छन्दसि (२, ४, ७३)"—इति शपोलुक्; टेरेत्वम् (३, ४, ३९); "गुणे प्राप्ते "क्ङिति च (१,१,५)"—इति प्रतिषेधः; उवङादेशः (६, ४, ७७); "तिङतिङः (८, १, २८)"—इति निघातः ॥ २ ॥

अथ तृतीया।

१ २　　३ १ २　　२ १र　　२र　　३ १ २
वरुणःप्राविताभुवन्मित्रोविश्वाभिरूतिभिः।

१ २　　३ १ २
करतान्नःसुराधसः ॥ ३ * ॥ ७

अयं "वरुणः" देवः अस्माकं "प्राविता भुवत्" प्रकर्षेण रक्षको भवतु। "मित्रः" च "विश्वाभिः ऊतिभिः" सर्वाभिः प्राविता भुवत्। तावुभावपि "नः" अस्मान् "सुराधसः" प्रभूतधनयुक्तान् "करतां" कुरुताम्। [डुकृञ् करणे (उभ०) भौवादिकः, लोटस्तस्, तसस्ताम्, अकर्त्तरि शप्, गुणोरपरत्वम्,

* ऋ० वे० १, १, ८, ६।

णप: पित्वादनुदात्तत्वम् ( ३, १, ४ ); तिङश्च लसार्वधातुक-स्वरेण ( ६, १, १८६ ) धातुस्वरं ( ६,१, १६२ ) शिष्यते ॥३॥ ७

इन्द्रमिद्गाथिन इति चतुर्ऋचं तृतीयं सूक्तम् *,

तत्र प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रमिद्गाथिनोबृहदिन्द्रमर्केभिरर्किणः।
२ ३ १ २
इन्द्रंवाणीरनूषत॥ १ † ॥

"गाथिन:" गीयमान-सामयुक्ता उद्गातारः "इन्द्रमित्" इन्द्रमेव "बृहत्" "त्वामिद्धिहवामहे ( ऋ० आ० ३, १, ५, २ )" —इत्यस्यामृच्युत्पन्नेन बृहन्नामकेन ( आ० गा० १, १, २७) साम्ना "अनूषत" स्तुतवन्तः। [णु स्तुतौ ( तु०, प० ); "णो नः ( ६, १, ६५ )"—इति नत्वम्; लुङि व्यत्ययेनात्मनेपदम् ( ३, १, ८५ ); झस्य अदादेशः ( ७, १, ५ ); सिच इड्भावः उकारस्य दीर्घत्वं छान्दसम् ( ६, १, १३३ ); धातोः कुटादित्वात् सिचो ङित्त्वेन ( १, २, १ ) गुणाभावः ( १, १, ५ ) ] "अर्किणः" अर्चन-हेतु-मन्त्रोपेता होतारः "अर्केभिः" उक्थ-रूपैर्मन्त्रैरनूषत। ये त्ववशिष्टा अध्वर्यवः ते "वाणीः" वाग्भिः" यजूरूपाभिः इन्द्रम् अनूषत [ अर्कस्य मन्त्रपरत्वं यास्केनोक्तम् ( ५, ४ ) 'अर्कोमन्त्रोयदनेनार्चन्तीति' ] ॥ १ ॥

* 'ऐन्द्रमाद्यमिदं'—इति वि०।

† छ० आ० ३, १, ९, ५ ( २भा० ४१० पृ० ) = ऋ० वे० १, १, १३, १।

अथ द्वितीया।

२ ३२उ ३ २ ३ १ २ ३१ २३१ २
इन्द्र इद्धर्य्योः सचा सम्मिश्ल आवचोयुजा।
१ २३१ २३ १ २
इन्द्रो वज्री हिरण्ययः ॥ २ * ॥

"इन्द्र इत्" इन्द्र एव "हर्य्योः" हरिनामकयोरश्वयोः "सचा" सह युगपत् "आ सम्मिश्लः" सर्वतः सम्यक् मिश्रयिता। कीदृशयोर्हर्य्योः ? "वचोयुजा" इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः। अयम् "इन्द्रः" "वज्री" वज्रयुक्तः "हिरण्ययः" सर्वाभरणभूषितइत्यर्थः ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २
इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च।
३१ ३१ २३ १ २
उग्र उग्राभिरूतिभिः ॥ ३ † ॥

हे "इन्द्र!" "उग्रः" शत्रुभिरप्रधृष्यः त्वम् "उग्राभिः" अप्रधृष्याभिः "ऊतिभिः" अस्मदुद्देश्यपरपक्षाभिः "वाजेषु" युद्धेषु "नः" अस्मान् "अव" रक्ष। तथा "सहस्रप्रधनेषु च" सहस्र-सङ्ख्याक-गजाश्वादि-लाभयुक्तेषु महायुद्धेष्वपि रक्ष ॥ ३ ॥

---

* छ० आ० प० १, २, २ (२भा० २६७ पृ०) = ऋ० वे० १, १, १३, २।

† छ० आ० प० १, २, ४ (२भा० २६८ पृ०) = ऋ० वे० १, १, १३, ३।

अथ चतुर्थी।

१ २ ३ २ ३ १ २ ३ १२ ३१ ३ १
इन्द्रोदीर्घायचक्षसआसूर्यंरोहयद्दिवि।

२उ ३ १ २
विगोभिरद्रिमैरयत्॥ ४ *॥ ८ †

अयम् "इन्द्रः" "दीर्घाय" प्रौढाय निरन्तराय "चक्षसे" दर्शनाय "दिवि" द्युलोके "सूर्यमारोहयत्" पुरा वृत्रासुरेण जगति यदापादितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिध्यर्थम् आदित्यं द्युलोके स्थापितवानित्यर्थः। स च सूर्यः "गोभिः" स्वकीय-रश्मिभिः "अद्रिम्" मेघम् "व्यैरयत्" विशेषेण दर्शनार्थं प्रेरितवान् प्रकाशितवानित्यर्थः [ अथवा इन्द्रएव "गोभिः" जलैर्निमित्तभूतैः "अद्रिं" मेघं "व्यैरयत्" विशेषेण प्रेरितवान्। पञ्चदश-सङ्ख्याकेषु रश्मि-नामसु 'खेदयः' (१) 'किरणाः' (२) 'गावः' (३)—इति पठन्ति ( निघ० १, ५ ); त्रिंशत्सङ्ख्याकेषु मेघनामसु 'अद्रिः'(१) 'ग्रावा'(२)—इति पठितम् ( निघ० १, १० ) ॥ ४ ॥ ८

---

* ऋ० वं० १, १, १३, ४।

† 'इदानीमैन्द्राग्नमाज्यम्'—इति वि०।

अथ तृचात्मके चतुर्थसूक्ते—

प्रथमा।

१ २ ३ १र २र ३ १ १ २ १र २र
इन्द्रे अग्नानमोबृहत्सुवृक्तिमेरयामहे।
२ १र २र ३ १ २
धियाधेनाअवस्यवः॥ १ *॥

"अवस्यवः" रक्षणकामाः वयम् "इन्द्रे" देवे "अग्ना" अग्नौ च "बृहत्" प्रबृहणं वर्द्धकं † "नमः" हविर्लक्षणमन्नं ‡ "सुवृक्तिं" सुप्रवृत्तां स्तुतिञ्च ¶ "आ ईरयामहे" प्रेरयामः। तथाच "धिया" कर्मणा युक्ता § "धेनाः" ‖ [ वाङ्नामैतत् (निघ० १, ११, ३८)] स्तुतिरूपा वाचश्च अभिप्रेरयामः॥ १॥

अथ द्वितीया।

१र २र ३ १ २ ३ १र १र ३ १ २
ताहिशश्वन्तईडतइत्थाविप्रासऊतये।
३ २ ३ १ २
सबाधोवाजसातये॥ २ **॥

---

* ऋ० वे० ५, ६, १७, ४।

† 'बृहत्—महत्'—इति वि०।

‡ 'नमः—नमस्कारम्'—इति वि०।

¶ 'सुवृक्तिं—शोभनां वृक्तिं वरणम्'—इति वि०।

§ 'धिया युक्ता'—इति वि०। "धीः'—इति कर्मनामसु निघण्टौ एकविंशतितमं पदम् (२, १)।

‖ 'धेनाः—धेट् पाने (भ्वा० प०), पानसमर्थाः'—इति वि०।

** ऋ० वे० ५, ६, १७, ५।

"ता हि" तौ खलु * इन्द्राग्नी "प्रयस्वन्तः" बहवः "विप्रासः" मेधाविनः जनाः "ऊतये" रक्षणाय "इत्थम्" अनेन प्रकारेण "ईडते" स्तुवन्ति। तथा "सबाधः" समानं परस्परं बाध्यमाना जनाः "वाजसातये" अन्नसातये अन्नलाभाय ताविन्द्राग्नी ईडते। यद्वा 'वाजसातिः'—इति सङ्ग्रामनाम (निघ० २, १७, ३६) सङ्ग्रामार्थम् ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २३ २३१२
तावाङ्गीर्भिर्विपन्यवःप्रयस्वन्तोहवामहे।

३१२ ३ १ २
मेधसातासनिष्यवः ॥ ३ † ॥ ९

"विपन्यवः" स्तोत्रमिच्छन्तः "प्रयस्वन्तः" हविर्लक्षणेनान्ने-नोपेताः ‡ "सनिष्यवः" सनिं धनमात्मन इच्छन्तः वयं "मेध-साता" मेधानां यागानां ¶ "सातौ" सम्भजने निमित्तभूते

---

* 'प्रीति यस्मादर्थे'—इति वि०।

† ऋ० वे० ५, ६, १०, ६।

‡ 'प्रयस्वन्तः—प्रकर्षेण यजमानान् प्रति गच्छन्तः'—इति वि०।

¶ "मेधः"—इति निघण्टौ यज्ञनामसु चतुर्थं पदम् (३, १७)।

सति हे इन्द्राग्नी ! "ता" तौ "वां" युवां "गीर्भिः" स्तुतिभिः "हवामहे" ॥

"विपन्यवः"-"विपन्यवे"—इति पाठौ ॥ ३ ॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य
द्वितीयः खण्डः * ॥ २ ॥

---

वृषापवस्वेति तृतीयखण्डे †—

प्रथमतृचे—प्रथमा ।

१ २   ३ १ २   ३ १ २   ३ १
वृषापवस्वधारयामरुत्वतेचमत्सरः ।

२ ३ १ २ ३ १ २
विश्वादधानओजसा ॥ १ ‡ ॥

हे सोम ! त्वं "वृषा" स्तोतॄणामभिमत-फलस्य वर्षकः सन् "धारया" त्वदीयया "पवस्व" द्रोणकलशमागच्छ [ पवतिर्गति-कर्मा ( निघ० २, १४, १०८ ) जागतस्त्वं यदा अस्माभिः इन्द्राय दीयसे तदा "मरुत्वते" सहाया मरुतो यस्य सन्ति तस्मै इन्द्राय "मत्सरः" मदकरश्च भव । कीदृशः ? "विश्वा" विश्वानि सर्वाणि व्याप्तानि वा धनानि "ओजसा" आत्मीयेन बलेन

---

* 'उक्तं प्रातःसवनम्'—इति वि० ।

† 'इदानीं माध्यन्दिनं सवनमभिधीयते'—इति वि० ।

‡ ऋ० आ० ५, २, ४, ३ ( २भा० १०४० ) ऋ० वे० ७, १, २, ४ ।

युक्तः सन् स्तोतृभ्यः तानि "दधानः" प्रयच्छंस्त्वं मादयिता भवेति समन्वयः ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ १ २ ३ १ २
तन्त्वाधर्त्तारमोण्योऽ३ऽव्यवमानस्वर्दृशम्।
३ १२ २२ ३ १ २
हिन्वेवाजेषुवाजिनम् ॥ २ * ॥

हे "पवमान" पूयमान पुनान वा सोम! "ओण्योः" [ द्यावापृथिवी नामैतत् ( निघ० ४, ३०, १५ ) ] तयोः "धर्त्तारं" धारकम् अतएव "स्वर्दृशं" सर्वस्य सूर्य्येव द्रष्टारं, सर्वैर्द्रष्टव्यं वा। "वाजिनं" बलवन्तं तं पूर्वोक्तगुणं प्रसिद्धञ्च "त्वा" त्वां "वाजेषु" सङ्ग्रामेषु त्वां प्रेरयामि [ यद्वा "वाजेषु" विषयेषु प्रेरयामि, अन्नादिकं प्रयच्छे त्यर्थः † ॥ २ ॥

अथ तृतीया।

१ २ ३ १ ३ २उ ३ १ २ ३ १ २
अयाचित्तोविपानयाहरिःपवस्वधारया।
२ ३ १ २
युजंवाजेषुचोदय ॥ ३ ‡ ॥ १० ¶

---

* ऋ० वे० ७, २, ३, १।

† 'वाजेषु—अन्नेषु। सङ्ग्रामेषा, अधिकरणभूतेषु। वाजिनं अन्नवन्तं वेगवन्तं वा'—इति वि०।

‡ ऋ० वे०७, २, ३, २।

¶ 'इह यौक्ताश्वं साम'—इति वि०। 'यौक्ताश्व-प्रभृतीनि सामानि तेषां नाम्नं वार्षप्रतिपत्तिः'—इति च वि०।

हे "पवमान" सोम ! "अया" * [ अय पय गतौ (भ्वा०, आ० ) पचाद्यच् ( ३, १, १३४ ), तृतीयाया आकारः ( ७, १, ३९ ) ] कर्मार्थमितस्ततो गच्छन्तीभिः "विपा" [ विप प्रेरणे (चु०, उभ० ) हवींष्यग्नौ प्रेरयन्तीति विपा अङ्गुलयः । एकवचनं छान्दसं प्रत्येक-विवक्षया वा ] एताभिर्मदीयाभिरङ्गुलिभिः "चितः" ज्ञातः निर्गतः अभिषुतः "हरिः" हरितवर्णः त्वं "धारया" सन्ततया "पवस्व" द्रोणकलशं प्रहाय गच्छ । किञ्च "युजं" † सखायम् इन्द्रं "वाजेषु" सङ्ग्रामेषु ‡ "चोदय" प्रेरय । यदास्माभिरिन्द्रार्थं सोमा दीयन्ते तदानीमिन्द्रः स्तुत्यानेन हृष्टः सन् शत्रून् हन्तीत्यर्थः ॥ ३ ॥ १०

॥ यौक्ताश्वम् ॥ औहोहोहायि । वृषा । पवस्वा३ धाराया३ । माहुत्वा२३४तायि । ओयि । चमा२३ । चमा२त्सा२३४राः । औहोहोहायि । विश्वा । दधा२ ना२३४ओ । जासा२३४औहोवा ॥(१) औहोहोहायि । तन्वा । धर्त्तारा३मोणायो३ः । पावा२मा २ ३ ४ ना ।

---

* 'अया—अनया धिया विश्वस्य पालयित्र्या'—इति वि० ।

† 'युजं—योक्तम्'—इति वि० ।

‡ 'वाजेषु—अन्नेषु'—इति वि० ।

ओयि । सुवा२३ । सुवा२हूं२३४याम् । औहोहोवा यि । हिन्वायि । वाजा२यिषू२३४वा । जायिना२३४ औहोवा ॥(२) औहोहोहायि । अया । चित्तोवी२पा नाया३ । हारा२यिः । पा२३४वा । ओ । स्वधा२३ । स्वधा२रा२३४या । औहोहोहायि । युजाम् । वाजा२यि षू२३४वो । दाया२३४औहोवा । ओयि । ज्वर आ(३) ॥ १८ * ॥ [१]

॥ सन्तनि ॥ वृषाहाउ । पावस्वधा३१उवा२३ । रा २३४या । मरुत्वतेचमत्सरा१ः । विश्वाहाउ । दाधान ओ३आउवा२३ । जा२३४सा ॥(१) तन्त्वाधर्त्तारमोण्योः पवमानस्वर्हृशा२३४५म् । हिन्वेहाउ । वाजेषुवा३ १उवा२३ । जा२३४यिनाम् ॥(२) अयाचित्तोविपानया

* ऊ० गा० १प्र० १अ० १८सा० ।

१ १ १र १११११ १ २ १र१ १
हरिःपवस्वधारयार२३४५। युजाऽइ्हाउ। वाजेषुयोऽ३वा

५
उवा२३। हा२३४या(३) ॥ १ * ॥ [२]

२र १ १ १ २ १ ५
॥ ऐडसौपर्णम् ॥ वृषापवोवा। स्वाधारार२३४या।

२ १ २ १ ० २ ५ १
मरुत्वताथि। चमाऽ२त्सा२३४राः। वा२यिश्वा। हा२

२ १ २र १ २ ४ ५ २ र १ २
३धा। नाचोजसा। औ३होवा ॥(१) तन्त्वाभर्तोवा।

१ २ २ ५ २१ २र१ ० ३ ५
रामोणा२३४योः। पवामाना। सुवा२र्द्दृ २ ३ ४ शाम्।

२ १ २र १ ४ ५
हा२यिन्वे। वा२३जायि। पूवाजिनाम्। औ३होवा॥(२)

२र १२ १ २ ३ ५ २१ २१
अयाचित्तोवा। वायिपाना२ ३ ४ या। हरायिःपवा।

० ३ ५ १ २ १ २र १
स्वधा२रा२३४या। यू२जाम्। वा२३जायि। पूचोदया।

२ ४ ५ ४
औ३होवा। होपुइ। डा(३) ॥ २ † ॥ [३]

१ २र १ २ १ २
॥ रोहितकुलीयोत्तरम् ॥ वृषापवस्वधा। रया२।

१ र२१ २ १ १ २ २
मरुत्वतेचमत्सा२३राः। वायिश्वा२दाधा२३। नओ२३४

* ऊ० गा० ४प्र० १ख० १सा०। † ऊ० गा० ४प्र० १ख० २सा०।

वा। जा५सोई्हायि ॥(१) तन्त्वाधर्त्तारमो। णियो
२ः। पवमानसुवर्ह्र २३शाम्। हायिन्वे२वाजार३यि।
षुवोर२३४वा। जा५यिनोई्हायि ॥(२) अयाचित्तोविपा।
नया२। हरिःपवस्वधारा२३या। यूजा२वाजा२३यि।
षुचोर२३४वा। दा५योई्हायि(३) ॥ २ * ॥[४]

॥ आमहीयवम् ॥ वृषोपा३वस्वधारया। महत्वा१
जा२यि। यमार३त्सरा:। विश्वादधा। नओर३जसा
उ। वा३ ॥(१) तन्त्वाधा३र्त्तारमोणियो:। पवामा१
ना२। सुवा२३हंशाम्। हिन्ववाजायि। षुवा २ ३
जिनाउ। वां३ ॥(२) अयाचा३यित्तोविपानया। हरा
यि:पा१वा२। स्वधा२३रया। युजंवाजायि। षुचोर२
३दयाउ। वा३। स्तौषे२३४५(३) ॥ १ † ॥ [५]

* ऊ० गा० ४प्र० १अ० ३सा०। † ऊ० गा० ६प्र० १अ० १सा०।

१र र २ र १
॥ हाविष्मतम् ॥ हाउवृषापवस्वधारयाहाउ। मरु
२ १ २ ३ ५ २ २
त्वताइयि। चामत्सार२३४राः। ऐ२हो१आ २ ३ यिही।
१ १ १ १र २ ५र र
विश्वादाइधा। नओ। जा २ सा २ ३ ४ औहोवा ॥(१)
२र र र र र १ र १ १ २
हाउतन्त्वाधर्त्तारमोण्योर्हाउ। पवमानाइ। सूवर्हं२३
५ २ २ १ २ २
४ग्राम्। ऐ२हो१आ२३यिही। हिन्वेवाइजायि। ष
१र ३ ५र र २र र र र
वा। जा२यिना२३४औहोवा ॥(२) हावयाचित्तोविपान
र १ ० १ २ ३ ५
याहाउ। हरिःपवाइ। स्वाधारा२३४या। ऐ२हो१आ
२ १ २ २ १र ३ ५र र
२३यिही। युजांवाइजायि। पृचो। दा२या२३४औहो
१ ३१११११
वा। हविष्मते२३४५(३) ॥ १ * ॥ [६]

२र र १ २
॥ यौक्ताश्वोत्तरम् ॥ वृषाऔहोहोहायि। पवा ३
१ र २ १ ३ ५ ३२ १
स्वाधा१रायाइ। मारुत्वा२३४तायि। चमाइ। ओयि।
० २ ५ २र र र १ २ १ ३
चमा२त्सा२३४राः। विश्वाऔहोहोहायि। दधा२ना

* ऊ० गा० ७प्र० १ख० १सा०।

२३४चो । जा२सा२३४औहोवा ॥(१) तन्त्वाऔहोहो

हायि । धर्त्ता३रामो१णायो३: । पावा२मा२ ३ ४ ना ।

सुवा३ । ओयि । सुवा२ई २ ३ ४ शाम् । हिन्वाऔहो

होहायि । वाजा२यिषू२३४वा । जा२यिना२३४औहो

वा ॥(२) अयाऔहोहोहायि । चित्ता३वायिपा१ना

या३ । हारा२यि:पा२३४वा । स्वधा३ । ओ । स्वधा

२रा२३४या । युजाऔहोहोहायि । वाजा२यिषू२३४

वो । दा २ या २ ३ ४ औहोवा । ओयि । जू २ ३ ४

वा(३) ॥ २ * ॥ [७]

॥ आजिगम् ॥ वृषापावा । स्वधाराया । मरुत्व

ते । चामत्सा२३रा: । विश्वादाधा । नओजा२३सा३

४३ ॥(१) तन्त्वाधार्त्ता । रमोणायो: । पवमान । स्व

* ऊ० गा० ७प्र० १ख० २गा० ।

१ २ १२ २
हुँ२३श्राम्। हिन्वेवाजायि। षुवाजार३यिना३४३म्॥(२)

१ २ १ २ १ २ १ २
अयाचायित्तो। विपानाया। हरिःपव। स्वाधा१रा२

२ १ २ १२ २ १
३या। युजांवाजायि। षुचोदा२३या३४३। ओ२३४५

ई। डा(३)॥ १४ * ॥ [८]

२ र र २ ४ ३ ४र ५
॥ स्वारसौपर्णम्॥ वृषापवस्वधारा३या। मरुत्वतेच

र १ ३ ५ १ २ २ १र
मा। ऊम्। त्सा२३४रा:। वायिश्वा३उवा। दधा।

२ १ ५ ४ ५ २ र र र
नओ२३४वा। जा५सोई्हायि॥(१) तन्त्वाधर्त्तारमोण्या

२ २ ४ ५र र १ ३ ५ १
३या३यो:। पवमानस्वा। ऊम्। हर२३४श्रास्। हायि

० २ र १र २ १ ५ ४ ५
न्वा३उवा। वाजे। षुवो२३४वा। जा५यिनोई्हायि॥(२)

१ र र र २ ३ ४ ३ ४ ५र १ ३
अयाचित्तोविपाना३या। हरिःपवस्वधा। ऊम्। रा२

५ १ २ २ र १र २ १ ५ ४
३४या। यूजा ३ उवा। वाजे। षुचो२३४वा। दा५

५
योई्हायि(३)॥ १५ † ॥ [९]

* ऊ० गा० ११प्र० २अ० १४सा०। † ऊ० गा० ११प्र० २अ० १५सा०।

॥ सुरूपोत्तरम् ॥ वृषापवौहो२। इया। स्वधारा या२। मरुत्वतौहो२। इया। चमत्सारा२ः। विश्वा दधौहो२। इया। नओजा२३सा३४३॥(१) तन्त्वा धत्ताहो२। इया। रमोणाये२ः। पवमानौहो२। इया। सुवर्दृशा२म्। हिन्वेवाजौहो२। इया। षु वाजा२३यिना३४३म्॥(२) अयाचित्तौहो२। इया। विपानाया२। हरिःपवौहो२। इया। स्वधाराया२। युजंवाजौहो२। इया। षुचोदा२३या३४३। श्रो२३ ४५ई। डा(३)॥१८*॥[१०]

॥ ऋषभःपावमानम् ॥ हाहाउवृषापवा। हा३। हा ३यि। स्वाधा२रा२३४या। मरुत्वतेचमा१त्सा३राः। विश्वादा२३४धा। ओमो३। नओवा। जा५सोईहा

* ऊ० गा० १८प्र० १ख० १८गा०

बि॥(१) रामो२णा२३४यो:। पवमानस्तुवा१ह२श्राम्।
हिन्ववा२३४जायि। ओमो३। षुवोवा। आपुयिनो६
हायिं॥(२) हाहावयाचित्ताः। हा३। हा३यि। वा
यिपा२ना२३४या। हरिःपवस्वधा१राया। युजवा२३४
जायि। ओमो३। षुचोवा। दापुयो६हायि(३)॥१८*॥[११]

॥ हरिश्रीनिधनम्॥ वृषापवस्वधारया। वृषापवा।
स्वधारया२। मरुत्वतेचमाहो२। स्मारा२३ः। हाउ
वा। विश्वादा२३धा। नओ। जा२सा२३४औहोवा॥(१)
तन्त्वाधर्त्तारमोणियोः। तन्त्वाधर्त्ता। रमोणियो२ः।
पवमानस्तुवाहो२। हश्रा२३म्। हाउवा। हिन्वेवा
२३जायि। षुवा। जा२यि। ना२३४औहोवा॥(२) अ
याचित्तोविपानया। अयाचित्ताः। विपानया२। हरिः

* ऊ० गा० १८प्र० १अ० १९मा०।

२ १ १ २ऽ १ २
पवस्वधाहो२। राया२३। हाउवा। युजांवा२३जा
१र ३ ५ र २ १ १ १
यि। षुचो। दा२या२३४औहोवा। हरीश्औ२३
१ १
४५:(३)॥ १ *॥ [१२]

१२र १ २ १र र २ १
॥ गौषूक्तम्॥ वृषापवस्वधौ। हौहोवाहायि। रया।
२ १ १ १
मरुत्वतेचमौ२। ऊवायि। ऊवा२यि। त्सारा२ः। वि
र र २ १ १
श्वादधानऔ२। ऊवायि। ऊवा२यि। जासा२३।
१ ३ ५र र १ र २ १र २ १र र
हो२वा२३४औहोवा॥(१) तन्त्वाधर्त्तारमौ। हौहोवा
२ १ र २ १
हायि। णियोः। पवमानस्वौ२। ऊवायि। ऊवा२
१ १ र र र २ १
यि। दृशा२म। हिन्वेवाजेषुवौ२। ऊवायि। ऊवा
१ १ ३ ५र र २ १र
२यि। जासा२३। हो२वा२३४औहोवा॥(२) अया
२ १र २ १र र २ १ २
चित्तोविपौ। हौहोवाहायि। नया। हरिःपवस्वधौ
१ १ १ र र २
२। ऊवायि। ऊवा२यि। राया२। युजंवाजेषु

* ऊ० गा० २०प्र० १ख० १सा०।

चौ२ । ऊवायि । ऊवा२यि । दाया२३ । हा२वा२३४औहोवा । अग्निराऊंता२३४५ः(३) ॥ ८ * ॥ [१३]

॥ आकलम् ॥ वृषापवा२स्वधारया । मरुत्वतेचमत्सा२३राः । वायिश्वा२ । दाधानओ२३ । ऊम् । जा३४५ सोईहायि ॥(१) तन्त्वाधर्त्ता२रमोणियोः । पवमानसुवहृ२३शाम् । हायिन्वे२ । वाजेषुवा२३ । ऊम् । जा३४५यिनाईहायि ॥(२) अयाचित्ता२विपानया । हरिःपवस्वधारा२३या । यूजा२म् । वाजेषुचो२३ । ऊम् । दा३४३योईहायि(३) ॥ १० † ॥ [१४] १०

अथ द्वितीयतृचे—प्रथमा ।

वृषाशोणोअभिकनिक्रदद्गा
नदयन्नेषिपृथिवीमुतद्याम् ।

* ऊ० गा० २१प्र० २ख० ६सा० ।　　† ऊ० गा० २०प्र० २ख० १०सा० ।

१ २ ३ १र २र २ १
इन्द्रस्येववग्नुराशृण्वआजौ

१२ १२ ३ १ ३ १
प्रचोदयन्नर्षसिवाचमेमाम् ॥ १ * ॥

"शोणः" शोणवर्णः † "वृषा" कश्चिद् वृषभः "गाः" पशून् "अभि" लक्ष्य "कनिक्रदत्" ‡ शब्दं करोति [ एवं "गाः" स्तुतीः "अभि कनिक्रदत्" अभिशब्दायमानः ]। तदेवाह— "नदयन्" शब्दमुत्पादयन् हे सोम ! त्वं "पृथिवीम्" "उत" अपिच "द्याम्" एतौ लोकौ "एषि" गच्छसि। किञ्च "वग्नुः" [ वग्नु वाङ्नामैतत् ( निघ० १, ११, २५ ) तस्य ] वाक्सु शब्दः "आजौ" सङ्ग्रामे "इन्द्रस्येव" इन्द्रशब्द इव "शृण्वे" सर्वैः श्रूयते। ततः "प्रचेतयन्" आत्मानं सर्वेषां प्रज्ञापयन् "इमां" "वाचम्" "अर्षसि" समन्तादागमयसि उच्चैः शब्दायत इत्यर्थः ॥ १ ॥

अथ द्वितीया ।

३२ ३ १२ ३ १ २
रसाय्यःपयसापिन्वमान

३ १ २ ३ १ २ ३ ३ २
ईरयन्नेषिमधुमन्तमꣳशुम् ।

---

* ऋ० वे० ७, ४, १३, १। † 'शोणः—बभ्रुवर्णः'—इति वि०।

‡ "दाधर्त्ति-दर्द्धर्त्ति-दर्द्धर्षि-बोभूतु-तेतिक्ते-ऽलर्ष्या-ऽऽपनीफणत्-संसनिष्यदत्-करिक्रत्-कनिक्रदद्-भरिभ्रद्-दविध्वतो-दविद्युतत्-तरित्रतः—सरीसृपतं—वरीवृजत्-मर्मृज्या-ऽऽगनीगन्तीति च (७, ४, ६५)"—इति पाणिनिस्मरणात् शब्दे लुङि यङ्लुक्

१ १  ३ १ २  ३ १
पवमानसन्तनिमेषिकृण्व
१२  ३ १ १
न्निन्द्रायसोमपरिषिच्यमानः ॥ २ * ॥

हे सोम ! "रसाय्यः" [ रसेरौणादिक आय्य-प्रत्ययः (उ०, ३, ९६ ) ] आस्वाद्यः † "पयसा" "पिन्वमानः" क्षरंस्त्वम् "ईरयन्" "मधुमन्तं" माधुर्य्योपेतम् "अंशुम्" रसभावम् "एषि" प्राप्नोषि ["अंशुमष्टमात्रो भवति"—इति यास्कः ( निरु० , ) ]। अनेन सोमरसोऽभिधीयते। किञ्च हे सोम। "परिषिच्यमानः" अद्भिः परिषिक्तो भवंस्त्वं "पवमानः" पवित्रे पूयमानः सन् "सन्तनिं" [ तनु विस्तारे ( त०, प० ) इ-प्रत्ययः ] सन्ततां धारां "कृण्वन्" कुर्वन् "इन्द्राय" इन्द्रार्थम् "एषि" गच्छसि ॥ २ ॥

अथ तृतीया।

२ १ २  ३ १२ १२
एवापवस्वमदिरोमदायो
३ १ २ ३१ २  ३२
दग्राभस्यनमयन्वधस्नुम्।
१ १ २ ३ १ २  ३ १ २
परिवर्णम्भरमाणोरुशन्तं
३ १ २  १ १ २  ३ २
गव्युर्नोअर्षपरिसोमसिक्तः ॥ ३ * ॥ ११

---

द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च। लुङ् चात्र "छन्दसि लुङ्-लङ्-लिटः (३, ४, ६ )"—इति धात्वर्थ-सम्बन्धमात्रे सार्वकालिकः।

* ऋ० वे० ७, ४, १३, ४।  † 'रसाय्यः—रसवान्'—इति वि०।

‡ ऋ० वे० ७, ४, १३, ४।

हे सोम! "मदिरः" मदकरः त्वम् "उदग्राभस्य" * [ "क्रिया ग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदानसञ्ज्ञा। चतुर्थ्यर्थे बहुलमिति षष्ठी ] उदग्राभम् उदकग्राहिणं मेघं "नमयन्" हृष्टार्थं प्रह्वीकुर्वन्। कीदृशम्? "वधस्नुम्"† हननवधेन प्रस्रवन्तम् "मदाय" मदार्थमेव "पवस्व" पात्रेषु चर। किञ्च "रुशन्तम्" आरोचमानं श्वेतं "वस्त्रं" "परि भरमाणः" परितो बिभ्रत् "सिक्तः" पवित्रे सिच्यमानः त्वं "गव्युः" अस्माकं गा इच्छन् "पर्येषि" परिगच्छ॥

"वधस्नुं"-"वधस्नैः"—इति पाठौ। ३ ॥ ११

१र २र३ २ १ २ २
॥ इन्द्रवदासिष्ठम्॥ औहोवाहा३ होयि। इन्द्रा।

१र र २ १ २ ३ ४ ५ २ १ २
वृषाभोणो। अभिक। निक्रदङ्गाः। नदयन्नायि। यो

१ २ ३ ४ ५ २ १ र २ १ र १ २
३ पृथि। वीमुतद्याम्। इन्द्रस्येवा। वग्नुरा। शृण्व

४ ५ १ १र २ १ २ २ ४
आजाउ। प्रचोदयान्। अर्षसि। वा३४३। चा३मा

२ १र २ १ र २ ३ ४
५ यिमा ६५६म्॥(१) रसायियाः। पयसा। पिन्वमा

५ २र १ २ १ २ ३ ४ ५ १ १ र
नाः। ईरयन्नायिषो३मधु। मन्तमꣳशूम्। पवमाना।

---

* 'उदग्राभस्य—उदक-सङ्घातस्य वधस्नुम्, उदकसङ्घातस्य वधः येन क्रियते भवति परिवर्त्तः सोमेन स वधस्नुः'—इति वि०।

† मन्त्रे तु प्रायो वधोऽन्त्यस्य वकारादिर्दृश्यते।

२ १ २ ३ ४ ५ २ १र २ १ १
सन्तनिम्। एषिक्रण्वान्। इन्द्रायसो। मा३परि। षा

२ ४ २र १र १
३४३यि। च्या३मा५ना६५६:॥(२) एवापवा। स्वा३

१ २ ३ ४ ५ २ १ र २ १ २ र २
मदि। रोमदाया। उदग्राभा। स्या३नम। यन्वध

५ २ १ २ १ र २ ३ ४ ५ १ १र
स्नुम्। परिवर्णाम्। भरमा। णोरुशन्ताम्। औहो

३ २ १ ३ २ १ र २ १ ४
वा३हा३होयि। इहा। गव्युर्नौआ। षा३परि। सो३

२ ४
४३। मा५सा५यिक्ता६५६:(३)॥ २ *॥ [१]

२ १ २ र १र २ १
॥ पार्थम्॥ ओ३हो३होयि। वृषाशोणो। अभिक।

१ २ ४ ५ २ १ २ १ १ ३ ४ ५
निक्रदद्गाः। नदयन्नायि। षो३पृथि। वीमुतद्याम्।

२ १र २ १ र २ १ ४ ५ २ र १ २
इन्द्रस्येवा। वग्नुरा। शृण्वआजाउ। प्रचोदयान्। अ

१ १ २ ४ २ र १
र्षसि। वा३४३। चा३मा५यिमा६५६म्॥(१) रसायि

२ १ र १ ३ ४ ५ १र १ २ १
याः। पयसा। पिन्वमानाः। ईरयन्नायि। षो३मधु।

२ ३ ४ ५ १ १र २ १ १ ३ ४ ५
मन्तमꣳशूम्। पवमाना। सन्तनिम्। एषिक्रण्वान्।

---

* ऊ० गा० २प्र० १ख० ९सा०।

१२ १ २ १ २ २ ४
इन्द्रायसो। माऽपरि। षा३४३यि। च्या३मा५नाई

२२ २ १ २ १ २ ३ ४ ५ २
५ई: ॥(२) एवापवा। स्वा३मदि। रोमक्षया। उद

१२ २ १ २ ३ ५ २ १ २१
ग्राभा। स्था३नम। यन्वधक्नूम्। परिवणाम्। भर

२ २ ३ ४ ५ २ २ २ १२
मा। णोरूश्रताम्। ओ ३ हो ३ दोयि। गव्युर्नोश्रा।

२ १ २ २ ४
षा३परि। सो३४३। मा३सा५यिक्ता५ई५ई:(३) ॥ ६* ॥[२]११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य
तृतीय: खण्ड: † ॥ ३ ॥

---

अथ चतुर्थखण्डे ‡ प्रगाथरूपे —

प्रथमसूक्ते—प्रथमा।

१२ १२ २ १ १२ ३ १ १
त्वामिद्धिहवामहेसातौवाजस्यकारव:।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
त्वांवृत्रेष्विन्द्रमत्पतिन्नरस्त्वाङ्काष्ठास्ववंत: ॥ १ ¶ ॥

---

* ऊ० गा० ७प्र० १ख० ६सा०।

† "उक्त्ने माध्यन्दिन:"—इति वि०।

‡ 'या ज्योतिष्टोमे देवता परिभाषा साम्नां सैवात्रापि"—इति वि०।

¶ छ० आ० ३, १, ५, २ (१भा० ४८१ पृ० )=ऋ० वे० ६, ७, ११, १।

"कारवः" स्तोतारो वयं "वाजस्य" अन्नस्य "सातौ" सम्भजने निमित्तभूते सति, हे "इन्द्र!" "त्वाम् इत् हि" त्वामेव "हवामहे" स्तुतिभिराह्वयामहे। हे इन्द्र! "सत्पतिं" सतां पालयितारं श्रेष्ठं त्वां "नरः" अन्येऽपि मनुष्याः "वृत्रेषु" आवरकेषु शत्रुषु सत्सु "हवन्ते" आह्वयन्ति, तज्जयार्थम्। अपिच "अर्वतः" अश्वस्य सम्बन्धिनीषु "काष्ठासु" यथा अश्वः क्रान्त्वा तिष्ठति तासु "काष्ठासु" सङ्ग्रामेषु युद्धकामाश्च त्वामेवाह्वयन्ति, अतो वयं त्वामेवाह्वयाम इत्यर्थः॥

"सातौ"-"साता"—इति पाठौ॥ १॥

अथ द्वितीया।

१र२र　　३ २ ३ १ २ ३ १ २
सत्वन्नश्चित्रवज्रहस्तधृष्णुया महस्तवानो अद्रिवः।

१　१र ३ १र　२ १ २　३ १२　२ ३ ३ १ २
गामश्वꣳ रथ्यमिन्द्र सङ्किर सत्रा वाजन्न जिग्युषे॥२*॥ १२

हे "चित्र" चायनीय! "वज्रहस्त" वज्रबाहो! "अद्रिवः" वज्रवत्† [यद्वा आदृणात्यनेनेत्यद्रिरशनिस्तद्वत्] एवम्भूत हे इन्द्र! "धृष्णुया" धृष्णुः शत्रूणां धर्षयिता‡ "महः" महान्

---

* ऋ० वे० ४, ७, २७, २।

† 'अद्रिवः—वज्रवन्। अथवा अद्रय पर्वताः। अथवा अभिषवपाषाण। ते अद्रिव'—इति वि०। अत्र "मतुवसो रु सम्बुद्धौ छन्दसि (८, ३, १)"—इति रुत्वम्।

‡ 'धृष्णुया—धारणशीलया बुद्ध्या प्रज्ञया वा—इति वि०।

स तादृशस्त्वं "स्तवानः" अस्माभिः स्तूयमानः सन् "गाम्" "रथ्य" रथवाहम् "अश्वं" च "सं किर" सम्यक् प्रयच्छ। "जिग्युषे" जितवते पुरुषाय भोगार्थं "सत्रा" महत् प्रभूतं * "वाजं न" अश्वमिव यथा शत्रून् जितवते भोगार्थं बहु प्रयच्छसि तद्वत् † ॥ २ ॥ १२

॥ वारवन्तीयम् ॥ तुवामिद्धाऔहोहायि। हावामा२३४हायि। सातौवाजस्यकारावो२३४हायि। त्वांवृत्रेषि न्द्रसत्पतिन्ना३४। औहोवा। हुहा२३४हायि। उक्ष्वा२३४राः। तुवाङ्का। ष्ठासुअर्वा३४। औहोवा। हुहा२३४हायि। औहो३१२३४। ताः। एहियाईहा। (१) तुवाङ्काऔहोहायि। सूअर्वा२३४ताः। सत्वान्ना२३४हायि। चित्रवज्रहस्तधृष्णा३४। औहोवा। हुहा२३४हायि। उक्ष्वा२३४या। महस्त। वानोअद्रा३४।

* 'सत्रा—सदा'—इति वि०।

† 'वाजम्—अन्नम्। न जिग्युषे—न शब्द उपमार्थीयः, यथा जिग्युषे; गमनशीलाय वणिजि यथा धनमुत्पद्यते महत् त्वमस्मासु देहीत्यर्थः।

१र ४र ५ १ २ ५ १र १
औहोवा। इहा२३४हायि। औहो३१२३४। वाः।
५र ५ २ र र १ २ १
एहियाइहा ॥(२) महस्तवाऔहोहायि। नोअद्रा२३४
५ २र १ ५ १ १
यिवाः। गामाश्वा२३४औहायि। रथियमिन्द्रसङ्का३४।
२र ४र ५ १ २ ५ २ ३ र २ १र २र
औहोवा। इहा२३४हायि। उऋवा२३४रा। सत्रावा।
१ ० २ २र ४र ५ १ २ ५ २र २
जानजिग्यू३४। औहोवा। इहा२३४हायि। औहो
५र ५ ४
३१२३४। षायि। एहियाइहा। होए५इ। डा(३) ॥१२*॥[१]

२र र र १ १ २
॥ कण्वबृहत् ॥ औहोतुवामिद्धा३ए। हवामा१हो
२र २ १ र १र र २ २
२३४यि। हाहोयि। सातौवाजस्यकारवः। तुवांवा१
१र २ १ २ १ २
चा२३४। हाहोयि। षूइन्द्रसत्। पतायिन्ना१रा२३४ः।
२र २ १ २ २र २ १ १ १
हाहोयि। तुवाङ्का१ष्ठा२३४। हाहो। सुआ३। वा
५ ५ २र र र र
२३४ताः। उऋवाइहाउ। वा ॥(१) औहोतुवाङ्काष्ठा
२ १ २ २र २ १ १
३ए। सुआवा१ता२३४ः। हाहोयि। सात्वन्नश्चि। त्र

* ऊ० गा० २२प्र० १अ० १३सा०।

१ २ ३र २ १ १ ३र २
वाजा१हा२३४। हाहो। स्तधाष्णू१या२३४। हाहो

१ २ ३र २ ३र १ १
यि। महास्ता१वा२३४। हाहो। नोआ३। द्वा२३४

५ ५ ३र र २
यिवाः। उडुवा६हाउ। वा॥(२) औहोमहस्तवां३१।

र १ १ ३र २ १ १ १
बोआद्रा१यिवा२३४ः। हाहोयि। गामश्रुवम्। रथा

२ ३र २ १ २ ३र
यिया१मा२३४। हाहोयि। इन्द्रा१यिरा२३४। हा

२ १ २ ३र २ ३ २ १
होयि। सत्रावा१जा२३४म्। हाहो। नजा३यि। ग्यू

५ ५
२३४षायि। उडुवा६हाउ। वा(३)॥१७*॥[२]१२

अथ द्वितीयसूक्ते प्रगाथे—

प्रथमा।

२ ३र ३र ३ १ १ ३ १ २ ३ १ २ ३ २
अभिप्रवःसुराधसमिन्द्रमर्च्चयथाविदे।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
योजरितृभ्योमघवापुरूवसुस्सहस्रेणेवशिक्षति॥१ †॥

"पुरूवसुः" पश्चादिबहुधनोपेतः, यज्ञबाहुल्यात् बहुनि वासको वा "मघवा" धनवान् "यः" इन्द्रः "जरितृभ्यः"

---

* ऊ० गा० २२प्र० १ख० १७सा०।

† ऋ० आ० ३, १, ५, २ (१भा० ४८१ पृ०)=ऋ० सं० ६, ४, १४, १।

स्तोतृभ्यः अस्मभ्यं "सहस्रेणेव" सहस्रसङ्ख्याकेन धनेनेव "शिक्षति" [ शिक्षतिर्दानकर्मा ( निघं० ३, २०,८ ) ], पश्वादि-बहु-धनम् अस्मभ्यं प्रयच्छतीत्यर्थः। स इन्द्रः "यथाविदे" यथा-स्माभिर्विज्ञायते तथा हे ऋत्विजः! "वः" यूयं "सुराधसं" शोभनधनोपेतम् "इन्द्रम्" ऐश्वर्य्ययुक्तं देवम् "अभि" आभि-मुख्येन "प्र अर्च" प्रकर्षेणार्चत ॥ १ ॥

अथ द्वितीया।

३ १ २ ३१ २ ३ १ २र ३ १ ३ २ ३ १ २

शतानीकेवप्रजिगातिधृष्णुयाहन्तिवृत्राणिदाशुषे।

३ १ २ ३ १र २र २ १ २ ३ १ २

गिरेरिवप्ररसाअस्यपिन्विरेदत्राणिपुरुभोजसः ॥ २* ॥१३†

"धृष्णुया" ‡ धृष्णुः धर्षणशीलः पुरुषः "शतानीकेव" यथा शतसङ्ख्याकानि शत्रुसैन्यानि "प्रजिगाति" जयार्थं प्रक-र्षेण गच्छति, तद्वत्; इन्द्रः "दाशुषे" यजमानार्थं "वृत्राणि" यज्ञविघातकान् शत्रून् प्र जिगाति ततस्तान् "हन्ति"। किञ्च "पुरुभोजसः" बहुधनस्य "अस्य" इन्द्रस्य सम्बन्धीनि "दत्राणि" दत्तानि धनानि "प्र पिन्विरे" यजमानार्थं प्रकर्षेण वर्त्तन्ते। तत्र दृष्टान्तः—"गिरेरिव" यथा गिरेः सकाशात् "रसाः" उदकानि पिन्विरे प्रवर्त्तन्ते तद्वत् ॥ २ ॥ १३

---

* ऋ० वे० ६, ४, १४, २।

† 'वामदेव्यं', मैत्रावरुणं साम। श्रैत्यं, अच्छसामं--इति वि०।

‡ 'धृष्णुया—धारणस्वभावया'—इति वि०।

४ २ ४ ५ र २ २ ३र ४र ५
॥ स्तोत्रम् ॥ अभिप्रवःसुरा। धसा ३ ४ औहोवा।

१ २ १ ० ५ ५ १र २
आयिन्द्रमर्चं। यथाविदा२३४यि। ओ६हा। योजरि

१ २ १ २ १ ३ ५ २ १ र
तृभ्यः। माघा२३वा। पुरूरे। वा२३४सूः। सहस्रेणा

२ २ १ ३ ५र र
यिवा३शा। ऊम्मायि। त्वा२ता २ ३ ४ औहोवा॥(१)

४ २ र ४र५ ३ ३ ३र ४र ५ १ २र र १
सहस्रेणेवशि। क्षता३४औहोवा। सहस्रेणे। वशा

० ५ ५ २ १र र २र १
यिचता२३४यि। ओ६हा। शतानीकेव। प्राजा२ ३

२ १ ३ ५ १ २ २
यिगा। तिधार। षा२ ३ ४ या। इन्तिवृत्राणी२दा।

१ ३ ५र र ३ ४ ३र ४ ५र
ऊम्मायि। पृ२षा२३४औहोवा॥(२) हतिवृत्राणिदा।

२ २ ३र ४र ५ १ २ र १ ०
शुषा३४औहोवा। हान्तिवृत्रा। णिदाशुषा२ ३ ४ यि।

५ ५ २ १र २ १ २ १
ओ६हा। गिरेरिवप्र। रासा२३आ। स्यपा२ यि।

३ ५ १र २ २ १
न्वा२३४यिरायि। दत्राणिपूरू३भो। ऊम्मायि। जा२

३ ५र र २ ५
सा२३४औचोवा। वा२३४सू(३)॥ २*॥ [१]

---

* ऊ० गा० २प्र० १अ० ३सा०।

॥ अभीवर्त्तः ॥ अभा३यिप्रा ३ वः सुराधसोवा । या यिन्द्रमर्च । यथावा १ यिदा २यि । योजरितृ३१२३४ । भ्योमघवा । पुरूवा१स्व २ः । सहस्रे १णा २यि । वंशा ३यि । चा२३४५ । जा२३४५यि ॥ १) सहस्रे १णो३ व शिक्षतोवा । सात्वमेणे । वधायिता१ता २यि । भ्राता नीका३१२३४यि । वप्रंजिगा । तिधार्णू१या २ । छन्ता यिवा१र्वा २ । णिद्रा ३ । धू२३४५ । षा२३४५यि ॥(२) छन्ता३यिवा३र्वाणिद्राधृषोवा । हान्तिवृत्रा । णिद्र।धृ १षा २यि । गायिरे २वा३१२३४ । प्ररमात्र । स्यपायिन्वा १ यिरा २यि । दक्षाणा१यिपृ २ । हभो ३ । जा२३४५ । सा२३४५ः (३) ॥ १ ॥ [२]

॥ ध्यैनौधसम् ॥ अभिप्रवः सुरा । धमा३४ओहोवा ।

ऊ० गा० ७प्र० १ ख० ७सा० ।

१ १ १ ० ५ ५ ८
आयिन्द्रमवँ । यथाविदा२३४यि । ओ६हा । यो२३

२ १ २ १२ १ १२ ३ ५ १
जा । रीतृभ्यः । मघ । वा । पूरूवा२३४सूः । सा२३

२ १ ८२ १ ५ ३ ५ ४ ३८ ४८५
हा । सेणेवश्रो२३वा । श्रा२३४ती ॥(१) सहस्रेणे वज्रि ।

३ २ ३८ ४८ ५ १ १८ ८ १ ०
णता३४औहोवा । सहस्रेणे । वश्चायिणता २ ३ ४ यि ।

५ ५ १ २ १८ २ १ २ १
ओ६हा । श्रा२३ता । नीकेव । प्रजि । गा । तायि

२ २ ५ १ २ १ ८ २ २ ५
भाष्णु२३४या । हा२३न्तायि । वार्त्राणिदो२ ३ ४ वा ।

३ ५ ३ ४ ३८ ४ ५८ ३ २ ३८ ४८ ५
धृ२३४षे ॥(२) हन्तिवृत्राणिदा । धृषा ३ ४ औहोवा ।

१ १८ १ ० ५ ५ १
हान्तिवृत्रा । णिदाधृषा२३४यि । ओ६हा । गा२३यि

२ १ २ १ २ १ २ २ ५
रेः । आयिव । प्रर । साः । आ । स्यापिन्या२ ३ ४ यिरा

१ २ १ २ १ ५ २
यि । दा२३वा । णायिपुरुभो २ ३ ४ वा । जा २ ३ ४

५
साः(३) ॥ ११ * ॥ [३]

२ १ २ ५८
॥ वाङ्निधनं क्रौञ्चम् ॥ अभायिप्रावा३१२३४ः । सुरा ।

* ऊ० गा० २प्र० १अ० ११सा० ।

धसा३म्। इन्द्रमर्चा३१२३४। यथा। विदा३यि। योजा

रिनू३१२३४। भ्योमघवापुरू। वसू३:। सहस्रे णा३

१२३यि। वशा५यिचताउ ॥(१) सहस्रे णा३१२३४यि।

वय्रि। चता३यि। सहस्रे णा३१२३४यि। वय्रि। चता

३यि। शतानीका३१२३४यि। वप्रजिगातिधृ। ष्णु या

३। हन्तायिवार्त्रा३१२३। णिदा५प्रुषाउ ॥(२) हन्ता

यिवात्रा३१२३४। णि। दा। प्रुषा३यि। हन्तिवृत्रा

३१२३४। णिदा। प्रुषा३यि। गिरेरायिवा३१२३४।

प्ररसाअस्यपि। न्विरा३यिदत्राणायिपू३१२३। रुभो५ज

साउ। वा ॥(३) ॥ १५ ॥ [४] १३

---

* ऊ० गा० २१प्र० १ ख० ५सा०।

अथ तृतीयप्रगाथे—

प्रथमा ।

२ ३१२ २२ ३ १ २
त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
१ २ ३ १ २ ३२ ३१ ३१२ ३१२
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमागहि ॥ १* ॥

हे "वज्रिन्" वज्रवन्निन्द्र ! यं "त्वाम्" "भूर्णयः" हविर्भरणशीलाः "नरः" कर्मणां नेतारो यजमानाः "इदा" अद्य "ह्यः" पूर्वेद्युश्च "अपीप्यन्" सोममपाययन्। हे इन्द्र ! "सः" त्वं "स्तोमवाहसः" स्तोत्रवाहकस्य मम स्तोत्रम् "इह" यज्ञे "श्रुधि" शृणु "स्वसरं" गृहञ्च [ "दुर्याः"(८) "स्वसराणि"(१०)—इति ( निघ० ३, ४ ) गृहनामसु पाठात् ] "उपागहि" उपागच्छ ॥

"स्तोमवाहसः"—इति छन्दोगाः, "स्तोमवाहसाम्"†—इति बह्वृचाः ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २
मत्स्वा सुशिप्रिन्हरिवस्तमीमहे त्वया भूषन्ति वेधसः ।
२ ३ १ २ ३ १ २ २ १ २
तव श्रवांस्युपमान्युक्थ्य सुतेष्विन्द्र गिर्वणः ॥ २‡ ॥ १४

---

* छ० आ० ४, १, १, १० ( १भा० ६१० पृ० ) ऋ० वे० ६, ७, ३, १ ।

† अतएव छन्दआर्चिक व्याख्यावसरे 'अस्माकम्'—इति बहुवचनान्त व्याख्यातम् ।

‡ ऋ० वे० ६, ७, ३, २ ।

हे "सुशिप्रिन्" शोभनहनो ! "हरिवः" हरिनामकाश्वोपेत ! "गिर्वणः" गीर्भिर्वननीयेन्द्र ! "त्वया" त्वयि "वेधसः" परिचारकाः "आ भूषन्ति" * आभवन्ति, "मत्स्व" सोमेन मादय आत्मानम् किञ्च "तम्" त्वा वयम् "ईमहे" याचामहे । किं वाच्यम् ? इत्यत्राह—"सुतेषु" सोमेषु अभिषुतेषु सत्सु "तव" "श्रवांसि" अन्नानि † "उपमानि" उपमानभूतानि, हे "उक्थ्य" प्रशस्य ! ‡ तव प्रसादात् सन्त्विति ॥

"सशिप्रिन्"-"सशिप्र"—इति पाठौ ॥ २ ॥ १९

॥ माधुच्छन्दसम् ¶ ॥ त्वामिदा । होयि । ह्यियो न । रा ६ ए । अपायिप्यन्वा । ज्रायिन्भूर्णा २ ३ ४ याः । स इन्द्रस्तोमवाहसः । इहाश्रूधा । औहो ३ ४ वाहायि । उपास्वासा । औहो३४वाहा । रमागा२३हा३४३यि ॥(१) उपस्वसा । हो । रमागहो६ए । उपास्वसा । रामा गा २ ३ ४ हो । मस्वासुशिप्रिन्हरिवः । तमायिमाहा ।

---

* 'स्नावां कुर्वन्ति'—इति वि० ।

† 'श्रवांसि—अन्नानि यशांसि वा'—इति वि० ।

‡ 'उक्था—उक्थैः मम्भजनीये'—इति वि० ।

¶ 'माधुच्छन्दसं नामाच्छावाकस्य'—इति वि० ।

औहोइ४वाहायि । त्वयाभूषा । औहो३ ४ वाहा । ति
वेधा२३सा३४३: ॥(२) त्वयाभूषा । हो । निवेषसा६ए ।
त्वयाभूषा । तिवेधा२३४सा: । तवश्रवाᳩस्युपमा । नि
यूक्थाया । औहो २ ३४वाहायि । सुतायिषूवा । औ
होइ४वाहायि । द्रगिर्वा२३णा ३ ४ ३: । औ२३ ४ ५ई ।
डा (३) ॥ ४ * ॥ [१]

॥ मानवोत्तरम् ॥ होवायि । त्वामिदाह्योनर: । हो
वायि । आपीप्यन्वज्रिन्भूर्णय: । साइन्द्रस्तो । मावा
हसा३१: । द्रुहा२२३४श्रूधायि । उपास्वा२३सा३ । रा२
मा२३४औहोवा । गा२३४हो ॥(१) होवायि । उपस्व
सरमागह्नि । होवायि । ऊपस्वसरमागह्नि । मात्स्वासु
शि । प्रायिन्द्रहरिवा३१: । तमा२यिमा२३४हायि । त्वया

* ऊ० गा० २प्र० १ख० ४सा० ।

१　　१　३　५र र　३　५
भूर३षाइ । ता२यिवे२३४औहोवा । धा२३४ साः ॥(२)

१　र२र१　२र१२　१　रर
हो वायि । त्वयाभूषन्तिवेधसः । होवायि । त्वायाभूष

र　७१र　१७२　७　१
न्तिवेधसः । तावश्रवा । साउपमा३१ । नियू२क्ता२३४

५　२१　२　१　३　५रर　३
या । सुतायिषू२३वा३यि । द्रा२गा२३४औहोवा । वा२

५
३४णाः (३)॥ ८ * ॥ [ २ ] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयाध्यायस्य चतुर्थः खण्डः† ॥ ४ ॥

---

पञ्चमखण्डे‡—

प्रथमतृचे—प्रथमा ।

२३　२३१२३१२　३१२
यस्ते मदो वरेण्यस्तेना पवस्वान्धसा ।

३　१२　३२
देवावीरघशंसहा ॥ १ ¶ ॥

---

* ऊ० ग्रा० १८प्र० २खा० ८सा० ।

† 'उक्तं माध्यन्दिनं सवनम्'—इति वि० ।

‡ 'तृतीयसवनमभिधीयते'—इति वि० ।

¶ छ० आ० ५, २, ४, ४ ( २भा० १४ पृ० )=ऋ० वे० ८, १, २१, ४ ।

हे सोम ! "ते" तव "देवावीः" देवकामः "अघशंसहा" राक्षसानां हन्ता "वरेण्यः" सर्व्वैर्वरणीयः "मदः" मदकरः "यः" रसः विद्यते, "तेन" "अन्धसा" अदनीयेन "पवस्व" क्षर ॥ १ ॥

अथ द्वितीया ।

१ २३ १२३ २३ २ ३१ २ ३ १२
जघ्निर्वृत्रममित्रियꣳसस्निर्वाजन्दिवेदिवे ।
१ २ ३१ २
गोषातिरश्वसाअसि ॥ २ * ॥

हे सोम ! त्वम् "अमित्रियं" अमित्रभवं † "वृत्र" शत्रु "जघ्निः असि" हन्ता भवसि । किञ्च "दिवे दिवे" प्रतिदिनं "वाजं" ‡ सङ्ग्रामं "सस्निः" सम्भक्तोऽसि ¶ । अपिच "गोषातिः" गवां सातिर्दातासि, "अश्वसाः" अश्वानां दाता चासि ।

"गोषातिः"-"गोषाउ"—इति पाठौ ॥ २ ॥

---

* ऋ० वे० ८, १, २१, ५ ।

† 'अमित्रियम्—अमित्रकर्मकर्त्तारम्'—इति वि० ।

‡ 'वाजमिति द्वितीयैकवचनम्, षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् ; वाजस्य अन्नस्य'—इति वि० ।

¶ 'सस्निः—साधनस्वभावः'—इति वि० ।

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ २३ १ २
सम्मिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभिः ।
१ २ ३ २उ ३ २
सीदञ्छ्येनो न योनिमा ॥ ३ * ॥ १५ †

हे सोम ! त्वं "सूपस्थाभिः" शोभनोपस्थानाभिः "धेनुभिः" गोभिः [ गोर्विकारैः पयोभिरित्यर्थः ] "सम्मिश्लः" सम्मिश्रितः "श्येनः न" यथा श्येनः शीघ्रमागत्य स्थानमासीदति तद्वत् "योनिं" स्वकीयं स्थानम् "आसीदन्", "न" [—इति सम्प्रत्यर्थे ] इदानीम् "अरुषः भुवः" आरोचमानो भव ॥

"भुवः"-"भवः"—इति वा पाठौ ॥ ३ ॥ १५

अथ द्वितीयतृचे—प्रथमा ।

३ २ ३ १ ३ २उ ३ १ २ ३ १ ०
अयम्पूषा रयिर्भगस्सोमः पुनानो अर्षति ।
२ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ २
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ १ ‡ ॥

"पूषा" पोषकः सर्वेषां "भगः" भजनीयः "रयिः" धनहेतुः "अयं" सोमः "पुनानः" पवित्रे पूयमानः सन् "अर्षति" कलशा-

---

* ऋ० वे० ८, १, २२, १ ।    † 'उक्ष्णा गायत्री'—इति वि० ।

‡ छ० आ० ६, २, १, २ ( २भा० १५२पृ० )=ऋ० वे० ७, ५, २, २ ।

मभिगच्छति। तथा "विश्वस्य" सर्वस्य "भूमनः" भूतजातस्य "पतिः" पालयिता "सोमः" "उभे रोदसी" द्यावापृथिव्यौ "व्यख्यत्" स्वतेजसा प्रकाशयति। अनेन लोकद्वयवर्त्तित्वं सूचितम्॥ १॥

अथ द्वितीया।

१ १ ११ २ २ २ ३ १ २ ३१ २
समुप्रियाअनूषतगावोमदायघृष्वयः।
१ २ ३ १र २र ३ १ २
सोमासःकृण्वतेपथःपवमानासइन्दवः॥ २ *॥

"प्रियाः" प्रियतमाः "घृष्वयः" अत्यन्तदीप्ताः, [ यद्वा 'अहं प्रथमतः स्तौमि', 'अहं पुरस्तात् स्तौमि'—इति परस्परं स्पर्द्धमानाः ] "गावः" स्तुति-लक्षणा वाचः † "मदाय" सोमस्य मदार्थं "समनूषत" संस्तुवन्ति ; "उ" प्रसिद्धौ ‡ [ यद्वा गावो धेनवः सोमस्य मदाय शब्दायन्ते ]। ततः "पवमानासः" पूयमानाः "इन्दवः" दीप्ताः "सोमासः" सोमाः पथः मार्गान् "कृण्वते" क्षरणार्थं कुर्वन्ति॥ २॥

---

* ऋ० वे० ७, ५, २, २।

† 'गावः—० ० •गोसम्भवानि क्षीराणि उदकानि वा'—इति वि०।

‡ 'उ—इति पदपूरण —इति वि०।

अथ तृतीया।

१ २र ३ १र २र२ ३ १ ३ १ २

यओजिष्ठस्तमाभरपवमानश्रवाय्यम्।

१ २र ३ २ ३१२ र उ ३ १ २

यःपञ्चचर्षणीरभिरयिंयेनवनामहे ॥ ३ * ॥ १६ † .

"ओजिष्ठः" ओजस्वितमः "यः" तृतीयो रसोऽस्ति तं "श्रवाय्यं" श्रवणीयं रसम् "आभर" अस्मभ्यमाहर। किञ्च "यः" रसः "पञ्च चर्षणीः" ‡ पञ्चजनान् निषादपञ्चमान् चतुरो वर्णान् "अभि तिष्ठति"। अपिच "येन" रसेन वयं "रयिं" धनं च "वनामहे" सम्भजामहे ¶ [ यद्वा येन त्वां रयिं याचामहे ] तमाभर ॥ ३ ॥ १६

५ ३र २ ४ ५ १र

॥ गौरीवितम्§ ॥ अयम्। पूषा ३। रयिर्भगाः। सो

र र १ २ ४

मःपुनानोअर्षता२३यि। पातिर्विश्वा३१ २ ३। स्वभूम

१ २ ४ ५ ४ ५

माः। वायख्यद्रो३१२३। दसोवा। ऊ५भो६वाथि।(३)

॥ ८ ‖ ॥ [१]

* ऋ० वे० ७, ५, २, ४। † "ओमिष्टोमौ ककुब्जिष्टौ"—इति वि०।

‡ 'पञ्चचर्षणीः—चर्षणयोमनुष्याः। चत्वारोमहर्त्विजः, पञ्चमो यजमानः।

¶ 'रयि—धनं। येन वनामहे—येन सोमेन रसेन रयिं धनं लभामः। वनति र्यद्यपि स्तुत्यर्थे तथाप्यत्र लाभार्थे द्रष्टव्यः—इति वि०।

§ 'महागौरीवितम्'—इति च० पु०। ‖ ऋ० गा० १२प० १ख० ८सू०।

॥ तृतीयंक्रौञ्चम् ॥ अयम्पूषा। हो। रयिर्भगा६ए। सोमा२:पुना२। नअ३४५। षा२३४तो। पतिर्वि श्वस्यभूमना२३४५:। वियख्या२३द्रो। दसीऊ२३भा३४ ३यि ॥(१) समुप्रियाः। हो। अनूषता६ए। गावो२ मदा२। यघा३४५। षा२३४याः। सोमासःकृण्वतेप था३१:। पवमा२३ना। मइन्दा२३वा३४३: ॥(२) यओ जिष्ठाः। हो। तमाभरा६ए। पावा२माना२। श्रवा ३४५। यो२३४याम्। यःपञ्चचर्षणीरभी३१। रयिंया२ इयिना। वनामा२३हा ३ ४ ३ यि। ओ२३४५ई। डा।(३)

॥ ८ * ॥ [२]

॥ गौरीवितम्† ॥ अयम्। पूषा३। रयिर्भगाः। सो मःपुनानोअर्षता२३यि। पातिर्विश्वा३१२३। स्यभूपूमनाः।

* ऊ० गा० २प्र० १अ० ६सा०।

† 'महागौरीवितम्'—इति ख० पु०।

वायख्यद्रो ३१२३। दसोवा। ऊ५ भो६ हायि॥(१)

समु। प्रिया३ः। अनूषता। गावोमदायधृष्वया२३ः।

सोमासःका३१२३। एवता५यिपथाः। पावमाना३१२३।

सओवा। दा५वो६हायि॥(२) यओ। जिष्ठा३ः। तमा

भरा। पवमानश्रवायिया२३म्। याःपञ्चचा३१२३।

षणा५यिरभायि। रायिंयेना३१२३। वनोवा। मा५

हो६हायि(३)॥ ८ *॥ [३]

॥ श्यावाश्वम्॥ अया३१म्। पू३षा। रयिः। भा३गः।

एहिया। सो। मःपुनानो। अ। षता२यि। ऐहि

या२। पतिर्विश्वास्या३भू३। मा२३४नाः। ऐहा२यि।

एहिया२। वियख्यद्रोदा३सी३। ऊ३४५भो६हायि॥(१)

समू३१। प्रो३याः। अनू। षा३त। एहिया। गा।

* ऊ० गा० ७प्र० १ख० ८सा०।

घोमदाया । घृ । षया २ः । एहिया २ । सोमासःका

श्वोऽताइयि । पा२३४था: । ऐहा २यि । एहिया २ ।

पवमानासाइआइयि । दा३४५वोहायि ॥(२) यंपोइ

१ । जाइयिष्ठः । तमा । भाइर । एहिया । पा । व

मानआ । बा । यिया २म् । एहिया २ । यःपञ्चचार्षा३

णीइः । आ२३४भायि । ऐहा २यि । एहिया २ । रयिं

येंनावाइना३ । मार२३४५चोहायि(३) ॥ १०* ॥ [४]

॥ आसिताद्यम् ॥ अयम्पूषारयायिः । भगाः । सो

मःपुनानोअर्षा२३तायि । पाता २यिश्वा २ । स्यभूमनाः ।

वाया २ख्याद्रो २ । दसोवा३ओ२३४वा । ऊ५भोहा

यि ॥(१) समुप्रियाअनू । षता । गावोमदायघृषा२३

याः । सोमा २साःका २ । एवतेपथाः । पावा २माना

* ऋ० मा० ११प्र० २अ० १०सा०

२। सखोवा३ओ२३४वा। दा५वोई६हायि॥(२) यश्चो जिष्ठस्तमा। भरा। पवमानश्रवाश्चा२३याम्। याःपा २श्चांचा२। पणीरभायि। रायो२यायिना२। यश्चो वा३ओ२३४वा। मा५वोई६हायि(३)॥ २०*॥ [५]

॥ निषेधम्† ॥ अयम्पूषारा ३ यिर्भगाः। सोमाःपुना मोअर्षता२यि। इहा३। पाता३यिर्वायिश्वा। हाहो २३४हा। स्वभूमा२३नाः। इहा ३। वाया ३ ख्याहीं। हाहो२३४हा। इसो३ऊ५भा६५६यि॥(१) समुप्रियाश्रा ३नूषता। गावोमदा। यघृषया२ः। इहा ३। सो मा३साःका। हाहो२३४हा। एवतेपा२३थाः। इहा३। पावा३माना। हाहो २३४हा। सश्रा३यिन्दा५वा६ ५६ः॥(२) यश्चोजिष्ठस्ता३माभरां। पवामाना। श्रवा

---

* ऊ० गा० ११प्र० ३ख० २०गा०।　†"निषेध."—इति ख० पु०।

१ १ २ १ २ ४५ २ ३ ४ ५
यिया२म् । इहा ३ । याःपा३श्वाचा । चाचोर३४चा ।
१ २ १ २ १ २ १ २ ४ ५ २ ३
षणीरा२३४भायि । इहा३ । रायी३यायिना । चाहोर३
५ ३ २ ४ २ १ १
४चार३ ४ चा । वना ३ मा ५ चा ६ ५ ६ यि । चे २ ३
१ १
४ ५(३) ॥ २ * ॥ [६]

४ ३ र ४ २ ४ ५
॥ यज्ञायज्ञीयम् ॥ अया ऽ५म्य । षा३रा३यिर्भागाः ।
१ २ १ २ २ १ १
सोमःपुना । मो३आर्षा३तायि । पता२यिर्वि । श्वम्या
२ १ २ २ १ र ३ २
२३भू । ऊम्मायि । मा३नाः । वायख्यद्रोदसी २ उभा
१ २ १ र र र र २
उ ॥(१) भायिसाम् । उप्रियाअनूषतगावोमदा । या
१ २ २ १र १ २ १
३घाव्वी३याः । सोमा२सः । क्राण्वा२३ता । ऊम्मायि ।
२ २ १ र र ३ २ १ २ १र
पा३थाः । पावमानासआ२यिन्दवाउ ॥(२) वायाः । ओ
र र २ ३ र २ १ १
जिष्ठस्तमाभरपवमाना । आ३वाआ३याम् । यःपा२ञ्च ।

---

* ऊ० गा० १३प्र० १ख० १सा० ।

चर्षा२३णा । ऊम्मायि । भा३भायि । रायिंबेनवना२
मचाउ । वा३४५(३) ॥ १३ * ॥ [७]

॥ यद्वाहिष्ठीयम् ॥ अयम्पूषारयिर्भगः । अयम्पूषोवा ।
रयिर्भगाः । सोमःपू२३ना । नोअर्षतायि । पतिर्वा२३
यिश्वा । स्यभूमनाः । वियख्या२३द्रो । दसीऊ२३भा३
४३यि ॥(१) समुप्रियाअनूषत । समुप्रियोवा । अनूष
ता । गावोमा२३दा । यघृष्वयाः । सोमासा२३:क्वां ।
ऋतंपथाः । पवमा२३ना । सइन्दा२३वा३४३: ॥(२) य
ओजिष्ठस्तमाभर । यओजिष्ठोवा । तमाभरा । पवमा
२३ना । श्रवायियाम् । यःपञ्चा२३चा । षणीरभायि ।
रयिंया२३यिना । वनामा२३हा३४३यि । औ२३४५ई ।
डा (३)॥ १४ † ॥ [८]

---

* ऊ० गा० १५प्र० १ख० १२सा० । † ऊ० गा० २२प्र० १ख० १७सा० ।

२ १र र ०र १ २र
॥ क्रौञ्चाद्यम् ॥ अयम्पूषौहो। रयिर्भगाः। सो

१ २ ४ २ १ र
मःपुना३। नोआ३र्षा५ता६ ५ ६ यि। पतिर्विश्वौहो।

२र १र २ १ २ ४
स्याभूमनाः। वियख्यद्रो३। दासी३ऊ५भा६५६यि ॥(१)

२ १ र २र १र २र र १ २ ४
समुप्रियौहो। आनूषता। गावोमदा३। याघा३र्षा५

१र र १ र २र १र २ र
वा६५६ः। सोमासःकौहो। एवातेपथाः। पवमाना३।

१ २ ४ २ र १ र २र १र
साआ३यिन्दा५वा६५६ः ॥(२) यओजिष्ठौहो। तामाभ

२ र १ २ ४ २ १ र
र। पवमाना३। आवा३आ५या६५६म्। यःपञ्चचौ

२र १र २ र १ २ ४
हो। षणीरभायि। रयिंयेना३। वाना३मा५हा६५

६यि (३)॥ १७ * ॥ [९]

३ २र १ ४र ५
॥ ऐडकौत्सम् ॥ अयं३हौपू२३। षारयिर्भगईया।

१र २ र १र २ १ २ १र २ १
सोमःपुनानोअर्षति। पातिर्विश्व। स्यभूमार२३नाः। वा

२ २ १ २ २ १र २ २
या३हा। ख्याद्रो३हा। दसीऊर२३भा३४३यि ॥(१) स

---

छ० गा० १५प्र० १ख० १७सा०।

र १ र १ ४र र ५ १र २र १ २ १ २ १
मूर्द्धिप्रीर२३। याअनूषतई्या। गावोमदायघृष्वय:। सो

र २ १र २ १ २ २ १ १ २
मासःकृ। एवुतेपार२३थाः। पावा३द्वा। माना३द्वा।

२ ३ र २र १ ४ र
सइन्दार२३वा३४३: ॥(२) यआेहोजार२३यि। हस्तमाभर

५ १ २र १र २ १ २ १र
इया। पवमानश्रवायियम्। याःपञ्चच। षणीरा२३

२ १ २ २ १ २ २ १र
भायि। रायो३ऽहायि। यायिना३हायि। वनामार्.

२ १
३हा३५३यि। ओ२३४पुई। डा (३)॥ ५ * ॥ [१०]

२ र र २ र
॥ मधुश्चुन्निधनम् ॥ अयम्पूषारयिर्भगा३ए। सोमःपु

१ २ २ २ ५ २ २ १
ना३नोअर्षता३यि। हा३हा। औ३हो३वा। आयि

१ र २ २ १ ५ १
हो२। पतिर्विश्वा३स्याभूमना३:। हा३हा। औ३हो

२ १ १ २ २ २ ५
३वा। आयिहो२। वायख्यद्रो३। हा३हायि। औ

२ १ १ १र ३ ५र र
३हो३वा। आयिहो२। दसी। ऊ२भा२३४ औहो

२ र र र र ५ १ ७ २
वा ॥(१) समुप्रियाअनूषता३। गावोमदा३याघृष्वया३:।

---

* ऊ० गा० १०प्र० १ख० ५गा०।

२ २ ५ २ १ १ २र १
हा३हा । औ३हो३वा । आयिही२ । सोमासःकृण्वा
र १ १ २ ५ २ १ १ १
तेपथा३ः । हा३हा । औ३हो३वा । आयिही२ । पा
र१ २ २ ५ २ २ १
वमाना३ । हा३हायि । औ३हो३वा । आयिही२ ।
१ ३ ५र र २ र र
सह । हा२वा२३४औहोवा ॥(२) यओजिष्ठस्तमाभरा
२ र १र २ २ २ ५ २
३ए । पवमाना३आवायिया३म् । हा३हा । औ३हो३
२ १ १ र २ २
वा । आयिही२ । यःपञ्चचा३र्षणीरभा३यि । हा३
२ ५ २ २ १ १ र२ २
हा । औ३हो३वा । आयिही२ । रायियेना३ । हा
२ ५ २ २ १ १र २
३हायि । औ३हो३वा । आयिही२ । वना । मा२हा
५र र २ १ २ १ १ १ १
२३४औहोवा । मधुश्चुतता२३४५ः(३) ॥ १८ * ॥ [११]

१र र र २ १ २
॥ कण्वबृहत् ॥ औहोअयम्पूषा३ए । रयायिर्भा१गा२
३र २ १र २र १र २ १ २
३४ः । हाहोयि । सोमःपुनानोअर्षति । पतायिर्वा१यि
३र २ १ २ ३र २ १ २
श्वा२३४ । होहोस्यभूमा१ना२३४ः । हाहोयि । वियाख्या

* ऊ० गा० २०प्र० २ख० १८गा० ।

१द्रो२३४। हाचो। दसी३। जर३४भायि। उऊवा
६हाउ। वा ॥(१) औहोसमुप्रियाउ३ए। अनूषा१ता२
३४। हाचोयि। गावोमदायघृष्वयः। सोमासा१:का२
३४। हाचो। एवतायिपा१था२३४:। हाहोयि। पवा-
मा१ना२३४। हाचो। सआ३यि। दा२३४वाः। उ
ऊवा६हाउ। वा ॥(२) औचोयओजिष्ठाउ३ए। तमाभा
१रा२३४। हाचोयि। पावमानश्रवायियम्। यःपाञ्चां
१चा२३४। हाचो। षणायिरा१भा२३४यि। हाचोयि
रयायियंया१यिना२३४। हाचो। वना३। मा२३४हायि।
उऊवा६हाउ। वा(३) ॥ ८ * ॥ [१२] १६

अथ तृतीयतृचे—प्रथमा ।

वृषामतीनाम्पवतेविचक्षणः
सोमोअन्हाम्प्रतरीतोषसान्दिवः।

---

* ऊ० गा० ११प्र० १ख० ८गा०।

३ १र २र ३ १ २ ३
प्राणा सिन्धूनां कलशां अचिक्रद
१ २ ३ २ २ ३१ २ ३ १ २
दिन्द्रस्य हार्दिमाविशन्मनीषिभिः ॥ १ * ॥

अयं "सोमः" "पवते" अभिषूयते। कीदृशः सोमः? "मतीनां" मतयः स्तोतारः तेषां "वृषा" वर्षकः, "कामानां" "विचक्षणः" विद्रष्टा, "अक्नाम्" उषसां "दिवः" द्युलोकस्य आदित्यस्य वा "प्रतरीता" प्रवर्द्धयिता किञ्च "सिन्धूनां" स्यन्दमानानाम् उदकानां "प्राणा' प्राणयिता चेष्टयिता [ अनितेः (अदा० प० ) शानचि, "बहुलं छन्दसि ( २, ४, ७३ )"—इति शब्विकरणस्य लुक्, सुपां सुलुगित्याकारः ( ७, १, ३९ ) ] "कलशान्" "अचिक्रदत्" शब्दं करोति प्रवेष्टुम्। किं कुर्वन्? "इन्द्रस्य" "हार्दि" हृदयम् "आविशन्" प्रविशन् "मनीषिभिः" मनस ईषितृभिः स्तुतिभिः स्तुत इति शेषः। व्यवहित मपि मनीषिभिरित्येतत् पवतइत्यनेन सम्बध्यते ॥

"अक्नाम्"-"अक्नः"—इति, "उषसाम्"-"उषसः"—इति, "प्राणा"-"क्राणा"—इति, "अचिक्रदत्"-"अवीवशत्"—इति च पाठाः ॥ १ ॥

---

* ऋ० आ०६, ९, २, ६ ( २भा० १८५ पृ० )=ऋ० वे० ७, ३, १५, ४।

अथ द्वितीया ।

२ १ २ ३ २ ३ १
मनीषिभिःपवतेपूर्व्य्यःकवि॰र्नृ-

१२ १ २उ २ १ २
भिर्यतःपरिकोशाᳫंअसिष्यदत् ।

३ २ ३ १ २ ३ १ २ २ ३ २ ३
त्रितस्यनामजनयन्मधुक्षर-

१ २ ३ २ ३ १ २ ३ १ २
न्निन्द्रस्यवायुᳫंसख्यायवर्द्धयन् ॥ २ † ॥

अयं सोमः "मनीषिभिः" मेधाविभिः अध्वर्य्यादिभिः "पवते" पूयते । यद्वा अयं मनीषिभिर्द्धाराभिः "पवते" क्षरति । कीदृशोऽयम् ? "पूर्व्यः" पुराणः "कविः" मेधावी "नृभिः" नेतृभिः अध्वर्य्यादिभिः "यतः" सन् "कोशान्" कलशान् प्राप्य "परि असिष्यदत्" परितः स्यन्दते स्रवति । "त्रितस्य" त्रिषु स्थानेषु लोकेषु विस्तृतस्य "इन्द्रस्य" यजमानस्य सम्बन्धि "नाम" नामकमुदकं "जनयन्" उत्पादयन् "मधु" मधुरं रसं "क्षरन्" क्षरति । किं कुर्वन् ? इन्द्रस्य "सख्याय" सखित्वाय "वायु" "वर्द्धयन्" प्रवृद्धं कुर्वन् ॥

"असिष्यदत्"-"अचिक्रदत्"—इति पाठौ, "युवा"-"वायोः"—इति च, "वर्धयन्"--कर्त्तवे"—इति च ॥ २ ॥

---

* "पूर्व्यः कवि"—इति मू० पाठः । † ऋ० वे० ७, ३, १६, १ ।

अथ तृतीया।

२ १ २ ३ २ ३ १ २
अयम्पुनानउषसोअरोचय

३२ १ २र ३ २
दयᳲसिन्धुभ्योअभवदुलोकक्तत्।

३ २उ ३ १ १ २ २ ३ २ ३
अयन्त्रिःसप्तदुदुहानआशिरᳲ

१ २ ३ १ २ ३ १ २ १ २
सोमोहृदेपवतेचारुमत्सरः॥ ३ * ॥ १७ †

"अयं" सोमः "पुनानः" पूयमानः "उषसः" "अरोचयत्" अदीपयत्। अयं "सिन्धुभ्यः" स्यन्दमानेभ्यः वसतीवरीभ्यः ‡ "अभवत्" समृद्धो भवति। "उ"—इति पूरणः। कीदृशो-ऽयम्? "लोकक्तत्" लोकानां कर्त्ता [वर्षकत्त्वाद्रेतोधारकत्वाच्चास्य लोकक्तत्त्वम्]। "अयं" सोमः "त्रिःसप्त" एकविंशतिं गाः ¶ कर्म्मुखेन "आशिरं" "दुदुहानः" दुहानः [दोहस्य प्रयोज-कत्वात् कर्त्तोपचारः] "मत्सरः" मदकरः "चारु" रमणीयं "पवते" चरति। किमर्थम्? "हृदे" हृदयाय हृदय-गमनाय॥

"अरोचयत्"-"विरोचयत्"—इति पाठौ॥ ३॥ १७

---

* ऋ० वे० ७, ३, १६, २। † 'याम साम'—इति वि०

‡ 'समुद्रेभ्यो वा'—इत्यधिकं वि०।

¶ 'प्रतिसवनं सप्तसप्त गावः ०'०'—इति वि०।

॥ यामम् ॥ आ २यि। इया। वृषामतायिना१म्प

वता२३यि। वा३यिचक्षणः। सोमोअक्राम्प्रतरीतोर ३।

षा३सान्दिवः। प्राणासिन्धूना१ङ्कलशा ँ२३। आ ३ चि

क्रदत्। इन्द्रस्यहार्द्दियाविशा२३न्। मना३यिषा५ विभा

६५६यिः ॥(१) मनीपिभायिःपवतेपू२३। वी ३ यःकवि।

नृभिर्य्यंताःपरिकोशा ँ२३। आ३सिष्यदत्। त्रितस्यना

मजनया२३न्। मा३धुक्षरन्। इन्द्रस्यवायु ँसखिया२

३। यवा३र्ह्वा५या६५६न् ॥(२) अयम्पुनानउषसो २३।

आ३रोचयत्। अय ँमिन्धूभ्यो१ अभवा२३त्। ऊ३लो

ककृत्। अयन्त्रिस्सप्तदुदुहा२३। ना३आंशिरम्। आ

२यि। इया। सोमोहृदायिपवतेचा२३। रुमा३त्सा

५रा६५६ः(३) ॥ १० * ॥ [१]

---

* ऋ० ९ म० १०० सू० १० मं० ।

२ र १ २र १
॥ ऐडयामम् ॥ वृषामातो२३। नाम्पवाता२३ यि।
१ २ २र र १ २ १
ए३। विचक्षण३। सोमोचाक्रा२३म्। प्रतरायिता२
२ २ र २र र १ २र
३। ए३। उषसान्दिवए३। प्राणासायिन्धू२३। नाक्क
१ २ २ २ १
लाश्राऽ२३। ए३। अचिक्रदद्दे ३। इन्द्रस्याहा २ ३।
२ र १ २ २ र २ र
दियावायिश्रा२३न्। ए३। मनोषिभिरे३४३॥(१) मनो
१ २ १ २ २
षायिभा२३यिः। पवतायिपू२३। ए३। वियःकविरे३।
२ १ २ १ २ २
नृभिर्याता२३ः। परिकोश्राऽ२३। ए३। असिष्यद्दे
२ १ २ १ २ २
३। त्रितस्याना२३। मजनाया२३न्। ए३। मधुक्ष
२ १ २ १ २
रन्ते३। इन्द्रस्यावा२३। युऽसखीया२३। ए३। यव
२ १ २ १ २
ईयन्ने३४३॥(२) अयम्पूना२३। नउषासा२३ः। ए३।
२ र २ १ २र १
अरोचयद्दे३। अयऽसायिन्धू२३। भ्योअभावा२३ त्।
२ र २ १ २ १
ए३। उलोकक्कद्दे३। अयन्तायिःसा२३। प्तदूद्दा२३।

१ २ र १र र १ १ १
ए३ । नश्राग्निरमे३ । सोमोहाह्ला २ ३ यि । पवताथि

२ १
चा२३ । ए३ । दमत्सरए३४३ । औो २३४५ई । डा(३) ॥

॥ ५ * ॥ [२]

४ २ ४ १ ४ ५
॥ यज्ञायज्ञीयम् । वृषाऽ५म । ता३यिना३पवताथि-

१ र र र र २ १ २ २
वायिचक्षणःसोमोअन्हाम्प्रतरीतो । षा३मान्दा३यिवाः ।

१र १ र र र २ १
प्राणा२सिन्धूनाङ्कलशाँ अचिक्र । ददा२३यिन्द्रा । ऊ

२ २ १ र ३ २
म्मायि । स्या ३ हा । दीयाविशन्मना २ यिषिभाउ ॥(१)

१ १ १र र र र
भायिर्म्मा । नीषिभिःपवतेपूर्व्यःकविर्नृ भिर्यतःपरिकोशाँ ।

२ १ २ २ १ १ र
आ३सायिष्या३दात् । त्रिता२स्यनामजनयन्मधुक्ष । रन्नां

२ १ २ २ १ र
२३यिन्द्रा । ऊम्मायि । स्या३वा । यूँसखियायवा२

३ २ १ १ १ र र र
ईयाउ ॥(२) याना । यम्पुनानउषसोअरोचयदयँसि

र २ १ २ १ १
न्धुभ्योअभवात् । ऊ३लोका ३ कृत् । अया२न्त्रिःसप्तदु

* ऊ० गा० ६प्र० १अ० ५सा० ।

२ २ २ १ १ २ १
ष्ठानआश्मि। र२ऽसो२३मा:। ऊम्मायि। षा३ ह्यीयि।
१ २२ ५२ १११११
पावतेचारुमार२त्सराउ। वा२३४५(३)॥ १७*॥ [३] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य पञ्चमः खण्डः॥ ५॥

---

एवाह्मीति-षष्ठे खण्डे‡—

प्रथमतृचे—प्रथमा।

३ १ २र ३ २ ३ १ २र३ २ ३ २
एवाह्यसिवीरयुरेवाशूरउतस्थिरः।
३ २ ३ २ ३ १ २
एवातेराध्यम्मनः॥ १¶॥

हे इन्द्र! त्वं "वीरयुः" वीरान् युद्ध-कर्मणि समर्थान् शत्रून् हन्तुं कामयमानः "एव असि" भवसि खलु। "हि" प्रसिद्धो अतएव त्वं "शूरः" सामर्थ्यवान् "एव" भवसि। "उत" अपिच "स्थिरः" सङ्ग्रामे धैर्यवान् भवसि, एकत्र स्थित्वैव शत्रून् सम्प्रहरसीत्यर्थः। एवं सति "ते" तव "मनः" "राध्य"

---

* ऊ० गा० १६प्र० १ख० १७सा०।

‡ 'यज्ञायज्ञीयमग्निष्टोमसाम। एह्यूषाकमुक्थ्यम्। एवाह्यसि चामदीयं द्वितीयमुक्थ्यम्'—इति वि० भवति शेषः।

¶ ऋ० अ० ३, १, ४, १० (१भा० ४७५पृ०) ऋ० मं० ६, ६, २०, २।

स्तुतिभिः आराधनीयम् "एव"। यतोऽनेन मनसा त्वं यज्ञवर्धं सङ्ग्रामे धैर्यादिकं करोषीति तव मन एव सर्वैः स्तुत्यमित्यर्थः ॥ १ ॥

अथ द्वितीया।

३ २ ३ १ २ ३ १२ ३ १ २
एवारातिस्तुवीमघविश्वेभिर्धायिधातृभिः।
१ २ ३ १ २
अधाचिदिन्द्रनस्सचा ॥ २* ॥

हे "तुविमघ!" [तुविरिति बहु-नाम (निघ०२,१,१)] बहु-धन इन्द्र! "विश्वेभिः" सर्वैः "धातृभिः" कर्मधारकैः [यद्वा, देवानां हविर्दानेन पोषयितृभिः सर्वैः यजमानैः] तव "रातिः" गवाश्वादि-दानं "धायि" तैर्धार्यत एव [दधातेर्लुङि कर्मणि रूपम्]। "चित्" एवार्थे†। "अध"‡ अनन्तरमेव हे इन्द्र! एवंविधस्त्वं "नः" अस्माकं यष्टृणामपि "सचा"¶ धनादि-दानेन कर्म-सहायो भव ॥

"इन्द्रनस्सचा"--"इन्द्रमेसचा"—इति पाठौ ॥ २ ॥

---

* ऋ० वे० ६, ६, २०,२।

†, ‡ 'अधा चित्—इति पद पूरणः'—इति वि०। सायणमते तु अधेत्यव्यय मथेत्यर्थे, "निपातस्य च (६,३,१३६)"—इति दीर्घे भवति "अधा"—इति।

¶ 'अथवा सचा सखा'—इत्यधिकं वि०।

अथ तृतीया।

२उ ३ १ २ ३१र २र
मोषुब्रह्मे वतन्द्रयुर्भुवोवाजानाम्पते।
१ २ ३ २ ३ १ २
मत्स्वासुतस्यगोमतः ॥ ३ * ॥ १८

हे "वाजानाम्पते" अन्नानाम्पते! बलानां वा, हे इन्द्र! "तन्द्रयुः" † निष्कारणं निवृत्तकर्मवत्त्वादालस्ययुक्तः "ब्रह्मेव" ब्राह्मणइव त्वं "मा उ षु भुवः" ‡ सुष्ठु मा भव, सर्वदास्मत्-कर्मरतो भवेत्याशासनम् ¶। तदेवाह—"सुतस्य" अभिषुतस्य, ततः "गोमतः" गव्येन क्षीरेण दध्ना वा मिश्रणवतः सोमस्य पानेन "मत्स्व" माद्य हृष्टो भव ॥ ३ ॥ १८

५र र २ ४ ५र २र १
॥ उक्थामहीयवम् ॥ एवाह्यो३ असिवीरयूः। एवा
२ १ २ १ २र र १
प्रऽ२रा २ः। उता२३स्थिराः। आयिवातेरा। धिया
२ ५र र २ ४ ५र २ १
२३म्मनाउ। वा३ ॥ (१) एवारा३तिस्तुवीमघा। विश्वा

* ऋ० वे० ६, ६, २०, ४।

† "उ सु"—इति पदपूरणौ। मा इति प्रतिषेधः, तन्द्रयुरित्याख्यातेन सम्बन्धयितव्यः ; मा तन्द्रयुः मालस्यं कुरु'—इति वि०।

‡ "भुवः वाजानां पते'—भुवर्लोकस्य अन्नानां धनानां चाधिपते भुवर्ग्रहणञ्च प्रदर्शनार्थं सर्वेषां लोकानां पते'—इति वि०।

¶ अहह! अस्मात्त्वपि ब्राह्मणानामालस्य-स्वभावो वर्णितः।

२ १ २ १ २र १
यिभा१यिद्वा२। यिधा२ ३ तृभायिः। आधाचिदायि।
२ ५र २ ४र ५
द्रना२३:सचाउ। वा३ ॥(२) मोषुब्रा३ह्मवतन्द्रयूः।
२ १ २ १ २ १ २र १
भुवोवा१जा२। ना२३म्पतायि। मात्वासुता। स्वगो
२ २ र १।१ १ १
२३मताउ। वा३। स्तौषे२३४५(३) ॥ ११ * ॥ [१]

५र र २ ४ ५र ४ ५ १र १र
॥ सौभरम् ॥ एवा३द्धो३असिवीरयोवा। एवांश्रू२
१ ० १ २ ५ १र र र र
राउता२३। हो। स्था२३४यिराः। एवातेरा। धिया
ऽ २ १ ३ ५र र ५र ४ २ ४
३ऌ्हा३यि। मा२ना२३४औहोवा ॥(१) एवा३रा ३ तिं
५र ४ ५ २ १र १ ० १ २
स्तुवोमघोवा। विश्वेभा२यिद्वायिधा२३। हो। तृ२
५ १ र ऽ २ १ २
३४भायिः। आधाचिदि। द्रना३हा३यि। सा२चा२३४
५र र ५र ४ २ ४र ५ ४ ५ २ १र
औहोवा ॥(२) मोषू३ब्रा३ह्मवतन्द्रयोवा। भुवोवा२
१ १ २ ५ १ र
जाना२३म्। हो। पा२३४तायि। मत्वासुत। स्व

* ऊ० गा० २प्र० १ख० ११गा० ।

५ २ १ ३ ५र र ३ १.१ १ १
गो३वा३यि। मा२ता.२ ३ ४ औहोवा। ऊ २ ३ ४ ५

(३) ॥ २ * ॥ [२] १८

द्वितीयतृचे—प्रथमा ।

२ ३ १ २ ३ १ २ ३ १ २
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरः।
३ १ २ २ २ ३ १ २ ३ १ २ ३ १ २
रथीतमꣳरथीनांवाजानाꣳसत्पतिम्पतिम् ॥ १† ॥

"विश्वाः" सर्वाः "गिरः" अस्मदीयाः स्तुतयः "इन्द्रम्" "अवीवृधन्" वर्द्धितवत्यः [ वृधेर्णिचि चङि "उर्ऋत् ( ७, ४, ७ )"—इत्यनुवृत्तौ "नित्यं छन्दसि ( ७, ४, ८ )"—इति ऋकारस्य ऋकार-विधानात् लघूपधगुणाभावः, निपातस्वरः (८, १ २८ )] कीदृशमिन्द्रम् ? "समुद्रव्यचसं" समुद्रवद् व्याप्तवन्तं, "रथीनां" रथ-युक्तानां योद्धृणां मध्ये "रथीतमम्" अतिशयेन रथ-युक्तं, "वाजानाम्" अन्नानां "पतिं" स्वामिनं, "सत्पतिं" सतां सन्मार्गवर्त्तिनां पालकं ["पत्यावैश्वर्ये ( ६,२, १८ )"—इति पूर्वपदप्रकृतिस्वरत्वम् ] ॥ १ ॥

---

* ऊ० गा० २१प्र० १अ० २सा० ।

† छ० आ० ४, २, १, २ ( १भा० ६९७ पृ० )=ऋ० वे० १, १, २१, १ ।

अथ द्वितीया ।

३ १ २　३ १ ३ १ २
सख्येतइन्द्रवाजिनोमाभेमशवसस्पते ।

२ ३ १　२र　३ १ २३ १ २
त्वामभिप्रनोनुमोजेतारमपराजितम् ॥ २ * ॥

हे "शवसस्पते" † बलस्य पालकेन्द्र ! "ते" तव "सख्ये" अनुग्रहप्रयुक्ते सखित्वे वर्त्तमाना वयं "वाजिनः" अन्नवन्तः भूत्वा "मा भेम" शत्रुभ्यो भीतिं प्राप्ता मा भूम । अतः "त्वाम्" अभयहेतुम् "अभि प्र नोनुमः" सर्वतः प्रकर्षेण स्तुमः [ णु स्तुतौ ( अदा०, प० ), "णोनः (६, १, ६५ )"—इति नत्वम्, यङोलुक् (२, ४, ७४ ), प्रत्ययलक्षणेन ( १, १, ६२ ), "सन्यङोः ( ६, १, ९ )"—इति द्विर्भावः, "गुणो यङ्लुकोः ( ७, ४, ८२ )"—इत्यभ्यासस्य गुणः, प्रत्ययलक्षणेन धातुसञ्ज्ञायां ( ३, १, ३२ ) लटोमस् ( ३, ४, ७८ ), अदादिवद्भावात् शपोलुक् ( २, ४, ७२ ) ] । कीदृशं त्वाम् ? "जेतारं" युद्धेषु जयशीलं अपराजितं क्वापि पराजय-रहितम् ॥

"प्रनोनुमः"-"प्रणोनुमः"—इति पाठौ ॥ २ ॥

---

* ऋ० वे० १, १, २१, २ ।

† 'अन्नस्य यशसोवाधिपते' - इति वि०

अथ तृतीया।

३ १र २र ३ २ ३ १ १र ३ १ २
पूर्वीरिन्द्रस्यरातयोनविदस्यन्त्यूतयः।

३ १र १र३ १ २ ३ २ ३ १ २ ३१
यदावाजस्यगोमतस्तोतृभ्योमंहतेमघम्॥ ३ *॥ १९†

॥ इति द्वितीयस्यार्द्धः प्रपाठकः॥

"इन्द्रस्य" सम्बधिन्यः "रातयः" धन-दानानि "पूर्वीः" अनादि-काल-सिद्धाः, अस्येन्द्रस्य सर्वदा यष्टृभ्यो धनदानमेव स्वभाव इत्यर्थः; एवं सति इदानीन्तनोऽपि यजमानः "स्तोतृभ्यः" ऋत्विग्भ्य "गोमतः" गो सहितस्य "वाजस्य" अन्नस्य पर्याप्तं "मघं" धनं "यदा" "मंहते" दक्षिणारूपेण ददाति, तदानीं "रातयः" बहु-धन-दान-पूर्वकाणीन्द्रस्यात्म-विषयाणि रक्षणानि "न वि दस्यन्ति" विशेषेण नोपक्षीयन्ते। [ "यदा"-"यदि"—इति पाठौ। "मघ", "रेक्णः", "रिक्थं" —इत्यादिष्वष्टाविंशति-सङ्ख्याकेषु धननामसु ( निघ० २, १० ) मघशब्दः पठितः। "दाति"-"दाशति"—इत्यादिषु दशसु दानकर्मसु "मंहते"—इति पठितम् ( निघ० ३, २०, १० )। पूर्वीः—पुरु शब्दस्य "वोतोगुणवचनात् ( ४, १, ४४ )"—इति ङीष्, आद्यस्योकारस्य दीर्घश्छान्दसः, जसि "दीर्घाज्जसिच ( ६, १, १०५ )"—इति निषेधं बाधित्वा "वा छन्दसि ( ६, १, १०६ )"—इति पूर्वसवर्णदीर्घत्वम्, ङीषः प्रत्ययस्वरेणोदात्त-

* ऋ० वे० १, ११, ३। † 'आष्टादंष्ट्रकमुध्यम्'—इति वि०।

त्वम्। मंहते—अपः पित्वादनुदात्तत्वम्, तिङश्च ल-सार्वधातुक-स्वरेण "तिङतिङः (८, १, २८)"—इति निघातो न भवति "निपातैर्यद्यदिहन्त (८,१,३०)"—इति निषेधात् ॥३॥ १९

॥ आष्टादंष्ट्रायम् ॥ इन्द्रं विश्वाअवीवृधन्। ऐया हायि। समुद्राऽ१व्या२। चसाङ्गा१यिरा२३ः। ऐया २३हायि। रथायिता१मा२म्। रथायिन[illegible]३म्। ऐया २३हायि। वाजाना१ऽसा२त्। पतायिम्पा१ती२३म्। ऐया२३हा३४३यि ॥(१) सख्ये तइन्द्रवाजिनः। ऐयाहायि। माभायिमा१आ२। वसास्या१ता२३यि। ऐया२३हायि। तुवामा१भी२। प्रनोनू१मा२३ः। ऐया २३हायि। जेतारा१मा२। पराजा१यिता२३म्। ऐया२३हा३४३यि ॥(२) पूर्वीरिन्द्रस्यरातयः। ऐयाहायि। नवायिदा१स्या२। तियूता१या२३ः। ऐया २३ हायि। यदावा१जा२। स्यगोमा१ता२३ः। ऐया २३ हायि।

२ १ २ १ २ १र २
स्तोतृभ्यो१मा२। च्चतायिमा१वा२३म्। ऐया२३वा३४

१
३यि। औ२३४५ई। डा(३) ॥ १२ * ॥ [१]

१ २ १ २र र १र २र १र
॥ आष्टादᳪष्टोत्तरम् ॥ इन्द्रं विश्वा अवीवृधन्नै यादौ।

२ २ १ २ १ १र
हो३वा। समुद्रव्यचसम्। गायिरा२३। ऐया२३त्।

१ र २ १ २ १ १र
औ२३होवा। रथायितमᳪर। थायिना२३म्। ऐया

१ र २ १र र २र १ २ १
२३त्। औ२३होवा। वाजानाᳪसत्पतिम्। पातौ२

१र १ र २ २ १र१
३मं। ऐया२३त्। औ२३होवा३४३ ॥(१) सख्ये त इन्द्र

र १ २ १र२र१र २ २ १र र २ १
वाजिनऐयादौ। हो३वा माभेमशवसः। पाता२३

१र १ र २ १र २ १ २ र १
यि। ऐया२३त्। औ२३होवा। त्वामभिप्रनो। नूमा

१र १ र २ १र र २ १ २र १
२३ः। ऐया२३त्। औ२३होवा। जेतारमपरा। जा

१र १ र २ २र१र
यिता२३त्। ऐया२३। औ२३होवा३४३ ॥(२) पूर्वीरि

२ र १ १ १र २र १र २ २ १ १र १
न्द्रस्यरातयऐयादौ। हो३वा। नविदस्यन्त्यूतयः। ता

* ऊ० गा० २प्र० १अ० १२गा०।

वा२३ः। ऐया२३त्। औ२३होवा। यदावाजस्यगो।
माता२३ः। ऐया२३त्। औ२३होवा। स्तोतृभ्योमं
हते। माघा२३म्। ऐया२३त्। औ२३होवा३ ४ ३।
ओ२३४५ई। डा(३)॥ ११ *॥ [२]

॥ कालेयम्† ॥ इन्द्र वा३यिश्वाअवीवृधान्। समुद्र
व्या। चसङ्गिरा२३ः। रथा३यि। ना२ ३ ४। म२र।
था३यिनाम्। वाजानां२सौ। वा३४३ओ३४वा। प
५ यिम्पतायिम्॥(१) सख्ये ता३इन्द्रवाजिनाः। माभा
यिमशा। वसस्पता२३यि। तुवा३म्। आ२३४। भिं
प्रनो। नू३माः। जेतारमौ। वा३४३ओ३४वा। परा
५ जिताम्॥(२) पूर्वीरा३यिन्द्रस्यरातयाः। नवायिद
स्या। तियूतया२३ः। यदा३। वा२३४। जस्यगो।

* ऊ० गा० ७प्र० १ख० ११सा०। † 'महाकालेयम्'—इति ख० पु०।

माइताः । स्तोतभ्योमौ । वा३४३चो३४वा । ध्नता३वि
मघाम् । होपुइ । डा (३) ॥ २ * ॥ [३]

॥ नार्मेधम् ॥ इन्द्र विश्वा अवीवृधा३ने । स । मू । द्र
व्या । चसाङ्गा३यिराः । रथा३यितार२३४माम् । रथा
यिनाम् । औहौहो२३४वा । वा२३४जाहायि । ना
सात्पाता । औहौहो२३४वा । पा२३४तीम् । एहिया
६हा ॥ (१) सख्ये तइन्द्रवाजिना३ए । मा । भायि । म ।
शा । वसास्या३तायि । तुवा३मा२३४भो । प्रनोनूमा ।
औहौहो२३४वा । जा२३४यितहायि । रमापारा । औ
होहो२३४वा । जा२३४यिताम् । एहिया ६ हा ॥(२)
पूर्वीरिन्द्रस्यरातया३ए । न । वायि । द । स्या । ति
यूता३याः । यदा२वा२३४जा । स्यगोमाता । औहो

* ऊ० गा० ११प्र० १ अ० २मा०

५ १ ५ २र १ २ २र
द्यौ२३४वा। द्यो२३४तृद्धायि। भ्योमा८द्याता। द्यौ

र ५ १ ५र ५ ४
द्यौद्यो२३४वा। मा२३४घाम। एहियाईद्या। द्यौ५इ।

डा(३) ॥ २ * ॥ [४] १९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य

षष्ठः खण्डः † ॥ ६ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ३ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-

श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-

चार्य्येण विरचिते माधवीये सामवेदार्थ-

प्रकाशे उत्तराग्रन्थे तृतीयोऽध्यायः ‡ ॥

---

* ऊ० गा० २१प्र० २ख० ३सा०। † 'इति द्वितीयमह्नः'—इति वि०।

‡ "अथ द्वितीयप्रपाठकस्यार्द्धः समाप्तः"—इत्येव मूल-पद-विवरणादि-सम्मतः न तु "तृतीयो" नापि "अध्यायः"—इति।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥

॥ अथ चतुर्थोऽध्याय आरभ्यते* ॥

तत्र,

प्रथम-खण्डे—

एते असृग्रमिति प्रथमतृचे—प्रथमा ।

३ १ २   ३ १ २   ३ १ २ १ २ ३ १ २
एते असृग्रमिन्दवस्तिरःपवित्रमाशवः ।

१ २ ३ १   १२
विश्वान्यभिसौभगा ॥ १† ॥

"तिरः पवित्रं"‡ तिर्यग् गच्छन्तं दशापवित्रं प्रति "आशवः" शीघ्रगामिनः "एते" पवमाना "इन्दवः", सोमाः "विश्वानि" सर्व्वाणि "सौभगा" सौभगानि धनानि ¶ "अभि" लक्ष्य "असृग्रम्" ऋत्विग्भिः सृज्यन्ते ॥ १ ॥

---

* 'इदानीं तृतीयमवरारभ्यते'—इति वि० ।

† ऋ० वे० ७, १, १४, १ ।   ‡ 'तिरः=अधः'—इति वि० ।

¶ 'विश्वानि अभिसौभगा—विश्वानि सर्वाण्यभिसौभाग्यानि'—इति वि० ।

अथ द्वितीया ।

२ १ २ ३ २ ३ २ ३ २ २ १ २ ३ १ २
विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः ।

१ २ ३ २ ३ १ २
त्मना कृण्वन्तो अर्वतः ॥ २* ॥

"वाजिनः" बलवन्तः† सोमाः "पुरु" बहूनि "दुरिता" दुरितानि "वि घ्नन्तः" विशेषेण नाशयन्तः "तोकाय" अस्माकं पुत्राय‡ "सुगा" अतिसुखरूपाणि धनानि¶ "अर्वतः" अश्वांश्च "त्मना" आत्मना स्वयमेव "कृण्वन्तः" ददत इत्यर्थः । ऋत्विग्भिः सृज्यन्त इति पूर्वेण सम्बन्धः ॥

"त्मना"-"तना"इति—इति पाठौ, "अर्वतः"-"अर्वते"—इति च ॥ २ ॥

अथ तृतीया ।

३ २ ३ १ २ ३ २ ३क २र ३ २
कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम् ।

१ २ ३ १ २ ३ १ २
इडामस्मभ्यꣳ संयतम् ॥ ३ § ॥ १

---

* ऋ० वे० ७, १, २४, २ ।

† 'वाजिनः--अन्नवन्तः'—इति वि० ।

‡, ¶ 'सुगा तोकाय—सुखाय पुत्रपौत्राय'—इति वि० ।

§ ऋ० वे० ७, १, २४, ३ ।

सोमाः अस्माकं "भवे" "अस्मभ्यं" च "संयन्त" यद्स्मात् संयच्छति। तद् "वरिवः" धनम् "इडाम्" अन्नञ्च "कृण्वन्तः" कुर्वन्तः "सुष्टुतिम्" अस्मदीयां शोभनां स्तुतिम् * "अभ्यर्षन्ति" आभिमुख्येन गच्छन्ति॥ ३॥ १

अथ द्वितीयतृचे—प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १र २र
राजामेधाभिरीयतेपवमानोमनावधि।
३ १ २ ३ १ २
अन्तरिक्षेणयातवे॥ १ †॥

"मनो अधि" मनुष्ये यागं कुर्वाणे सति‡। यद्वा मनावधि मनुर्मन्तव्यो यज्ञस्तस्मिन् "पवमानः" पूयमानः पुनानो वा "राजा" [ राज-शब्देन सोमोऽभिधीयते "सोमं राजानमकृण्वन् (य० मा० २८, ७२)"—इत्यादिषु दृष्टत्वात्. स राजा ] सोमः "मेधाभिः" स्तुतिभिः¶ सह "ईयते" गच्छति। कुत ? "अन्तरिक्षेण" आकाशमार्गेण द्रोणकलशं प्रति "यातवे" यातुम्। द्रोणाभिगमन-कालेहि स्तोतृभिः स्तूयते खलु॥ १॥

* 'सुष्टुति—सुखेन स्तुतिम्'—इति वि०।

† ऋ० वे० ७, १,४, १।

‡ 'मनौ अधि—मनुष्ये यजमाने निमित्तभूते'—इति वि०।

¶ 'मेधाभिः ईयते—ऋत्विग्यजमानानां प्रज्ञाभि'—इति वि०।

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
आनस्सोमसहोजुवोरूपन्नवर्चसेभर ।

३ १ २ ३ १ २
सुष्वाणोदेववीतये ॥ २ * ॥

हे "सोम !" "देववीतये" देवानां पानाय देवानां कामाय वा † "सुष्वाणः" अभिषुतो वा त्वं "सहः" शत्रुभिभवनसमर्थं बलं "जुवः" [ जु—इति गत्यर्थः ‡ ] शत्रून् प्रति शीघ्रगमनं ¶ यद्वा सर्वतो गमनशीलं बलं । किञ्च [ "न"—इति चार्थे §] "वर्चसे" [वर्च दीप्तौ (भ्वा०, आ०) दीप्त्यै सर्वत्र प्रकाशनाय रूपञ्च "नः" अस्मभ्यम् "आ भर" आहर प्रयच्छ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
आनइन्दोशातग्विनङ्गवाम्पोषꣳस्वश्व्यम ।

२ ३ १ २ ३ १ २
वहाभगत्तिमूतये ॥ ३ ‖ ॥ २

---

* ऋ० वे० ७, १, ४, ३ ।

† 'देववीतये० ००—देवानां दानाय भक्षणाय वा'—इति वि० ।

‡ निघण्टौ गतिकर्मसु पञ्चोत्तरशततमत्वेन पठितम् ( २, १४ ) ।

¶, § 'जुवः—रूपम् । न—न शब्द उपमार्थीय रूपमिव'—इति वि० ।

‖ ऋ० वे० ७, २, ४, २ ।

हे "इन्दो" पात्रेषु चरणशील ! दीपनशील ! वा हे सोम "शतग्विनं"* शतसहस्रसङ्ख्याकाभिः गोभिः युक्तं "गवां पोषं" गवादीनां पुष्टिवर्द्धनं "स्वश्व्यं" शोभनाश्व-सङ्घ-सहितं "भगत्तिं" भगदत्तिं भजनीय-धन-दानञ्च † "ऊतये" रक्षणाय "नः" अस्माकम् "आवह" प्रापय । गवादीश्च तेषां वृद्धिं प्रयच्छेत्यर्थः ॥ ३ ॥ २

तन्त्वानृम्णानीति पञ्चर्चं तृतीयं सूक्तम्,‡

तत्र प्रथमा ।

१ २ ३ २ ३ १२ ३१२ ३२३२
तन्त्वानृम्णानिबिभ्रतꣳसधस्थेषुमहोदिवः ।

१२ ३१२
चारुꣳसुकृत्ययेमहे ॥ १ ॥

"महोदिवः" महतोद्युलोकस्य¶ "सधस्थेषु" सहस्थानेषु स्थितं, "नृम्णानि" धनानि § "बिभ्रन्तं" अस्मदर्थं धारयन्तं "चारुं" कल्याणं ‖ हे सोम ! "तं" तादृशं पवमान-लक्षणं "त्वा" त्वां "सुकृत्यया" शोभन-क्रियया "ईमहे" धनानि याचामहे** ॥ १ ॥

---

* 'शतग्विनं—शतसङ्ख्यातम्'—इति वि० ।

† 'भगत्तिं—शोभमानप्रतिपत्तिम्'—इति वि० ।

‡ ऋ० वे० ७, १, ५, १ ।

¶ 'महोदिवः—सकाशात'—इति वि० ।

§ 'नृम्णानि—धनानि बलानि वा'—इति वि० ।

‖ 'चारु'—शोभनम्'—इति वि० ।

** "ईमहे"—इति याच्ञाकर्मसु निघण्टौ । प्रथमं पदम् (३, १९) ।

अथ द्वितीया ।

१ २ ३क २र ३ १ २ ३ १ २
संवृक्तधृष्णुमुक्थ्यम्महामहिव्रतम्मदम् ।
३ २ ३र ३ १ २
शतम्पुरोरुरुक्षणिम् ॥ २* ॥

हे सोम ! "संवृक्तधृष्णु" संवृक्ताः सञ्छिन्नाः धृष्णवो धर्षणशीलाः शत्रवो येनासौ संवृक्तधृष्णुः, तम् †, "उक्थ्यं" उक्थार्हं प्रशस्यम्, ‡ "महामहिव्रतं" महीय-बहु-कर्माणं, ¶ "मदं" मदकरं "शतं" बहूनि "पुरः" शत्रूणां पुराणि "रुरुक्षणिं" विनाशयन्तम् ; त्वां धनानाम् ईमहे इति § सम्बन्धः ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३क२र ३ १ २ ३ २
अतस्त्वारयिरभ्ययद्राजानꣳसुक्रतोदिवः ।
३ १ २ ३ १ २
सुपर्णोअव्यथीभरत् ॥ ३ ‖ ॥

---

* ऋ० वे० ७, १, ५, २ ।

† 'संवृक्तधृष्णुम्—अतिशयेन संवर्त्तकं, धृष्णुं धारणात्मकम्'—इति वि० ।

‡ 'उक्थ्यम्—उक्थ्यानि स्तोत्राणि यत्र विद्यन्ते स उक्थ्यः, तम् उक्थ्यं सोमम्'—इति वि० ।

¶ 'महामहिव्रतं—महेति महान्तं व्रतमन्नं कर्म वा यत्र, स महिव्रतः, तं महिव्रतम्'—इति वि० । महदर्थशब्दद्वयस्य तेरतिमहत्त्वं गम्यत इति भावः ।

§ पूर्वचर्चि श्रुतम् ।

‖ ऋ० वे० ७, १, ५, ३ । "रयिमभिराज"—इति च तत्र पाठः ।

हे "सुक्रतो" शोभनकर्म्मन् * पवमान सोम! "रयिः" रयिम् धनम्प्रति "अभि अयत्" † अभिगमयति "राजानं" ‡ "त्वा" त्वाम् "अतः दिवः" अमुष्मात् द्युलोकात् "अव्यथी" व्यथा-रहितः "सुपर्णः" श्येनवत् ¶ "भरत्" आहरत्। तथाच श्रूयते—'आदाय श्येनोऽभरत् सोमम् ( ता० ब्रा० )'—इति ॥

"अव्यथी"-"अव्यथिः"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी।

१ २ ३ १ २ ३ १ २र ३ १ २
अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे।

२ १ २र
अभिष्टिकृद्विचर्षणिः ॥ ४ § ॥

"अधा" अथ "विचर्षणिः" कर्मणां विद्रष्टा || "अभिष्टि-कृत्" यजमानानाम् अभीष्ट-फलस्य कर्त्ता सोमः ** "इन्द्रियं" स्वकीयं फलं †† "हिन्वानः" प्रेरयन् "ज्यायः" प्रशस्यतरं "महित्वं" महत्वम् "आनशे" प्राप्नोति ‡‡ ॥ ४ ॥

---

* 'सुक्रतो—सुक्रतु शोभनकर्म'—इति वि०।

† 'अयत्—आनयस्व'—इति वि०।

‡ 'राजानं—सोमम्'—इति वि०।

¶ 'सुपर्णः—पक्षीभूला'—इति वि०।

§ ऋ० वे० ७, १, ५, ४।

|| 'विचर्षणिः—विविधानां पुरुषाणां स्वामी'—इति वि०।

** 'अभिष्टिकृत्—अभिष्टिः यजमानः तं यः करोति स अभिष्टिकृत्'—इति वि०।

†† 'इन्द्रियम्—इन्द्रस्य रूपं सोमम्'—इति वि०।

‡‡ 'आनशे—अश्नुव्याप्तौ'—इति वि०।

अथ पञ्चमी ।

१२ २ ३ १ २ १ २र ३ १ २
विश्वस्मा इत्स्वर्दृशे साधारणꣳ रजस्तुरम् ।
१ २ ३ २ ३ १ २
गोपामृतस्य विर्भरत् ॥ ५ * ॥ ३

"रजस्तुरम्" † उदकस्य प्रेरकम् "ऋतस्य" यज्ञस्य "गोपां" गोपयितारं ‡ "विश्वस्मै" सर्वस्मै "स्वर्दृशे" देवाय ¶ "साधारणम् इत्" समानम् § आवसन्तं सोमं "विः" पक्षी ‖ श्येनो "भरत्" स्वर्गादाहरत् ॥ ५ ॥ ३

अथ तृचात्मकं चतुर्थसूक्तं—

प्रथमा ।

२ १ २ ३ १ २ ३ १ २ ३ १ २
इषे पवस्व धारया मृज्यमानो मनीषिभिः ।
१ २ ३ १ २र
इन्दो रुचाभि गा इहि ॥ १ * * ॥

---

* ऋ० वे० ७, १, ४, ५ । "विश्वस्मा ई स्व०"—इति ख० पु० पाठः । "विश्व-स्मा इस्व०"—इति मु० पाठः ।

† 'रजस्तुर—रजः-सयुक्तम्'—इति वि० ।

‡ गोपां—गतयाध्वानसयुतम्'—इति वि० ।

¶ 'स्वर्दृशे—स्वः स्वर्गलोकस्य, दृशे दर्शनाय'—इति वि० ।

§ 'इत्—इति पदपूरणः'—इति वि० ।

‖ 'विः—भक्षणीयम्'—इति वि० ।

* * ऋ० भा० ६, १, १, ६ (२ भा० ६४ पृ०) =ऋ० वे० ७, १, २८, १ ।

हे "इन्दो" सोम ! "मनीषिभिः" ऋत्विग्भिः "मृज्यमानः" शोध्यमानः त्वम् "इषे" अस्माकमन्नाय "धारया" "पवस्व" क्षर । "रुचा" रोचमानेनान्धसा "गाः" पशून् "अभीहि" अभि-गच्छ ॥ १ ॥

अथ द्वितीया ।

३ १ २र ३ २ ३ १ २
पुनानोवरिवस्कृध्यूर्ज्जञ्जनायगिर्वणः ।
१ २ १ २ ३ १ २
हरेसृजानआशिरम् ॥ २ * ॥

हे "गिर्वणः" गीर्भिर्वननीय ! "हरे" हरितवर्ण सोम ! "आशिरं" † क्षीरं प्रति "सृजानः" विसृज्यमानः "पुनानः" पूयमानः त्वं "जनाय" ‡ जनार्थं "वरिवः" ¶ धनम् "ऊर्जम्" § अन्नञ्च "कृधि" कुरु ॥ २ ॥

अथ तृतीया ।

३ २ ३ १ २ ३१ २ ३ २
पुनानोदेववीतयइन्द्रस्ययाहिनिष्कृतम् ।
३ २ ३ १ २ ३२
द्युतानोवाजिभिर्हितः ॥ ३ ‖ ॥ ४

---

* ऋ० वे० ७, १, ३८, ४ ।

† 'आशिरं—क्षीरं दधि वा'—इति वि० ।

‡ 'जनाय—यजमानार्थम्'—इति वि० ।

¶ 'वरिवः—वरिष्ठम्'—इति वि० ।

§ 'ऊर्जम्—अन्नं यशो बलं वा'—इति वि० ।

‖ ऋ० वे० ७, १, ३८, ५ ।

हे सोम! "वाजिभिः" हविर्लक्षणान्नयुक्तैर्यजमानैः सह* "युतानः" दीप्यमानः "देववीतये" यज्ञार्थं "पुनानः" पूयमानः "हितः" हितकरः † त्वम् "इन्द्रस्य" "निष्कृतं" स्थानं "याहि" गच्छ॥

"हितः"-"यतः"—इति पाठौ॥ ३॥ ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य

प्रथमः खण्डः ‡॥ १॥

---

द्वितीय-खण्डे¶—

प्रथमतृचे—प्रथमा।

३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा।

१ २ ३क २र
हव्यवाड्जुह्वास्यः॥ १ §॥

---

* 'वाजिभिः—वाजमन्नञ्च पुरोडाशादि-लक्षणं, तदेषामस्ति ते वाजिनः ऋत्विग्यजमानाः तैर्वाजिभिः ; अथवा वाजसनेयैः वाजिभिः अध्वर्युभिः'—इति वि०।

† 'हितः—निहितः स्थापित इत्यर्थः—इति वि०।

‡ 'बहिष्पवमानमुक्तम्'—इति वि०।

¶ 'सप्तदशसौमिकं भेदमाह। इदानीमाज्यानि। आग्नेयम्—इति वि०।

§ ऋ० वे० १, १, २२, ६।

"अग्निः" आहवनीयाख्यः तस्मिन् प्रक्षिप्यमाणेन "अग्निना" निर्मथ्यमान-प्रणीतेन वा सह "समिध्यते" सम्यग् दीप्यते* । कीदृशोऽग्निः? "कविः" मेधावी "गृहपतिः" यजमान-गृहस्य पालकः "युवा" नित्य-तरुणः "हव्यवाट्" हविषोवोढा [ वहतेः "वहश्च (३, २, ६४)"—इति ण्वि-प्रत्ययः ; णित्त्वादुपधा-वृद्धिः (७, २, ११५) 'गतिकारकोपपदात् कृत् (६,२,१३९)"—इत्युत्तर-पद-प्रकृति-स्वरत्वम् ] "जुह्वास्यः" जुहूरूपेण मुखेन युक्तः† [ हूयते अनयेति जुहूः "हुवः श्लुवच्च (उ०, २, ६१)" —इति क्विप् ; तत्सन्नियोगाद् (३, २, १७८ वा०) दीर्घश्च ; श्लुवद्भावात् द्विर्भावः ; चुत्व-जश्त्वे ; प्रातिपदिक-स्वरेणान्तो-दात्तः (फि०१, १) ; जुहूरास्यं यस्येति बहुव्रीहौ पूर्वपद-प्रकृति-स्वरत्वेन स एव शिष्यते (८, २, १) ; शेष-निपातः ; यणादेशे "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (८, २, ४)"—इत्या-कारः स्वरितः ] ॥ १ ॥

अथ द्वितीया ।

१ २र ३ १ २ ३ १ २ ३ १ २

यस्त्वामग्ने हविष्पतिर्दूतन्देवसपर्य्यति ।

१ २ ३ १ २

तस्यस्मप्राविताभव ॥ २ ‡ ॥

---

* 'अग्निनाग्निः समिध्यते—अग्नीनां वेत्याद्यन्याकरोति । तेन निर्मथ्याग्निना अग्निः समिध्यते सवनीयः'—इति वि० ।

† 'जुह्वास्यः—जुहूति आस्ये अस्य जुह्वास्यः । अथ जुहोति क्रिया अस्य आस्ये क्रियते । अथवा जुहूनामा स्रुक् आस्ये मतौ यस्य स जुह्वास्यः'—इति वि० ।

‡ ऋ० वे० १, १, १२, २ ।

हे "अग्ने !" "देव !" "यः" "हविष्पतिः" यजमानः "दूतं" "त्वाम्" "सपर्यति" * परिचरति । तस्य यजमानस्य "प्राविता" "भव स्म" भवस्व रक्षको भव । [ हूयत इति हविः "अर्चि-शुचि (उ०,२,१०७)"—इत्यादिना इसिः, प्रत्ययस्वरेण इकार उदात्तः ( ३, १, ३ ), हविषः पतिः हविष्पतिः, "नित्यं समासेऽनुत्तरपदस्थस्य ( ८, ३, ४५ )"—इति षत्वम्, "पत्यावैश्वर्ये ( ६, २, १८ )"—इति पूर्वपद-प्रकृतिस्वरत्वम् । सपर्यति—सपर-शब्दात् "कण्ड्वादिभ्यो यक् ( ३, १, २७ )"—इति यक्, धातुप्रकरणात् गुणप्रतिषेधाद्यर्थात् यकः कित्त्वाच्च सपरशब्दस्य धातुत्वात्ततोविहितस्य यक आर्धधातुकत्वे सति "अतोलोपः(६,४,४८)"—इति लोपः, "सनाद्यन्ता धातवः (३,१,३२)"—इति धातुसञ्ज्ञायां तिप्, "कर्त्तरि शप् (३,१,६८)", तस्मिन् पूर्वस्य "अतोगुणे ( ६, १, ९६ )"—इति पररूपत्वम्, यकः प्रत्यय-स्वरेणोदात्तत्वम् ( ३, १, ३ ), शपा सह एकादेशस्य "एकादेशउदात्त० ( ८, २, ५ )"—इत्युदात्तत्वम्, "तिङ्ङतिङः ( ८, १, २८ )"—इति निघातो न भवति "यद्वृत्तान्नित्यम् ( ८, १, ६६ )"—इति प्रतिषेधात् ] ॥ २ ॥

अथ तृतीया ।

२ ३१२३१२ ३१२ ३१२
योअग्निन्देववीतये हविष्माꣳआविवासति ।

१२
तस्मैपावकमृडय ॥ ३ † ॥ ५

* "सपर्यति"—इति परिचरणकर्मसु तृतीय नैघण्टुकम् ( ३, ५ ) ।

† ऋ० वे० १, १, १२, ९ ।

"हविष्मान्" हविर्युक्तो "यः" यजमानः "देववीतये" देवानां हविर्लक्षणहेतुयागार्थम् "अग्निम्" "आविवासति" अग्नेः समीपे विशेषेणागत्य परिचर्यां करोति *। हे "पावक" अग्ने! "तस्मै"† "मृड्य" तं यजमानं सुखय। [देववीतये—'वी गति-प्रजन-कान्त्यशन-खादनेषु (अदा०, उभ०)'—इत्यस्मादशनार्थात् क्तिन्, देवानां वीति र्यस्मिन् यागे स देववीतिः, "बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वम्, "नब्विषयस्यानिसन्तस्य (फि०, २, ३)"—इति पर्युदासाद्धविः-शब्दोदात्तः, मतुपः सर्वानुदात्तत्वात् स एव शिष्यते। आविवासति—'वा गति-गन्धनयोः (अदा० प०)'—अस्मादन्तर्भावित-ण्यर्थादागमयितुमिच्छतीत्यर्थे सन्, आत्मानेच्छा; परिचर्यायां पर्यवस्यतीति विवासति-शब्दः परिचर्यार्थे निघण्टौ (३, ५, १०) पठितः, द्विर्भावः, अभ्यासस्य ह्रस्वः (७, ४, ५९), "सन्यतः (७, ४, ७९)"—इति इत्वम्, "अनित्यादिर्नित्यम् (६, १, १९७)"—इत्याद्युदात्तत्वम्, "तिङ्ङतिङः (८, १, २८)"—इति निघातो न भवति "यद्वृत्तान्नित्यम् (८, १, ६६)"—इति प्रतिषेधात्. "तिङि चोदात्तवती (८, १, ७१)"—इत्याङो "सहसुपेत्यत्र (२, १, ४) सहेति योगविभागादाङस्तिङा सह समासे समासान्तोदात्तत्वे प्राप्ते (८, १, २२३) "परादिश्छन्दसि बहुलम् (६, २, १९९)"—इत्युत्तर-पदाद्युदात्तत्वम्। तस्मै—"क्रियाग्रहणं कर्त्तव्यम् (२, ३, १३ वा०)"—इति सम्प्रदानत्वाच्चतुर्थी॥ २॥ ५

---

* 'आविवासति—दीपयति'—इति वि०।

† 'तस्मै पावक—चतुर्थ्यं वा द्वितीया-स्थाने भवति, तं पावकम्'—इति वि०।

अथ द्वितीयतृचे*—प्रथमा।

२ १ २ २१ २ २ १ २ २ १ २
मित्रꣳ हुवे पूतदक्षं वरुणं च रिशादसम्।
१ २ २ २ ३ १ २
धियं घृताचीꣳ साधन्ता॥ १ †॥

अहमस्मिन् कर्म्मणि हविः-प्रदानाय "पूतदक्षं"‡ पवित्र-बलं "मित्र" "हुवे" आह्वयामि [ ह्वयतेः "बहुलं छन्दसि ( २, ४, ७३ )"—इति शपोलुकि सति "ह्वः सम्प्रसारणम् ( ६, १, ३२ )"—इत्यनुवृत्तौ 'बहुलं छन्दसि ( ६, १, ३४ )"—इति सम्प्रसारणे उवङादेशः, "तिङतिङः ( ८, १, २८ )"—इति निघातः ]। तथा "रिशादसं" रिशानां हिंसकानाम् अदसम-त्तारम्¶ "वरुणञ्च" हुवे। कीदृशौ मित्रावरुणौ? "घृताचीं"§ घृतमुदकमञ्चति भूमिं प्रापयति या धी र्येन कर्म्मणा तां घृताचीं "धियम्" "साधन्ता" साधयन्तौ ‖ [ 'राध साध संसिद्धौ

---

* 'मैत्रावरुणमाज्यम्'—इति वि०।

† य० वे० ३३, ५७ = ऋ० वे० १, १, ४, २।

‡ 'पूतदक्ष'—पूतं मेध्यं, दक्षं शीघ्रम्'—इति वि०।

¶ रिशादसं—अयूणां हिंसकम्'—इति वि०।

§ 'घृताचीं—'घृतमुदकं तस्य प्रदानसमर्थाम्'—इति वि०।

‖ महीधरस्त्वेवमिमां व्याचष्टे—'द्वे मधुच्छन्दोदृष्टे गायत्र्यौ आद्या मित्रावरुण-देवत्या। मित्रं वरुणञ्चाहं हुवे आह्वयामि। कीदृशम्? पूतदक्षम् पूतं पवित्रं सदाचारं दक्षयति धन पुत्रादिभिर्वर्द्धयति पूतदक्षस्तम् दक्षकम्यथोरित्यस्माद्विजन्तात् कर्मण्यण्। रिशादसम् रिशन्ति हि सन्ति रिशा दुष्टाः तान् समन्तादस्यति नाशयति रिशादसः तम्। रिश हिंसायाम् दस उपक्षये। द्वयोर्विशेषणे। कीदृशौ

(द्वि०,प०)'—इत्यस्मादन्तर्भावितण्यर्थाल्लटः अत्वादेशे (६,१, १६१), श्नुं बाधित्वा व्यत्ययेन (३,१,८५) शप्, अदुपदेशत्वात् उपरि शप-प्रत्ययस्य ल-सार्वधातुकानुदात्तत्वम्, द्वितीयाद्विवचनस्य शपश्च "अनुदात्तौ सुप्पितौ (३,१,४)"—इत्यनुदात्तत्वे, "धातोः (६,१,१६२)"—इति धातुस्वर एव शिष्यते, "सुपां सु-लुक्० (७,१,३९)"—इत्यादिना विभक्तेराकारादेशः ॥१॥

अथ द्वितीया।

२ १ २
ऋतेनमित्रावरुणावृतावृधावृतस्पृशा।
१ २ १ २ १ २
क्रतुम्बृहन्तमाशाथे ॥ २ * ॥

हे "मित्रावरुणौ!" [ मित्रश्च वरुणश्चेति मित्रावरुणौ "देवता द्वन्द्वे च (६,३,२६)"—इति पूर्वपदस्यानङादेशः, तादृशौ ] युवां "क्रतुं" प्रवर्त्तमानमिमं सोमयागम् "आशाथे" आनशाथे व्याप्नुवन्तौ [ "छन्दसि लुङ्-लङ्-लिटः (३,४,६)"—इति वर्त्तमाने लिट्, नुड़भावश्छान्दसः ]। केन? "ऋतेन" अवश्यभावितया सत्येन फलेन अस्मभ्यं फलं दातुमित्यर्थः। कीदृशौ युवाम्? "ऋतावृधौ" [ 'ऋतमित्युदक-नाम (निघ० १,१२,६), सत्यं वा यज्ञं वा'—इति यास्कः† ] उदकादीना-

---

युभौ? धियं कर्म साधन्ता साधयन्तौ। कीदृशीं धियम्? घृताचीं घृतमच्यते घृयते अत्र तम्'—इति।

* ऋ० वे० १,१,४,१।

† 'ऋतमित्युदकनाम'—इत्यंशस्तु द्वितीय-मन्त्रविंशे, 'सत्यं वा यज्ञं वा'—इति तु चतुर्थोंशविंशे इति विवेक।

मन्यतमस्य वर्द्धयितारौ*। अतएव 'ऋतस्पृशा' उदकादीन् स्पृशन्तौ। कीदृशं क्रतुम्? "बृहन्तम्" अङ्गैरुपाङ्गैश्चाति-प्रौढम्॥ २॥

अथ तृतीया।

३ १ २ ३ १ २र ३ १ २ ३ १ २
कवीनोमित्रावरुणातुविजाताउरुक्षया।

१ २ ३ १ २
दक्षन्दधातेअपसम्॥ ३ ‡॥ ६

"मित्रावरुणा" मित्रावरुणौ एतौ देवौ "नः" अस्माकं "दक्षं" बलम् "अपसं"¶ कर्म च "दधाते" पोषयतः, कीदृशौ? "कवी" मेधाविनौ, "तुवि-जाता" तुविजातौ बहूनामुपकारकतया समुत्पन्नौ, "उरुक्षया" बहु निवासौ [मित्रावरुणौ—मित्रः शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः (फि० १, १), वरुण-शब्दो नित्स्वरेणाद्युदात्तः (६, १, १९७)। तुविजातौ—बहूना-मुपकारकतया तत्सम्बन्धित्वेन जाता विति षष्ठीसमासे समासा-न्तोदात्तत्वम् (८, १, २२३), चतुर्थीसमासे हि "क्ते च (६, २, ४५)"—इति क्वचित् पूर्वपदप्रकृतिस्वरः स्यात्। उरूणां बहूनां क्षयौ उरुक्षयौ, 'क्षि निवास-गत्योः (तु० प०)'—इति धातोः क्षियन्त्यस्मिन्निति क्षय इत्यधिकरणे एव अच् प्रत्ययान्तस्य "क्षितः

* 'ऋतावृधौ—ऋतमन्न तद् वर्द्धयतः'—इति वि०।

† 'अग्निष्टोमादिकम्'—इति वि०।

‡ ऋ० वे० १, १, ४, ४।

¶ 'अपसं—धनम्'—इति वि०।

( ६, १, १६३ )"—इत्यन्तोदात्तत्वे प्राप्ते "थयो निपाते ( ६, १, २०१ )"—इत्याद्युदात्तत्वं विहितम्, समासे तु "समासस्य ( ८, १, २२३ )"—इत्यन्तोदात्तत्वं बाधित्वा तदुत्तरप्रकृतिस्वरेण ( ६, २, १३८ ) प्राप्तमुत्तरपदाद्युदात्तत्वम् यद्यपि आबादि-स्वरेणान्तोदात्तत्वेन बाध्यते तथापि "परादिश्छन्दसि बहुलम् ( ६, २, १९९ )"—इत्युत्तरपदाद्युदात्तत्वं द्रष्टव्यम्। दृचः—दृचतेरुत्साहकर्मणो ञित्त्वादाद्युदात्तः ( ६, १, १९७ )। आप्यते फलमनेनेत्यपः कर्म, "आपः कर्माख्यायां ह्रस्वो नुट् च वा ( उ० ४, १०९ दी० सू० )"—इत्यनन्तस्य अपसस्पारेइत्यादौ नित्त्वा ( ६, १, १९७ ) दाद्युदात्तस्यापस्-शब्दस्यात्र व्यत्ययेन प्रत्ययाद्युदात्तत्वम् ( ३, १, ३ )] ॥ ३ ॥ ६

अथ तृतीयतृचे*—प्रथमा।

१ २ १ २    २र    ३ १    २र

इन्द्रेणसंहिदृक्षसेसञ्जग्मानोअबिभ्युषा।

३ १ २ ३ १ २

मन्दूसमानवर्चसा ॥ १ † ॥

हे मरुद्गण! त्वम् "इन्द्रेण" "सञ्जग्मानः" सङ्गच्छमानः "सं दृक्षसे हि" सम्यग् दृश्येथाः खलु, अवश्यमस्माभिर्द्रष्टव्य-

* 'ऐन्द्रमाध्यम्'—इति वि०।

† ऋ० वे० १, १, १२, २।

मित्यर्थः *। कीदृशेनेन्द्रेण? "अबिभ्युषा" भीति-रहितेन कीदृशाविन्द्रमरुद्गणौ? "मन्दू" नित्य-प्रमुदितौ, † "समान-वर्चसा" तुल्य-दीप्तौ। ['पुरा कदाचित् वृत्र-वध-दशायाम् इन्द्रस्य सखायः सर्वे देवा वृत्र-श्वासेनापसारितास्तदानीमिन्द्रस्य वृत्र-सम्बन्धि-सकल-सेना-जयार्थं मरुद्भिः सङ्गमो भूतः'—सोऽयमर्थो "वृत्रस्य श्वसथाय (ऋ० आ० ४, १, ४, २; ६५६ पृ०)"—इति मन्त्रे सङ्गृहीतः; 'इन्द्रो वै वृत्रं हनिष्यन्'—इति ब्राह्मणे (ता०) प्रपञ्चितश्च; इन्द्रशब्दः परमैश्वर्यवन्तं मरुद्गणमप्यभिधत्ते, तदानीमिन्द्रस्य सम्बोधनं बहिरेवाध्याहर्त्तव्यम्। तथा चेयमृक् यास्केनैवं व्याख्याता—"इन्द्रेण हि सन्दृश्यसे सङ्गच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्, समानवर्चसेत्येतेन व्याख्यातम् (४, १२)"—इति। सन्दृक्षसे—सम्पश्येथाः "दृशेश्चेति वक्तव्यम् (७, १, ७ वा०)"—इत्यात्मनेपदम्, दृशेः "लिङर्थे लेट् (३, ४, ७)"—इति प्रार्थनायां लेट्, थासस्से (३, ४, ८०), "लेटोऽडाटौ (३, ४, ९४)"—इत्यडागमः, "सिब्बहुलं लेटि (३, १, ३४)"—इति सिप्, "सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ९३)"—इति गुणाभावः, व्रश्चादिना (८, २, ३६) षत्वम्, "षढोः कः सि (८, २, ४१)"

* 'इन्द्रेण सं हि दृक्षसे मरुद्गणः इति वाक्यशेषः। अथवा व्यत्ययेन व्याख्या क्रियते—मरुद्गणेन दृश्यसे इन्द्रः। अथवा आदित्य इन्द्रोऽभिधीयते, मरुद्गणा रश्मिगणास्तैः सह दृक्षसे। अथवा इन्द्रेण आदित्येन, सङ्गमानः सङ्गच्छमानः'—इति वि०।

† 'मन्दू—मदन-स्वभावेन'-इति वि०।

—इति कत्वम्, "आदेश-प्रत्यययोः (८, ३, ५९)"—इति सिपः षत्वम्, बहुल-ग्रहणात् सिपः परस्ताच्छबपि भवति, सिपा व्यवधानात् पत्वादेशो न भवति, शपः पित्त्वादनुदात्तत्वम् (३, १, ४), उपदेश-सार्वधातुकानुदात्तत्वम् (६, १, १८६), धातुस्वर एव शिष्यते (६, १, १६२), हि-शब्द-योगात् "तिङ्-ङतिङः (८, १, २८)"—इति निघातो न भवति "हि च (८, १, ३४)"—इति प्रतिषेधात्। सञ्जग्मानः—गमेः सम्पूर्वात् छन्दसि लुङ्लङ्लिटः (३, ४, ६)"—इति वर्त्तमाने लिट्, "समोगम्यृच्छि० (१, ३, २९)"—इत्यात्मनेपद-विधानात् लिटः कानजादेशः (३, २, १०६), द्विर्भावः (६, १, ८), हलादि-शेषः (७, ४, ६०), अभ्यासस्य चुत्वम् (७, ४, ६२), "गमहन० (६, ४, ९८)"—इत्युपधा-लोपः, कानचश्चित्त्वादन्तोदात्तत्वम्, गति समासे (२, २, १८), कृदुत्तरपदप्रकृतिस्वरत्वम् (६, २, १३९)। अबिभ्युषा—'ञि भी भये (जु०, प०), पूर्ववल्लिट् (३, ४, ६), "शेषात् कर्त्तरि० (१, ३, ७८)" —इति परस्मैपदम्, "क्वसुश्च (३, २, १०७)"—इति लिटः क्वसुरादेशः, तस्य कित्त्वाद् गुणाभावः (१, १, ५), अभ्यासस्य ह्रस्व-जश्त्वे (७, ४, ५९)—(८, ४, ५४) क्रादिनियमात् प्राप्तइट् (७, २, १३) "वस्वेकाजाद्घसाम् (७, २, ६७)"—इति नियमात् निवर्त्तते नञ्समासे तृतीयैकवचने भत्वाद् "वसोः सम्प्रसारणम् (६, ४, १३१)"—इति वकारस्य उकारादेशः, "सम्प्रसारणाच्च (६, १, १०८)"—इति पूर्वरूपत्वं बाधित्वा "एरनेकाच (६, ४, ८२)"—इति यणादेशः, अव्यय-

पूर्वपदप्रकृतिस्वरत्वम् ( ६, २, १६८ ), पूर्वेण सह संहितायां ओकारस्य "एङः पदान्तादति ( ६, १, १०९ )"—इति पररूपत्वे प्राप्ते "प्रकृत्यान्तः पादमव्यपरे ( ६, १, ११५ )"—इति प्रकृतिभावः। मन्द—'मदि स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु' ( भ्वा०, आ०, ), "इदितो नुम् धातोः ( ७, १, ५८ )"—इति नुमागमः, कुरित्यनुवृत्तौ "खरु-शङ्कु-पीयु-नीलङ्गु-लिगु ( उ० १, ३६ )"—इत्यचाविभक्तिक-निर्देशादन्तेर्हिङ्गुरितिवशात्वन्तरादुपि कुरित्युक्तम्, प्रत्ययस्वरेणान्तोदात्तः ( ३, १, ३ ), द्विवचने औ "प्रथमयोः पूर्वसवर्णः (६, १, १०४), तृतीयैकवचने च "सुपां सु लुक्० (७, १, ३९)"—इत्यादिना पूर्वसवर्णदीर्घत्वम्, समानं वर्णो ययोरिति वा यस्येति बहुव्रीहिः, द्विवचने "सुपां सु-लुक्० ( ७, १, ३९ )"—इत्याकारः, समान-पदस्य प्रातिपदिकान्तो-दात्तत्वम् ( फि० १, १ ), बहुव्रीहौ पूर्वपद-प्रकृति-स्वरेण ( ८, २, १), तदेवावशिष्यते ॥ १ ॥

अथ द्वितीया।

१　२र३ २उ　३ १ २ ३　१ २ ३ २
आदहस्वधामनुपुनर्गर्भत्वमेरिरे।
१ २　३ १ २ ३　१ २
दधानानामयज्ञियम् ॥ २ * ॥

अहेत्यवधारणार्थः† ]। "आत् अह" वर्षर्त्तोरनन्तरमेव "स्वधामनु" इतःपरं जनिष्यमाणमन्नमुदकं वा अनुलक्ष्य मरुतो

* ऋ० वे० १, १, ११, ४।

† "अहइति च ह इति च विनिग्रहार्थी (?) पूर्वेण सम्प्रयुज्यते। अयमहेदं करोतु अयमिदं च करिष्यतीति"—इति निरु० १, ५।

देवाः "पुनः गर्भत्वम् आ ईरिरे" मेघ-मध्ये जातस्य गर्भाकारं प्रेरितवन्तः* [प्रतिसम्वत्सर मेवं कुर्वन्तीति दर्शयितुं पुनः-शब्दः प्रयुक्तः]। कीदृशा मरुतः? "यज्ञियं" यज्ञार्हं "नाम" "दधानाः" धारयन्तः। [सप्तसु गणेषु मरुतामीदृक् चान्यादृक् चैताना-मीदृक् चेत्यादीनि यज्ञ-योग्यानि नामान्यन्यत्राम्नातानि। "अन्नः" —इत्यादिष्वष्टाविंशति-सङ्ख्याकेष्वन्ननामसु "ऊर्क्"(१५),"रसः" (१६), "स्वधा" (१७)—इति पठितम्, (निघ० २, ७) "अर्णः"—इत्यादिष्वेकशत-सङ्ख्याकेषूदक-नामसु च "तेजः" (८६), "स्वधा" (८७), "अक्षरम्" (८८)—इति पठितम् (निघ० १, १२)। "आत्"-"अह"-निपातावाद्युदात्तौ (फि० ४, १२)। स्वधा—स्वं लोकं दधाति पुष्णातीति स्वधा, "आतोऽनुपसर्गेकः (३, २, ३), कृदुत्तरप्रकृतिस्वरत्वम् (६, २, १३९)। अनु-पुनः-शब्दौ निपातावाद्युदात्तौ (फि०, ४, १२)। गर्भस्य भावो गर्भत्वं प्रत्ययस्वरः (३, १, ३)। एरिरे—अन्तर्भावितण्यर्थात् 'इण् गतौ (अदा०, प०)'—इत्य-स्मादनुदात्तेतः परस्य लिटो झस्य इरेच्, चित्त्वादन्तोदात्तः (६, १, १६२), "सह सुपा (२, १, ४)"—इत्यत्र "सुपा" योगविभा-गादाङा सह तिङः "समासस्य (६, १, २२३)"—इत्यन्तोदा-त्तत्वम्, "इजादेश्च गुरुमतोऽनृच्छः (३, १, ३६)"—इत्याम् न भवति मन्त्रत्वात्† अह-शब्द-योगान्निघाताभावः "तु-पश्य-

* 'आदित्य-रश्मय उत्पद्यन्ते, सविता सह गच्छन्ति, तैः पुनरस्तमिते सवितरि गर्भत्वं यान्ति'—इति वि०।

† "कास्प्रत्ययादाममन्त्रे लिटि (३, १, ३५)"—इति सूत्रादिदं 'अमन्त्रे'—इत्यनुवर्त्तत इति भाव।

प्रख्लताहै: पूजायाम् (८,१,३९)"—इति निषेधात्। दधानाः—शानचश्चित्वादन्तोदात्तत्वे प्राप्ते (६, १, १६२) "अभ्यस्तानामादिः (६, १, १८९)"—इत्याद्युदात्तत्वम्। यज्ञमर्हति यज्ञियम्, "यज्ञर्त्विग्भ्यां घ-खञौ (५, १, ७१)"—इति घ-प्रत्ययः "आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम् (७, १, २)"—इतीयादेशः प्रत्ययस्वरेण इकार उदात्तः (३, १, ३)] ॥ २ ॥

अथ तृतीया।

३ १ २ ३ २ ३ १ २ ३ १ २

वीडु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः।

१ २ ३ २ ३ १ २

अविन्द उस्रिया अनु ॥ ३ * ॥ ७

अस्ति किञ्चिदुपाख्यानम्—'पणिभिर्देवलोकाद् गावोऽपहृताः; अन्धकारे प्रक्षिप्ताः ताश्चेन्द्रो मरुद्भिः सहाजयत'—इति। एतच्च बह्वृचानुक्रमणिकायां सूचितम्—"पणिभिरसुरैर्निगूढा गा अन्वेष्टुं सरमादेवशुनीन्द्रेण प्रेषिता ता ऋग्भिः पणयोऽमित्रीयन्तः प्रोचुः"—इति। मन्त्रान्तरेऽपि दृष्टान्ततया सूचितम्—"निरुद्धा आपः पणिनेव गावः"—इति] तदेव उपाख्यानमभिप्रेत्योच्यते—हे "इन्द्र।" "वीडु चित्"† दृढमपि दुर्गमस्थानम् "आरुजत्नुभिः" ‡ अभिभञ्जद्भिः "वह्निभिः" वोढृभिः मरुद्भि

* ऋ० वे० १, १, ११, ५।

† 'चित्—इति पदपूरण। वीडु अन्तरिक्षे स्थित'—इति वि०।

‡ 'अन्तरिक्षे स्थिता अगच्छे। पयन्ति आरुजत्व—इति वि०।

¶ इन्द्रमात्मकैरश्मिभि—इति वि०।

नेतुं समर्थः मरुद्भिः सहितस्त्वं "गुहा चित्" गुहायामपि स्थापिता "उस्रियाः" गाः "अन्वविन्दः †" अन्विष्य लब्धवानसि । [ "ओजः" (१), "पाजः"(२)—इत्यादिष्वष्टाविंशति-सङ्ख्याकेषु बल-नामसु "दक्षः"(१३) "वीळु"(१४) "च्यौत्नम्" (१५)—इति पठितम् । ( ८, ९ ) नव-सङ्ख्याकेषु गो-नामसु "अघ्न्या"(१), "उस्रा" (२). "उस्रिया" (३)—इति पठितम् निघ० (२, १९ ) । वीळु—प्रातिपदिक स्वरः ( फि० १, १ ) । चित्—आद्युदात्तः । आरुजत्नुभिः—'रुजो भङ्गे' ( तु० प० ) इत्यस्मादौणादिकः कत्नुच् प्रत्ययः, कित्त्वाद् ( १, १, ५ ) गुणाभावः, चित्त्वादन्तोदात्तत्वम् ( ६, १, १६ ) समासे कृदुत्तर-पदप्रकृतिस्वरत्वञ्च ( ६, २, १३० ) । गुहा—सप्तम्यां डादेशः ( ७, १, ३९ ), "ग्रामादीनाञ्च ( फि०, २, १५ )"—इत्याद्युदात्तः । वह्निभिः—"वहि-श्रि-श्रु-यु-ग्ला-हा-त्वरिभ्यो निः (उ० ४, ५१)"—इति नि-प्रत्ययः, नित्त्वादाद्युदात्तः । अविन्दः—'शेमुचादीनाम् ( ७, १, ५९ )"—इति नुमागमः, लुङ्-लङ्-लृङ्क्ष्वडुदात्तः ( ६, ४, ७१ ) । वसन्तीति उस्रियाः वसेः कर्त्तरि यक् प्रत्ययः, षत्वाभावश्च बाहुलकाद्दृशनीयः ( ३, १, ८५ ), उक्तं हि 'यत्र पदार्थविशेष मुक्तं प्रत्ययतः प्रकृतेश्च तद् ग्राह्यम् ( ३, १, ८५ भा० )'—इति, इकारः प्रत्ययस्वरेणान्तोदात्तः ( ३, १ ३ ) ॥ ३ ॥ ७

---

() 'उस्रियाः—आदित्यरश्मयः—इति वि० ।

† 'अविन्दः विदन्नानं ( अदा० प० )—इत्यस्येदं रूपम्—इति, 'अनु—आनुपूर्व्येण' इति च वि० ।

अथ चतुर्थे तृचे* प्रथमा ।

१ २३ १ २ ३   ३ १   २र ३ २ ३ २
ताहुवेययोरिदम्पप्रे विश्वम्पुराकृतम् ।

३ १ ३र १
इन्द्राग्नीनमर्द्धतः ॥ १† ॥

"ता" तौ तादृशौ "इन्द्राग्नी" "हुवे" आह्वये । "ययोः" इन्द्राग्न्योः "पुरा" पूर्वस्मिन् काले "कृतं" "विश्वं" सर्वम् "इदं" पूर्वास्वृक्षु कीर्त्तितं वीर्यं "पप्ने" पन्यते ऋषिभिः स्तूयते;—ताविन्द्राग्नी हुवे इत्यन्वयः । तौ चेन्द्राग्नी न "मर्द्धतः" [ मर्द्धतिः हिंसाकर्मा (निघ०२, १९, १४ ) ] स्तोतॄन् अहिंस्रः । अतो ऽस्मान् आहुतौ रक्षतामिति भावः ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ २ ३ १ २   ३ १ २
उग्राविघनिनाम्टधइन्द्राग्नीहवामहे ।

१ २   ३ १ २
तानोम्टडातईदृशे ॥ २‡ ॥

"उग्रा" उग्रौ उद्गूर्ण-बलौ अतएव "मृधः" शत्रून् "विघनिना" विघनितौ विशेषेण हतवन्तौ "इन्द्राग्नी" "हवामहे" आह्वयामहे । तौ चेन्द्राग्नी "ईदृशे" अस्मिन् सङ्ग्रामे "नः"

---

* 'ऐन्द्राग्नमाज्यम्'—इति वि० ।

† ऋ० वे० ४, ८, १७, ४ ।

‡ ऋ० वे० ४, ८, १७, ५ ।

अस्मान् "मृड़ातः" सुखयताम् [ यद्वा मृड़ातिः उपदयाकर्मा ; नोऽस्माकं मृड़ातः उपदयां कुरुताम् ] ॥ २ ॥

अथ तृतीया ।

३ १ २ १ २र ३ १ १र

हथोवृत्राण्यार्य्याहथोदासानिसत्पती ।

१ २उ ३ २ ३ १ २

हथोविश्वाअपद्विषः ॥ ३* ॥ ८

हे इन्द्राग्नी ! "आर्या" आर्यैः कर्मानुष्ठातृभिः कृतानि "वृत्राणि" उपद्रवजातानि "हथः" हिंस्थः । तथा "सत्पती" सतां पालयितारौ सन्तौ "दासानि" दासाः कर्महीनाः† शत्रवः, तैः कृतानि चोपद्रवजातानि हथः । अपि च "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः शत्रुभूताः प्रजाः "अप हथः" विनाशयथः अतोऽस्माकमप्येव मेव कुरुता मिति भावः ॥

"हथः"-"हनः"—इति पाठौ ॥ ३ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य द्वितीयः खण्डः ‡ ॥ ४ ॥

---

* ऋ० वे० ४, ८, १८, १ ।

† 'दासानि—यादादीनि रक्षः-पिशाचादीनि'—इति वि० ।

‡ 'उक्त प्रात सवनम'—इति वि० ।

अथ तृतीयखण्डे*

प्रथमतृचे—प्रथमा।

२ १ २र १२३१२१२१२१२

अभिसोमासआयवःपवन्तेमद्यम्मदम्।

२ १ १र ३१२ ३ १ २ ३ १ २ ३ १ २

समुद्रस्याधिविष्टपेमनीषिणोमत्सरासोमदच्युतः॥ १ †॥

"आयवः" गमन-शीलाः "सोमासः" सोमाः "मद्यं" मद-करं मदम् आत्मीयं रसम् "अभिपवन्ते" अभितो निर्गमयन्ति। कुत्रेत्युच्यते "समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रिते पवित्रे यद्वा समुद्रस्य यस्मात् समुद्द्रवन्ति रसास्तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने पवित्रे निर्गमयन्ति। कीदृशाः ? "मनीषिणः" मनस ईशितारो "मत्सासः" मदकराः "मदच्युतः" मदस्राविणः॥

"विष्टपे"-"विष्टपि"—इति पाठौ, "मदच्युतः"-"स्वर्विदः" इति च॥ १॥

अथ द्वितीया।

१२ ३ १ २र ३ २ ३ १ २ ३१२३२३ २

तरत्समुद्रम्पवमानऊर्म्मिणाराजादेवऋतम्बृहत्।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ २ ३ ० १ २ २

अर्षामित्रस्यवरुणस्यधर्म्मणाप्रहिन्वानऋतम्बृहत्॥२‡॥

* 'इदानीं माध्यन्दिनं सवनमुच्यते। तत्रोच्यन्ते—गायत्री वैष्ट्म्भादीनि सामानि, तेषां नामतः आर्षेयमुक्तम्'—इति वि०।

† ऋ० आ० ६, १, ३, ८ (२भा० ९६पृ०)=ऋ० वे० ७, ५, १४, ४।

‡ ऋ० वे० ७, ५, १५, १। "समुद्रिय."—इति च तत्र पाठः।

"पवमानः" पूयमानः "देवः" द्योतमानः "बृहत्" महान्तम्* "ऋतम्" सत्यभूतः† "राजा" सोमः "समुद्रम्" अन्तरिक्षं कलशं वा "ऊर्मिणा" धारया‡ "तरत्" तरति "हिन्वानः" प्रेर्यमाणः। "ऋतस्य बृहत्" अत्यन्तं सत्यभूतः स सोमः "मित्रस्य वरुणस्य" मित्रावरुणयोः "धर्मणा" धारणार्थं "प्र अर्षा" प्रार्षति प्रकर्षेण गच्छति¶॥

"अर्षा"-"अर्षन्"—इति पाठौ॥२॥

अथ अध्यास्याख्या तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ १ ३ २र
नृभिर्येमाणोहर्यतोविचक्षणोराजादेवःसमुद्र्यः॥३§॥९

"नृभिः" कर्म-नेतृभिः ऋत्विग्भिः "येमानः" नियम्यमानः "हर्यतः" स्पृहणीयो "विचक्षणः" विद्रष्टा "देवः" दीप्यमानः "समुद्र्यः" अन्तरिक्षे भवः‖ "राजा" सोमः इन्द्रार्थं पवते इति शेषः॥

"येमाणः"-"येमानः" इति पाठौ॥३॥९

---

* 'बृहत्—महत् अथवा बृहत्साम'—इति वि०।

† 'ऋतं—सत्यम् अन्नम् प्रजापतिः यज्ञं वा'—इति वि०।

‡ 'ऊर्मिणा—उदकसङ्घातेन'—इति वि०।

¶ 'अर्षा—द्रष्टा'—इति वि०।

§ उ० आ० ६, १, ४, ३ (२भा० ११२पृ०)=ऋ० वे० ७, ४, १७, ४।

‖ "समुद्र"—इत्यन्तरिक्ष नामसु पञ्चदशं नैघण्टुकम् (१, ३)। 'समुद्र्यः—समुद्रात्मकः'—इति वि०।

॥ पौष्कलम् ॥ अभिसोमासआयवः। औहोवा।
एहिया। हाउ। पवन्तेमा२दियम्मदम्। समुद्रा१
स्या२। धायिविष्टपा३यि। मानीषा२३४यिणाः। मत्सा।
रासौवाओ२३४वा। हा३हायि। मदा५च्युताः ॥(१)
मत्सरासोमदच्युतः। औहोवा। एहिया। हाउ। म
त्सरासो२मदच्युतः। तरात्सा१म्२। द्राप्तवमा३। ना
ऊर्म्मा२३४यिणा। राजा। दायिवौवाओ२३४वा। हा
३हायि। ऋताा५म्बृहात् ॥(२) राजादेवऋतम्बृहत्। औ
होवा। एहिया। हाउ। राजादेवा२ऋतम्बृहत्। अ
र्षामा१यित्रा२। स्यावरुणा३। स्याधर्म्मा२३४णा। प्र
हायि। न्वानौवाओ२३४वा। हा३हायि। ऋताा५म्बृ
हात्। होा५इ। डा(३) ॥ १४ * ॥ [१]

* ऋ० गा० २प्र० १ख० १४सा० ।

॥ उभयतःस्तोभं गौतमम् ॥ हावभिसोमासआयवो हाउ। पावन्तेम। दियाम्मदा२३४म्। हाहोयि। स मुद्रस्याधिविष्टपे। मानीषिणा३४ः। हाहोयि। मात्स रासा३४ः। हाहो३। मदो२३४वा। च्य५तोइहायि॥(१) हाउमत्सरासोमदच्युतोहाउ। मात्सरासः। मदाच्यु ता२३४ः। हाहोयि। तरत्समुद्रम्पवमा। नाऊर्म्मि णा३४। हाहोयि। राजादायिवा३४ः। हाहो३यि। ऋतो२३४वा। बृ५हो ६ हायि॥(२) हाउराजादेवऋत म्बृहद्धाउ। राजादेवः। ऋताम्बृहा२३४त्। हाहोयि। अर्षामित्रस्यवरुण। स्याधर्मणा ३४। हाहोयि। प्रा चिन्वाना३४ः। हाहो३यि। ऋतो२३४वा। बृ५ हो ६ हायि(३) ॥ १५ * ॥ [२]

* ऊ० गा० १प्र० १ख० १५सा०।

२ १ ४र ५र
॥ हिंहिङ्कारंवामदेव्यम् ॥ अभिसोरश्मासआयवाः ।
१ र र २ ३ र २ १
पाऽवन्ते मघम्मदꣳसमुद्रस्याधिविष्टपाऽयिमनीषोर । ऊ
१ २ १ र २ ३र २ १
आ२। षार३यिणाः । मत्सरासोमदौषो३ । ऊआ२
२ १ २ ४ ५ २ १ ४र ५
ऽच्युता । औ३होवा ॥(१) मत्सरा २ ३ सोमदच्युताः ।
१ र र २ ३र २ १
मात्सरासोमदच्युतम्तरत्समुद्रम्पवमाऽनऔहो३ । ऊआ
२ १र र र २ ३र २ १
२ । मार३यिणा । राजादेवाऽऋतौहो३ । ऊआ२ ।
१ ४ ५ २र १र ४ ५
बृहात् । औ२३होवा ॥(२) राजादा २ ३ यिवऋतम्बृ
१ र र र २ ३र २
हात् । राऽजादेवऋतम्बृहाद्र्षामित्रस्यवरुणाऽस्यधौहो३ ।
१ १ २ १ र २ ३र २ १
ऊआ२ । मार३णा । प्रचिन्वानाऽऋतौहो३ । ऊआ
१ ४ ५ ४
२ । बृहात् । औ२३होवा । होऽ५इ । डा(३) ॥ ७* ॥ [३]
१ २ १ र २
॥ गायत्रपार्श्वम् ॥ आभी । सोमासआ३१उवार३ ।
१ २र १ २ १ २ १ २ १ र २ र १
यार३४वाः । पवन्ते मदियम्मदꣳसमुद्राधिविष्टपेमनीषि

* ऊ० गा० ४प्र० २ख० ७सा० ।

२ १ १ १ १   २ १ २   ७ २   १   ४   १
षा२३४५ः। मत्सारा१सा२ः। मदा३। ऊ२३वा३। च्यू

१ १ १ १   १ २   १ ८ २
ता२३४५ः॥(१) मात्सा। रासोमदा३१उवा२३। च्यू

५   १८ ८ २   १ २ १   २   १   १८   ८   १
२३४ताः। मत्सरासोमदच्युतस्तरत्समुद्रम्पवमानऊर्मि

२ १ १ १ १   २८ १ २   ३ २   १   ४
णा२३४५। राजादा१यिवा२ः। ऋता३म्। ऊ२३वा

१   १ १ १ १   २८ १   २   २
३। बृहा२३४५त्॥(२) राजा। दायिवऋता३१उवा२

५   १८ ८ २८ १ २ १ २   १   ८   २ १ १ १ २
३। बृ२३४हात्। राजादेवऋतम्बृहद्यमित्रस्यवरुण

१   २ १ १ १ १   २ १   २   ३ २   १
स्यधर्म्मणा२३४५। प्रहायिन्वा१ना२ः। ऋता३म्। ऊ

४   १   १ १ १ १
२३वा३। बृहा२३४५त(३)॥ ८ *॥ [४]

५   २   ४८ ५ ४८   ५   १   २८
॥ पौरुहन्मनम्॥ अभिसो३मास आयवाः। पावन्ते

१   १   १   २   ८   १
म। दियम्मा१दा२म्। मादा२म्। सामुद्रस्या। धा

२   १   २   १   २ ३   ५
यि। विष्टपा३यि। विष्टपा३यि। मानीषा२३४यिणाः।

१   २८   १   २   ३   ५   ४
मात्सरासो। मादच्यू२३४ताः। मदा ५ च्युताः॥(१)

---

* ऊ० गा० ४प्र० १ख० ८सा०।

मत्सरासः । मदाच्यु१ता२ः । च्युता२ः । तारत्समु । द्राम् । पवमा३ । पवमा३ । नाजर्मा२३४यिणा । राआदेवाः । आर्त्तम्बृ२३४हात् । ऋतायुम्बृहात् ॥(२) राजा दा३यिवऋतम्बृहात् । राजादेवः । ऋतांबृ१हा२त् । मा पमित्र । स्या । वरुणा३ । वरुणा३ । स्यावर्मा२३४णा । प्राच्छिन्वानाः । आर्त्तंबृ२३४हात् । ऋतायुम्बृहात् । होपूई । डा(३) ॥ ८ * ॥ [५]

॥ दैगतम् ॥ अभिसो३मासआयवाः । पावन्ते म दियाम्मा१दा२म् । समू३ । हौ३हो३वा । द्रस्याधिवि षवेमानो१षिणा२ः । मत्सा२३ । रा२सा२३४औहोवा । ए३ । मदा२च्युता२३४५ः ॥(१) मत्सरा३सोमदच्युताः । मात्सरासः । मदाच्यु१ता२ः । तरा३त् । हौ३हो३वा ।

* ऊ० गा० ४प्र० २ख० ८गा० ।

१ २ २ १२ १ २
समुद्रम्पवमानऊ३र्मिणा२। राजा२३। दा३र्थिवा२३
५ ५२२ २ १ ३११११ ५२२
४औहोवा। ए३। ऋता२म्बृहा२३४५त्॥(२) राजा
२ ४५४ ५ १ २१२ १२
दां३यिवऋतंबृहात्। राजादेवः। ऋतांबृ१हा२त्।
२१ ५ २ २ १ ७
अर्षा३। हौ३।हो३वा। मित्रस्यवरुणस्याधर्मणा२।
१ १ ३ ५२२ २ १ ३
प्रहा२३यि। न्वा२ना२३४औहोवा। ए३। ऋता२म्बृहा
११११
२३४५त्(३) ॥ १० * ॥ [६]

१ २२ २१
॥ हारायणम् ॥ अभिसोमौहो२यिमआयवाः। पा
२ २ २ १ २
वन्तेमद्यम्मदम्। समूद्रा३स्या। धिविष्टपायि। मना
२ १ १ २२ २१ ५
३हायि। षायिणा२ः। मत्सरासोमदोवा३ओ२३४वा।
४ ५ २२ १
च्यूपूतो६हायि ॥(१) मत्सरासोहो२यिमदच्युताः। मा
२२ २ २
त्सरासोमदच्युतः। तरात्सा३मू। द्रपवमा। नऊ३
२ १२२२ २ १ ५ ४
हा। मायिणा२। राजादेवऋतोवा३ओ२३४वा। बृ

* ऊ० गा० ४प्र० १अ० १०सा०।

५ १ २र२ १ २र

५होईषायि ॥(२) राजादेवोद्यो २कृतंबृहात्। राजाद्दे

२ २ १ १

वऋतंबृहत्। मर्षामा३ यिन्रा। मयवरुणा। स्यथा३

२ १ १ र २ १ ५ ४

हा। माणा२। प्रहिन्वानऋतोवा३ओ२३४वा। बृ५हो

५

ई२षायि(३) ॥ ११ * ॥ [७]

२ र ५

॥ अच्छिद्रम् ॥ अभिसोमा। सआ३१उवा२३। या

५ १ २र१ २१३११११ २ र

२३४वाः। पवन्तेमदियम्मदा२३४५म्। पवन्तेमा। दि

५ २ १ र २१२र२

या३१उवा२३। मा२३४दाम्। समुद्रस्याधिविष्टपेमनी

१३११११ २ १ र२

षिणा२३४५ः। समुद्रस्या। धिवि। ष्टा। पेमना३१उ

५ २ १र र२ १ ११११११

वा२३यि। षी२३४णाः। मत्सरासोमदच्युता२३४५ः।

२ र ५ २

मत्सरासाः। मदा३१उवा२३। च्यू२३४ताः ॥(१) मत्स

र ५ २ १र र

रासाः। मदा३१उवा२३। च्यू२३४ताः। मत्सरासो

२ १३११११ २ २

मदच्युता२३४५ः। मत्सरामाः। मदा३१उवा२३। च्यू

---

* ऊ० गा० ६प्र० २अ० ११सा०।

५ १ २ १ २र र १ ३ १ १ १ १ २
२३४ना:। तरत्समुद्रम्पवमानऊर्मिणा२३४५। तरत्स

१ २ १ ५
मू। द्रम्पव। मा। नऊ३आउवा२३। मोर२३४णा।

१र र २र१ १ १ २ २र र र
राजादेवऋतंबृहा१त्। राजादेवाः। ऋता३१उवा२३।

५ २र र र १ २ १ ३ २र र र
बृ२३४हात्। राजादेवऋतंबृहा१त्। राजादेवाः। ऋ

५
ता३१उवा२३। बृ२३४हात्। राजादेवऋतंबृहा१त्।

१ र २ १ २
राजादेवाः। ऋता३१उवा२३। बृहात्। अर्षामित्रस्य

१ २ १ ३ १ १ १ १ र र १ २
वरुणस्यधर्मणा२३४५। अर्षामित्रा। स्यवरु। णा। स्य

५ १ २र १ २ १ २
धा३१उवा२३। मा २ ३४णा। प्रहिन्वानऋतंबृहा१त्।

२ र ५
प्रहिन्वानाः। ऋता३१उवा२३। बृ२३४हात्(३) ॥१२*॥[८]

२ र र १ ५ १
॥ रौरवम् ॥ अभिसोमासा३आया२३४वाः। पाव

र र र ३ २ १ २
न्तेमद्यम्मदꣳसमुद्रस्याधिविष्टपेमनार्यिषिणाः। ओहा

२ १ २र २ १ २ २
३उवा। मत्सरासोमदा२३हायि। ओहा३उवा। च्यु

* ऊ० गा० ४प्र० २ख० १२सा०।

२ २ ४ ५ १ २र १ ५
ता। औ ३ होवा ॥(१) मत्सरासोमाइदच्यू २३४ताः।
१ २र र ३ १ १
माऽत्सरासोमदच्युतस्तूरत्समुद्रम्पवमानऊर्म्मि णा। ओ
२ १ १र र र २ १ २ २
हा३उवा। राजादेवऋता२३ऽहायि। ओहा ३ उवा।
१ ४ ५ २र र र १ ५
बृहात्। औ २ ३ होवा ॥(२) राजादेवआ३तैंब २३४हा
१ र र र २ ३
त्। राजादेवऋतंबृहदर्षामित्रस्यवरुणस्यधा र्म्म णा।
१ २ २ १ र २ १
ओहा३उवा। प्रहिन्वानऋता२३ऽहायि। ओहा३उ
२ १ ४ ५ ४
वा। बृहात्। औ२३होवा। हो५ई। डा(३) ॥१३*॥[९]

१ २ २र र २र १ २
॥ मानवोत्तरम् ॥ होवायि। अभिसोमासआयवः।
१ र ७ १ र १
होवायि। पावन्तेमद्यम्मदम्। सामुद्रस्या। धायि
७ १ ७ ३ ५ २ १
विष्टया३१यि। मनारेयिषा२३४यिणाः। मत्सारा २ ३
२ २ ३ ५ र र २ ५ १
साइः। मारदा२३४औहोवा। चयू२३४ताः ॥(१) होवा
२ १र र २ १ २ १ र र
यि। मत्सरासोमदच्युतः। होवायि। मात्सरासोम

* ऊ० गा० ७प्र० १ख० १३सा०।

१ ० २ १ ७ २ ७ ३
द्ध्युतः । आरुसमु । द्राम्पवमा३१ । मजरर्म्मा२३४वि

५ ५ १२ १ २ १ ३ ५र २
या । राजादा२३यिवा३ः । आ२र्त्ता २ ३ ४ औहोवा ।

३ ५ १ र र २र१२१२ १
ब२३४हात् ॥(२) होवायि । राजादेवऋतम्बृहत् । हो

र र ७र १ १ ० १
वायि । राजादेवऋतंबृहत् । आर्षामित्र । स्यावरुणा

७ ३ ५ ११ २ १ ३
३१ । स्यधार्र्म्मा२३४णा । प्रहायिन्वा२३ना३ः । आर्त्ता

५र र ३ ५
२३४औहोवा । बृ२३४हात् (३) ॥ १४ * ॥ [१०]

१ २ १ र र र १ र
॥ आनूपवाध्यश्वम् ॥ अभीअभी । सोमासा३याया

१ २र १ ० १
१वा२ः । पावन्तेम । दियाम्मा१ दा२म् । सामू२

१ १ र२१र २ १ र २
द्रास्या२ । धिविष्टपेमनीषा२३यिणाः । मत्सारा३ सा

१ ४ २ ५ १ २ १ २
३ः । मा२३दा३ । च्यू३४५तोर्द्चायि ॥(१) मत्सामत्सा ।

र र १ १ १ १ १ र१
रासोमा३दाच्यू१ता२ः । तारा२त्सामू२ । द्रपवमान

१र २ १र २ २ १ ४
ऊर्म्मा२३यिणा । राजादा३यिवा३ः । च्या २३ त्ता३म् ।

* ऊ० गा० ७प्र० २श० १४सा० ।

२ ५ १र २ १र २ र १ २
बृ३४५चोइ्हायि ॥(२) राजाराज्ञा । देवक्ष३तांबृ१हा

१ र २र १ २ १ १
२त्। राजादेवः। क्षतांव१हा२त्। आर्षा२ माबि

१ २ १ २ १ २ २
आ२। श्यवरुणस्यधर्मा२३णा। प्रहायिन्वा ३ मा भ्र

१ ४ २ ५
आ२३र्त्ता३म्। बृ३४५चोइ्हायि(६) ॥ १५ ॥[११]

४ ३ र ४र ५ र २ २ १
॥ वाम्रम् ॥ अभिसोमासआ। हा३हा३यि। आ२

र ५ १ १र १ ०
३४। वायवोवा। पवाहो२। तेमाहो२। दायआ

१ २ र १ २ ३ १ २
दा२म्। सामुद्रस्या। धिवायिष्टापेमनाउवा३। ऊ

५ १ १ १ १
३ ४ पा। षिणा२ः। मात्सा२रासा२ः। मद। च्यु

३ ५र र ४ ३र ४र ५ र २ १
२ता२३४औहोवा ॥(१) मत्सरामोमदा। हा३हा३यि।

१ ५ १ १र
च्यू२३४। तच्युतोवा। मत्साहो२यि। रासाहो२।

१ ० १ २ १ २ ३ १
मादच्यूता२ः। तारत्समु। द्रम्यावामा। नआउवा३।

२ ५ १ १ १ १
ऊ३४पा। मिणा२। राजा२दायिवा२ः। ऋतम्।

* ऊ० गा० ७प्र० २ पा० १५ सा०।

२ ५र र ३र ४र र १ ४ ५ २ २
व्हा२३४औहोवा॥(२) राजादेवऋतम्। हाउवाइयि।

१ ५ १र १र १
हू२३४। हहूहोवा। राजाहोऽइयि। देवाहो२। श्रा

ॐ. १ र २ १ १ ५
वँवहाऽरत्। आर्षामित्र। स्वधाउवा३। ऊ३ ४ पा।

१ १ १ १ ३
मणा२। प्राहाऽइयिन्वाना२ः। ऋतम। व्हा२३४

५र र २ ५
औहोवा। ऊ२३४पा(३)॥ १६॥ [१२]

५ ४ २ ४ ५र ४ ५ १
॥ अभीवर्त्तम्॥ अभाइयिसोऽमाऽसआयवोवा। पा

१र १ २ १ ३
वन्तेम। दियाम्मा१दा३म। सामुद्रस्या३१२३४। धि

४ ५र २ १ २ १ २ ३ २
विष्टपे। मनायिपा१यिणा२ः। म२पारा१सा२ः। मदा

१ ३ १ १ १ १
३। च्यू२३४५। ता२३४५ः(१)॥ १६*॥ [१३]

५ २ ४र ५ ४ ५ २ १ १र १
॥ कालेयम्†॥ मत्सरा३सोमदच्यूताः। मत्सारासो।

२ ३ १ १ २ ३ २ १ १ ४र ५र
मदच्यूता२३ः। तरत्समू३। द्रा२३४म्। पवमानऊ।

---

* ऊ० गा० ७प्र० २श्रा० १६सा०।

† "महाकालेयम्"—इति वि०।

माइयिणा। राजादेवौ। वा३४३वा। ऋतापृभ्वृहात्।

चोपृई। डा(२)॥ १७ *॥ [१४]

॥ गौङ्गवम्॥ अभिसोइमासआयवाः। पावा२। ते

मदियाइम्। मादाम्। समुद्रस्याधिविष्टां२३पा २ यि।

मनाइयिषायिणाः। समुद्रस्याधिविष्टये। मनाइयिषा

यिणाः। मात्सरा। सा। औ३हो। मदो२३४वा।

च्यूपृतोई३हायि॥(१) मत्सरा३सोमदच्युताः। मात्सा २।

रासोमदा३। च्यूताः। तरत्समुद्रम्पवा२३मा३। नऊ

३र्मायिणा। तरत्समुद्रम्पवमा। नऊ३र्मायिणा। रा

जादे। वा। औ३हो। ऋतो२३४वा। बृपृचोई३हा

यि॥(२) राजादा३यिवऋतंबृहात्। राजा२। देवऋ

ता३म्। बृहात्। अर्षामित्रस्यवरु२३णा२। स्वधा३

* ऊ० आ० ७प्र० २खा० १७सा०।

मोणा । पर्यामित्रस्यवरुण । स्यधा३मोणा । प्राचिन्ना । ना । औ३हो । श्तो२३४वा । व पुत्तो६हायि(३)॥१८*॥[१५]

॥भारद्वाजम्॥ अभिसोमा । सआया१ वा२ः । पावन्तमद्यम्मदम् । समूद्रा१स्या२ । धायिविष्टपे । म मायिषा१यिणा२ः । मत्सारा१सा२३ः । मा२दा२३४ओ वा । च्यू२३४ताः(१) ॥ १५ † ॥ [१६]

॥मैधातिथम्॥ अभिसोमोहायि । सआ३यावाः । पवन्ता२हो१यि । माऔ३हो । दायाउवा । मादाउ वा । समुद्रस्याधिविष्टपाऔ३हो । मानाउवा । षा यिणाउवा । मत्सरासाऔ३हो । मदा । औहो । वा हो२३४वा । च्यूपुतो६हायि॥(१) मत्सरासोहायि । म दा३च्यूताः । मत्सरा२हो१यि । साऔ३हो । मादा

* ऊ० गा० ८प्र० २खा० १८सा० । † ऊ० गा० ६प्र० २खा० १५सा० ।

उक्ता । चूताउवा । नरत्समुद्रस्पवमाऔ३हो । मा
थाउवा । मायिणाउवा । राजादेवाऔ३हो । ऋता ।
औहो । वाहो२३४वा । बृ५होइहायि ॥(२) राजादेवो
हायि । ऋता३म्बहात् । राजादा२हो१यि । वाऔ३
हा । मार्त्ताउवा । बृहाउवा । अर्षामित्रस्यवरुणा
औ३हो । स्याधाउवा । माणाउवा । प्रहिन्वानाऔ३
हो । ऋता । औहो । वाहो२३४वा । बृ५होइहा
यि(३) ॥ ६* ॥ [१७]

॥ उत्सेधम् † ॥ अभिसोमास आयवः । पव । तेमा
३४औहोवा । दियम्मदारम् । हा३१उवा२३ । ऊ३४
पा । समूद्रस्या । औहोवाहायि । धायिविष्टपायि ।
मनीषायिणाः । हा३१उवा२३ । ऊ३४पा । मत्साश्रा

* ऊ० गा० ६प्र० ३ख० ६सा० । † "उत्सेध"—इति क० पु० ।

* सः । औहोवायि । मदाश्च्यू५ता६५६: ॥(१) अत्सरा सोमदच्युतः । मत्स । रासा३४औहोवा । मदच्युता२:। हा३१उवा२३ । ऊ३४पा । तरा३त्समु । औहो वाहायि । द्रापवमा । नऊर्म्मायिणा । हा३१उवा२३ । ऊ३४पा । राजा३देवः । औहोवाहायि । ऋता३म्बृ५ हाई५६त् ॥(२) राजादेवऋतंबृहत् । राजा । देवा ३४औहोवा । ऋतंबृहा२रत् । हा३१उवा२३ । ऊ३४ पा । अर्षा३मित्रा । औहोवाहायि । स्यावरुणा । स्य धर्म्माणा । हा३१उवा२३ । ऊ३४पा । प्रहा३यिन्वानः । औहोवाहायि । ऋता ३ म्ब ५ हा ६ ५ ६ त् । औ २ ३ ४ ५(३) ॥ २ * ॥ [१८]

॥ सदोविश्रीयम् ॥ अभिसोमासआयवओहाओहा३

* ऊ० गा० १२प्र० १अ० ३खा० ।

ए। औहोऔहो३वा। पवन्तेमद्रियम्मदम्। ओ३हा।
समुद्रस्याधिविष्टपेमनीषिणः। ओ३हा। मत्साराऽसा
२ः। ओ३हा। ओ३हा३ए। औ३होयि। औ३हो
३वा। मद। च्यु२ता२३४औहोवा ॥(१) मत्सरासो.
मदच्युतओहाओहा३ए। औहोऔहो३वा। मत्सरा
सोमदच्युतः। ओ३हा। तरत्समुद्रम्पवमानऊर्म्मिणा।
ओ३हा। राजादाऽयिवा२ः। ओ३हा। ओ३हा३ए।
औ३होयि। औ३हो३वा। ऋतम्। बृ२हा२३४औ
होवा ॥(२) राजादेवऋतंबृहदोहाओहा ३ ए। औहो
औहो३वा। राजादेवऋतंबृहत्। ओ३हा। अर्षा।
मित्रस्यवरुणस्यधर्म्मणा। ओ३हा। प्रहायिन्वाऽना२ः।
ओ३हा। ओ३हा३ए। औ३होयि। औ३हो ३ वा।

ऋतम् । बृ२हा२३४औहोवा । सदोविश्वा२३४पुः(३) ॥ १६ * ॥ [१८]

॥ जनित्राद्यम् ॥ अभिमो३मासआयवाः । ऊवेहो२यि । पवन्तेमदियम्मा१दा२रम् । समुद्रस्याधिविष्टपा२यि । मनार्२यिषा२३४यिणाः । मत्मा३होयि । रामा३हो । मद । च्यू२ता२३४औहोवा ॥(१) मत्सरा३सो मदच्युताः । ऊवेहो२यि । मत्सरासोमदाच्यू१ता२ः । तरत्समुद्रम्पवमा२ । नऊर्म्मा२३४यिणा । राजा३होयि । देवा३हो । ऋतम् । बृ२हा२३४औहोवा ॥ २) राजा दा३यिवऋतंबृहात् । ऊवेहो२यि । राजादेवऋतांबृ१हा२त् । अर्षामित्रस्यवरुणा२ । स्यधार्म्मा२३४णा । प्र

* ऊ० गा० ११प्र० २अ० १६गा० ।

२ १ र १ १ २ १ २ ५र

हाउयिवौयि । न्वानाउहो । ऋतम् । ब२हार२३४वौ

र २ १ १ १ १ १

होवा । जनित्वा२३४५म्(३) ॥ ८ * ॥ [२०]

१ र र र र र र र

॥ दैर्घश्रवसम् ॥ अभिसोमासआयवओहा । ओहा३

२ १ २र १ २ ५ २ ५ २ २

ए । पवन्तेमदियम्मदम् । ओ३हा । ओ३हा३ए३४ ।

३ २ ३ २ १ ० र १ र २ ५ २

समू३४द्रस्या । धायिविष्ट । पेमानीषिणाः । ओ३हा ।

५ २ २ ३ २ ३र २ २ १ ५

ओ३हा३ए३४ । मत्सा३४रासा३ः । मदो २ ३ ४ वा ।

४ ५ २ र र र र र २

च्यू५तोई३हायि ॥(१) मत्सरासोमदच्युतओहाओहा३ए ।

१र र २ १ २ ५ २ ५ २ २ ३ २

मत्सरासोमदच्यूतः । ओ३हा । ओ३हा३ए३४ । तरा

३ २ १ २ र १ र २ ५ २ ५

३४सम् । द्राम्पव । मानाऊर्म्मिणा । ओ३हा । ओ

२ २ ३र २ ३र २ २ १ ५ ४

३हा३ए३४ । राजाजा३४देवा३ः । ऋतो२३४वा । ब६

५ २र र र र र र २ १र

५होइ३हायि ॥(२) राजादेवऋतंबृहदोहाओहा३ए । रा

र १र १ २ १ २ १ ५ २ ५ २ २ ३ २

जादेवऋतंबृहात् । ओ३हा । ओ३हा३ए३४ । धर्षा

* ऊ० गा० १४प्र० १ख० ९सा० ।

२३४मित्रा। स्यावरु। णस्याधर्म्मणा। श्रोइ्वा। श्रो

इ्वा३ए३४। प्रहा३४यिन्वाना३:। ऋतो२३४वा। बृ

५ण्डाइडायि(३)॥ ५*॥ [२१]

॥ सन्तनिं॥ अभीहाउ। सोमामत्रा३१उवा २ ३।

या२३४वाः। पवन्ते मदियम्मदं समुद्रस्याधिविष्टपेमनी

षिणा२३४५:। मत्साहाउ। रासोमदा३१उवा २ ३।

श्च२३४ताः॥(१) मत्सरासोमदश्च तोमत्सरासोमदश्चु त

स्तरत्समुद्रम्पवमानऊर्म्मिणा२३४५। राजाहाउ। दा

यिवऋता३१उवा२३। बृ२३४हात्॥(२) राजादेवऋतं

बृहद्राजादेवऋतंबृहदर्षामित्रस्यवरुणस्यधर्म्मणा२३४५।

प्रहायिहाउ। न्वानऋता३१उवा२३। बृ२३४हात्(३)॥

॥ ७ † ॥ [२२]

---

* ऊ० गा० १४प्र० २ख० ७खा०।

† ऊ० गा० १४प्र० २ख० ७खा०।

२ १ र र ० र १ १ २ र २ र १ र
॥ आष्टादंष्ट्रोत्तरम्॥ अभिसोमासआयवऐयाऽऽ।

२ २ १ २र१ २ १ २र
औ३वा। पवन्तेमदियम्। मादा२३म्। ऐया२३त्।

१ र २ १ र २ १ र २ र १ १र
औ२३होवा। समुद्रस्याधिविष्टपेमनी। षायिणा२३ः। ऐया

१ र २ १र र २ १
२३त्। औ२३होवा। मत्सरासोमद। च्यूता२३ः।

१र १ र २ १
ऐया२३त्। औ२३होवा३४३। ओ२३४५ई। डा३)॥

॥ २ * ॥ [२२]

२ र र र
॥ आभीशवोत्तरम्॥ अभिसोमासआयवए। ए। पव

र १ ० २ ३ ५ २ २ १ र
न्तेमा३दायम्मादम्। सा२३५म्। हा३हा। द्रस्याधि

र २ २ ३ ५ २ २ १ र
विष्टपेमानी१षिणाः। मा२३४त्सा। हा३हायि। रासो

२१ ५ ४ ५ २ रर
मदो२३४वा। च्यू५तो६हायि॥(१) मत्सरासोमदच्युत

र ऽर १ ० २ ३ ५ २
ए। ए। मत्सरासो३मादच्युतः। ता२३४रात्। हा३

२ १ र २ २ ३ ५ २
हायि। समुद्रस्पवमानाऊ१र्म्मिणा। रा२३४जा। हा

* ऊ० गा० १६प्र० २अ० २गा०।

२ १ २१ ५ ४ ५
३ हायि । हायिवरुतो२३४वा । वृ५हो६ हायि ॥(२)

२२ २ २ २ २ २ १ २
राजादेवक्ततंब्रहद् । ए । राजादेवा३मातंबृहात् ।

२ ५ २ २ १ ० २
आ२३४र्षा । हा ३ हायि । मित्रस्यवरुणस्याधर्म्मणा ।

२ ५ २ २ १ २१ ५ ४
प्रा२३४हायि । हा३हायि । न्वानऋतो२३४वा । वृ५

५
हो६हायि(३) ॥ ३ * ॥ [२३]

५ २ ४२ ५२४५ १
॥ आख्कारनिधनम् † ॥ अभिसो३मासऽआयवः । पा

२२ १ २ १ २१ २
वन्तेम । दिया२३म्मदा३ । वा३२ । समुद्रस्या । धि

२११ २१२ ५ १ २ १५२२
विष्टपायि । मनीषा२३४यिणः । मा२३त्सा । रासोम ।

१ ५ २ ४२ ५४५ १ २२
दच्यू२३४५ताई५६ः ॥(१)मत्सरा३मोमऽदच्युताः । मात्सरा

१ २ १२१ २३२
सः । मदा२३च्युताउ । वा २ ३ । तरत्सम् । द्रप्सव

१ २१२ ५ १ २ १२ २ १
मा । नजम्मी२३४यिणा । रा२३जा । देवक्क । तंबृ

५२२ २ ४ ५४५ १ २
२३४५हाई५६त् ॥(२) राजादा३यिवक्कऽतंब्रहात् । राजा

---

* ऊ० गा० १६प्र० १ख० ३सा० । † "आख्कारणिधन काण्वम्"—इति ब० पु० ।

२र १ २ १र २ १ २ २
द्वेवः। ऋतार३त्रबृ्हाउ। वा३२। अर्णमिचा। ष्वव

२ १ २ १ ५ १ २ १र २ १
त्तर्णा। स्वधर्म्मा२३४णा। प्रा२३हायि। न्वानऋ। तं

२ १ १ १ १
बृ२३४५हाई५६त्। आ२३४५ष्(३) ॥ २* ॥ [२४]—

२ र र ३ ५
॥ मानवाद्यम् ॥ अभिसोमा। सआया२३४वाः। २।

१ २प १ २ १ ७ र
पावन्ते म। दियाममा१दा २म्। सम्। ऊ। द्रक्षा।

१ ७ २ १ ३ ५ १ २ र १
धायिविष्टपा३यि। मनार२यिषा२३४यिणाः। मत्सरासा

१ २ ५र र र ५ २
२३ः। मार२दा२३४औहोवा। च्यू२३ ४ ताः ॥(१) मत्स

र ३ ५ २ ३ ५ १ २र
रासाः। मदच्यू२३४ताः। मदाच्यू२३४ताः। मात्सरा

१ ३ १ २ १ ७ २
सः। मदाच्यु१ता २ः। त। रत्। समु। द्राम्पवमा

१ ३ ५ १र २र र १ १ २
३। नऊ२र्म्मा२३४यिणा। राजादे वा२३ः। आ२र्णा

५र र ७ ५ १ र र
२३४औहोवा। बृ२३४हात् ॥(२) राजादे वाः। ऋतं

२ ५ २ ३ ५ १ र २र १ २
बृ२३४हात्। ऋतांबृ२३४हात्। राजादे वः। ऋतांव

---

* ऊ० गा० १८प्र० २ख० २सा०।

१ १ १ १ १ १
१हा२त्। अ। षा। मित्र। स्य। वरुणा३। स्वधा

२ ३ १ २ २ १ १ ३ ५ २ २
२म्मा२३४णा। प्रचिन्वाना२३:। आ२र्त्ता२३४औहोवा।

३ ५
बृ२३४हात्(३) ॥ १० *॥ [२५]

१ २२ १ २ २ १ १
॥ महावैष्टम्भम् ॥ अभिसोमोहायि। सम्नायवोवा।

१ २२ १ २ १ २ १
पावन्त म। दियाम्मा१दा२३म्। होवा३हायि समु

१ २ २ १ २ २ १ १ १ २ २
द्रस्याधिविष्टपे। मनायिषा १ यिणा२३:। होवा३हा

१ ० १ २ २ १
यि। मत्सारा१सा२३: †। होवा३हायि। मद। च्यू२

३ ५ २ २ १ २२ १ २ १ २
ता२३४औहोवा ॥ १) मत्सरासोहायि। मदच्युतोवा।

१ २२ १ २ १ १ २ १
मात्सरास:। मदाच्यु १ ता२३:। होवा३हायि। तर

२ १ १२ १ २ १ २ २
त्समुद्रम्पवमा। नऊर्म्मा१यिणा २ ३। होवा ३ हायि।

१२ २ १ २ १ १ ३
राजादा१यिवा२३:। होवा३हायि। ऋतम्। बृ२हा२

५२ २ १२२ २२१ २ १ २ १
३४औहोवा ॥(२) राजादेवोहायि। ऋतंबृहोवा। रा

* ऊ० गा० १८प्र० २ख० १०गा०। † "मत्सारासा१२"—इति क० पु० पाठः।

२ ३१२ ११ १२ १ १२ १
आद्दे वः । ऋतां बृ१ हा२३त् । हो वा३ हायि । ममामि

१ २ १ २ ११ १२ १ १
व्यच्चवदृणा । स्वधामो१ णा२३ । हो वा३ हायि । प्रक्षा

२ १ १ २ १ २
यिन्वा१ना२३ । हो वा३ हायि । ऋतम् । बृ२ हा२३४

५२ २
औ हो वा(३) ॥ १० * ॥ [२६] ६

अथ द्वितीयतृचे—प्रथमा ।

३ १ २२ ३ १ २२
तिस्रोवाचईरयतिप्रवह्निः

३ १ २ ३ १ २२ ३ २
ऋतस्यधीतिम्ब्रह्मणोमनीषाम् ।

१ २ ३ १ २ ३ १ २ ३
गावोयन्तिगोपतिम्पृच्छमानाः

१ २ ३ १ २ ३ २
सोमंयन्तिमतयोवावशानाः ॥ ११ † ॥

"वह्निः" वोढा यजमानः "तिस्रो वाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति । तथा "ऋतस्य" यज्ञस्य "धीतिं" धारयित्रीं "ब्रह्मणः" परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याणीं वाचं प्रेरयति । किञ्च "गोपतिं" वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः"

* ऊ० गा० ११प्र० २ख० १०गा० ।

† छ० आ० ६, १, ४, ९ ( २भा० ११९पृ० ) = ऋ० वे० ७, ४, १७, ४ ।

"पृच्छमानाः" पृच्छन्त्यः सत्यः यन्ति स्व-पयसा मिश्रयितुम् अभिगच्छन्ति । तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारश्च "सोमं" "यन्ति" स्तोतुमभिगच्छन्ति ॥ १ ॥

अथ द्वितीया ।

१ २ १ २ ३ १ २ ३ २उ
सोमङ्गावोधेनवोवावशानाः

२ १ २ ३ १ २ ३ १ २
सोमंविप्रामतिभिः पृच्छमानाः ।

१ २ ३ १ २ ३१ २ ३
सोमःसुतऋच्यतेपूयमानः

१ २ ३ २ ३ २१ १ २
सोमेअर्कास्त्रिष्टुभःसन्नवन्ते ॥ २* ॥

"धेनवः" † प्रीणयित्र्यो "गावः" "सोमं" "वावशानाः" कामयमाना भवन्ति, "विप्राः" मेधाविनः स्तोतारः ‡ "सोमं" "मतिभिः" स्तुतिभिः ¶ "पृच्छमानाः" पृच्छन्तो भवन्ति "सुतः" अभिषुतः "सोमः" "पूयमानः" ऋत्विग्भिः "ऋच्यते"

* ऋ० वे० ७, ४, १७, ५ ।

† 'आदित्यरश्मयो धेनवः'—इति वि० ।

‡ 'विप्राः—ब्राह्मणा ... अथवा विप्रा आदित्यरश्मयः'—इति वि० ।

¶ 'मतिभिः—प्रज्ञाभिः'—इति वि० ।

चरति * । तथा "त्रिष्टुभः" त्रिष्टुब्रूपाः † "अर्काः" अस्माभिः क्रियमाणा एते मन्त्राः "सोमे" "सचन्ते" सङ्गच्छन्ते ॥

"सोमस्सुतऋच्यतेपूयमानः"—इति छन्दोगाः, "सोमः सुतः पूयतेअज्यमानः"—इति बह्वृचाः ॥ २ ॥

अथ तृतीया ।

३ १ २　　　　३ १ २ ३
एवानःसोमपरिषिच्यमान

१ २　 ३१२　　३ २
आपवस्वपूयमानःस्वस्ति ।

२ ३ १ २　३ १र २र
इन्द्रमाविशबृहतामदेन

३ २ ३ १ २ ३ २ ३ १ २
वर्द्धयावाचञ्जनयापुरन्धिम् ॥ ३ ‡ ॥ १०

हे "सोम !" "परिषिच्यमानः" परितः पात्रेषु सिच्यमानः पूयमानः त्वं "नः एव" अस्माकमेव "स्वस्ति" ¶ अविनाशम् आ पवस्व प्रापय । किञ्च "बृहता" महता "मदेन" मदकर-रसेन अहम् "इन्द्रम्" "आविश" प्रविश । तथा "वर्द्धय" "वाचं" स्तुति-लक्षणां § प्रसिद्धां कुरु । किञ्च

* 'ऋच्यते—ऋच् गतौ । गच्छति'—इति वि० ।

† 'त्रिष्टुप्छन्दस्काः अथवा त्रिष्टुभः त्रयो विद्यां स्तोभयन्त'—इति वि० ।

‡ ऋ० वे० ७, ४, १८, १ । "रवेण"—इति च तत्र पाठः ।

¶ 'स्वस्ति—क्षेम कुरु'—इति वि० ।

§ 'वाचम्—ऋग्यजुःसामलक्षणाम्'—इति वि० ।

"पुरन्धिं" बहुधियं प्रज्ञानं * "जनया" † अस्मभ्यमुत्पादय । वाक्यभेदादनिघातः ‡ ॥ ३ ॥ १०

॥ सङ्क्रोशम् ॥ होयि । हो । हा३होयि । तिस्रो वाचाः । ई३रय । तिप्रवह्नीः । ऋतस्यधायि । ती३ म्ब्रह्म । णोमनीषाम् । गावोयन्तायि । गो ३ पतिम् । पृच्छमानाः । सोमंयन्तायि । मतयः । वा३४३ । वा ३४३ । वा३आ५ना६५६ः ॥(२) सोमङ्गावो । धे३नवः । वावशानाः । सोमंविप्राः । मतिभिः । पृच्छमानाः । सोमःसुताः । ऋच्यते । पूयमानाः । सोमेअर्काः । त्रिष्टुभः । सा३४३म् । ना३वाऽपूता६५६यि ॥(२) एवा

---

* 'पुरन्धि'—पुष्टिम्'—इति वि० ।

† 'इह मन्त्रे एवेत्यादौ बहुत्र छान्दसं दीर्घत्वम् । तथाच—"एवा"—इत्यत्र "निपातस्य च ( ६, ३, १३६ )"—इति दीर्घं, "वर्द्धया"—"जनया"—इत्यनयोस्तु "द्व्यचोऽतस्तिङः ( ६, ३, १३५ )"—इत्यत्र "तिङः"—इति, योगविभागाद्दीर्घः ।

‡ "तिङ्ङतिङः ( ८, १, २८ )"—इति प्राप्तो निघातः "छन्दस्यनेकमपि साकाङ्क्षम् ( ८, १, ३५ )"—इति तदभावइत्यर्थः ।

२ १ १ २ ४ ५ २र १ २ १
नःसो। मा३परि। षिच्यमानाः। आपवस्वा। पू३य
२ २ ३ ४ ५ २ १ र २ १ २ ३ ४ ५
मा। नःसुवस्ती। इन्द्रमावायि। आ३व्र्‌व। तामदेना।
१ २ १ ३ १ र २ १
होयि। वो। हा३वोयि। वर्द्धयावा। चा३रून्व।
२ २ ४
या३४३। पू३रा५धा६५६यिम(३)॥ १७ *॥ [१] १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य
तृतीयः खण्डः † ॥ ३ ॥

---

अथ चतुर्थखण्डे, ‡ प्रगाथरूपे—
प्रथमसूक्ते—प्रथमा।

१ २र ३ २र ३ १ २र ३ १
यद्याव इन्द्र ते शतꣳ शतम्भूमीरुतस्युः।
१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
नत्वा वज्रिन्त्सहस्रꣳ सूर्य्या अनु न जातमष्टरोदसी ॥ १ § ॥

---

* ऊ० गा० १प्र० १ख० १७सा०। † 'उक्तो माध्यन्दिन'—इति वि०।

‡ 'इदानीं पृष्ठान्युच्यन्ते। रथन्तर बृहत्, विरूप वैराज, शाक्कर, रैवतचेति पृष्ठ षडुक्त, तस्य पृष्ठानि सधर्मकानि भवन्ति—इति वि०। 'रथघोषं, दुन्दुभ्याख्यानम्, उपवाजनम्, उरोऽग्निमन्थनम्, आर्याघोष, गवां घोषः इति पृष्ठधर्मा अन्यासकृत्वां पृष्ठ षडके चन्यचनि गौरीवित यावत्'—इति च वि०।

§ ऋ० ग्रां० ९, २, ४, ६ (१ मा० ५७२४० ,=ऋ० वे० ६, ५, ८, ५।

हे "इन्द्र !" "ते" तव प्रतिमानार्थं "यद्" यदि "द्यावः" द्युलोकाः "शतं" शत-सङ्ख्याकाः "स्युः" तथापि नाम्नुवन्ति । "उत" अपिच "भूमीः" भूम्यः "ते" तव मूर्त्ति-प्रतिबिम्बाय "शतं" स्युः तथापि "न" अश्नुवन्ति । हे "वज्रिन्" "त्वा" त्वाम् "सहस्रं" "सूर्याः" अगणिता अपि सूर्याः "न" "अनु" भवन्ति न प्रकाशयन्तीत्यर्थः । "न तत्र सूर्यो भाति (वृ०उप०)" —इति श्रुतेः । किं बहुना जातं पूर्वमुत्पन्नं किञ्चित् त्वामनु "नाष्ट" नाश्नुते तथा "रोदसी" द्यावापृथिव्यौ नाश्नुवाते सर्वेभ्योऽतिरिच्यसे इत्यर्थः । "ज्यायान् पृथिव्या ज्यायानन्तरिक्षाद् दिवो ज्यायानेभ्यो लोकेभ्यः"—इति ( वृ० उप० ) श्रुतेः ॥ १ ॥

अथ द्वितीया ।

१ १ २ १ २र २ १ २ ३ १ २
आपप्राथमहिनावृष्ण्यावृषन्विश्वाशविष्ठशवसा ।
३ १ २ २ १ २ ३१ २र ३ १ २ ३ १ २
अस्माꣳअवमघवन्गोमतिव्रजेवज्रिञ्चित्राभिरूतिभिः॥२*॥११

हे "वृषन्" अभिमतवर्षकेन्द्र ! त्वम् "आ पप्राथ" आ पूरयसि व्याप्नोषि । कानि ? "विश्वा" सर्व्वाणि "वृष्ण्या" वर्षकाणि बलानि शत्रु-सम्बन्धीनि । केन साधनेन ? "महिना" महता "शवसा" बलेन स्वीयेन अथवा वृष्ण्येत्येतच्छवो विशेषणम् । तथा सति अभिमतवर्षकेण महता बलेन अस्मदीयानि बलानि पूरयसीत्यर्थः । अथ तथाकृत्वा हे "शविष्ठ" बल-

* ऋ० वे० ६, ४, ८, १ ।

वत्तम! "ओमति" बहुभिः गोभिर्युक्ते "व्रजे" व्रज-सम्बन्धि-निमित्ते सति "अस्मान्" "अव" रक्ष। हे "मघवन्" धनवन्! "वज्रिन्" वज्रयुक्तेन्द्र! कैः साधनैः? "चित्राभिः" नानाविधैः "ऊतिभिः" रक्षणैरिति॥ २॥

॥ महावैष्टम्भम्॥ यद्यावओहायि। इन्द्रतेशतोवा। शतम्भूमीः। उतास्यो१यू२३ः। होवा३हायि। नत्वा वज्रिन्त्सहस्रम्। रियाआ१नू२३। होवा३हायि। न जाता१मा२३। होवा३हा। इडो। दा२सौ२३४औहो वा॥(१) नजातमोहा। इडोदसोवा। नाजातम। इडोदा१सा२३यि। होवा३हायि। आपप्राथमहिनात्रे। ष्णियावा१र्षा२३न्। होवा३हायि। विश्वाशा१वा२३। होवा३हा। इश। वा२सा२३४औहोवा॥(२) विश्वा शवोहायि। इशसोवा। वायिश्वाशवि। इशावा१सा

१ २ २ १र २ र १
२३। होवा ३ हायि। अस्माऽ२अवमघवन्गो। मतायि
र २ १ १ २ १ २
व्रा१जार३यि। होवा३हायि। वज्रायिम्वा१यित्रा २ ३।
१ १ २ १र ३ ५र र
हौवा ३ हायि। भिक्ष। ता २ यिभा २ ३ ४ औहोवा॥

॥ १८ * ॥ [१] ११

अथ द्वितीयहृचे†—प्रथमा।

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
वयन्त्वासुतावन्तआपोनवृक्तबर्हिषः।
३ १ २ ३ १ २ ३ १ २ ३ १ २
पवित्रस्यप्रस्रवणेषुवृत्रहन्परिस्तोतारआसते॥ १‡॥

हे "वृत्रहन्" इन्द्र! "त्वा" त्वाम् "वयं व" वयं खलु "सुतवन्तः" "आपः न" आप इव प्रवणमभिगच्छामः। "पवित्रस्य" सोमानां प्रस्रवणेषु "वृक्तबर्हिषः" तीर्णबर्हिषः स्तोतारश्च त्वां पर्युपासते॥ १॥

---

* ऊ० गा० २२प्र० १ष० १९सा०।

† 'वामदेव्य मैत्रावरुणं साम, वैद्युभ ब्राह्मणाच्छंसि, रौरवमच्छावाक साम'—इति वि०।

‡ ऋ० सा० ३, २, १, ८ (१ भा० ५४० पृ०) = ऋ० वे० ६, २, ७, १।

अथ द्वितीया ।

१ २  ३ १उ २ १ २  ३ २ ३ १ २
स्वरन्तित्वासुतेनरोवसोनिरेकउक्थिनः ।

३·१ ३ १ २ ३ १उ ३ १ २ ३ १ २ ३ १ ३ १ २
कदासुतन्तृषाणओकआगमइन्द्रस्वब्दीववᳲसगः ॥ २* ॥

हे "वसो" वासयितरिन्द्र । † "त्वा" त्वां "सुते" अभिषुते सोमे "निरेके" निर्गमे ‡ "उक्थिनः" ¶ "नरः" नेतारः "स्वरन्ति" शब्दायन्ते §। अपिचेन्द्रः "सुतं" सोमं प्रति "तृषाणः" तृष्यन् "स्वब्दीव" स्वभूत-शब्दी इव ‖ "वंसगः" वननीय-गमनो** वृषभः शब्दं कुर्वन् "कदा" "ओकः" स्थानम् "आगमत्" आगच्छेत् ॥ २ ॥

---

* ऋ० वे० ६, २, ७, २ । "गमदिन्द्र"—इति मु० पाठः सायण-सम्मतश्च ।

† 'वसो निरेके—हे वसो ! प्रशस्तधन !'—इति वि० ।

‡ 'निरेके—दानवति यज्ञे । अथवा वसोनिरेक इत्येकं पदम्, तथा सा षष्ठी क्रियते—वसुनः वन्यस्य निरेके'—इति वि० ।

¶ 'उक्थिनः—उक्थानि सामानि, ते तद्वन्तः'—इति वि० ।

§ 'स्वरन्ति सामभिः'—इति वि० ।

‖ 'स्वब्दी इन्द्र । शोभन शब्द करोति, दर्शयोभूत्वा हविधारण'—इति वि० ।

** 'वंसगः—वननीयगः'—इति वि० ।

अथ तृतीया।

१ २ ३ १ ३ २र २र ३ १ २

कण्वेभिधृष्णवाधृषद्वाजन्दर्षि सहस्रिणम्।

३ १ २ ३ १र २र

पिशङ्गरूपम्मघवन्विचर्षणेमक्षूगोमन्तमीमहे ॥ ३ * ॥ १२

हे "धृष्णो" धर्षकेन्द्र। † "कण्वेभिः" कण्वान् मेधाविनः स्तोतॄन् अनुग्रहीच्य [ विभक्ति-व्यत्ययः (३, १, ८५) ] "सहस्रिणं सहस्र-सङ्ख्याकं "वाजम्" "आदर्षि" प्रयच्छसि। हे "मघवन्" धनवन्! "विचर्षणे" विद्रष्टरिन्द्र! ‡ "धृषत्" धृष्टं "पिशङ्ग-रूपं" ¶ "गोमन्तम्" वाजं § "मक्षू" शीघ्रम् ‖ "ईमहे" याचामहे, त्वामिति शेषः ॥ ३ ॥ १२

२ १ २ १ २र १ २

॥ महावैष्टम्भम् ॥ वयङ्त्वोहायि। सुतावन्तोवा।

१ र २ १ २ १ २ २ १

आपोनवृ। क्तबार्ही१यिषा२३ः। होवा३हायि। पवि

---

* ऋ० वे० ६, ३, ७, ३।

† 'धृष्णो—धारणशील।'—इति वि०।

‡ 'विचर्षणे—विविधाश्चर्षणयः पुरुषाः यस्य स विचर्षणिः, अथवा विश्वस्य द्रष्टा'—इति वि०।

¶ 'पिशङ्गरूपं—सुवर्णवर्णम्'—इति वि०।

§ 'गोमन्तं'—गोक्षीरयुक्तम्'—इति वि०।

‖ 'मक्षु—मक्षणीयम्'—इति वि०। "निपातस्य च (६, ३, १३३)"—इति दीर्घः।

२ १ २र १२ १२ १ १
चक्षुप्रह्लवणे । पुवार्त्रा१हा२३न् । द्धोवा३ह्वायि । परा

२ १ २ २ १र २ ५र
यिस्तो१ता२३ । द्धोवा३ह्वा । रञा । सा२ता२३४ञौ

र १ २ १ २र १ १ १ २ र
द्धोवा ॥(१) स्वरन्तित्वोद्धायि । सुतेनरोवा । वासोनि

र १ १ २ १र १ १
रे । कऊञ्या१यिना२३ः । होवा३ हायि । कदासुत

२र १ र २ १ २ १ २ २ १
न्तृषाणञ्ओ । कञागा१मा२३ः । द्धोवा ३ हायि । इन्द्र ।

१ २ २ १ ३ ५र
स्वा१व्दी२३ । द्धोवा३ह्वा । वव । सा२गा२३४ । ञौ

र १ र १ र १ २ १ २
द्धोवा ॥(२) कण्वे भिद्धोंद्धा । ष्णु वाधृषोवा । वाजन्द

१ २ १ २ १
र्षि । सद्धासा१यिणा२३म् । द्धोवा ३ ह्वायि । पिशङ्ग

२र १ २ १ २ २ १
रूपम्मघवन् । विचार्षा१णा२३यि । द्धोवा३ह्वायि । मत्तू

२ १ २ १ १र ३ ५र र
गो१मा२३ । द्धोवा ३ ह्वा । नमो । मा२ह्वा२३४ञौहो

६ ५
वा । दी२३४ञाः(३) ॥ १८ * ॥ [१]

५र १ १ २
॥ अभिनिधनङ्काण्वम् ॥ ञौहोहोहायि । ञायिही ।

---

* ऊ० गा० २प्र० १ख० १८सा० ।

१ २ ३ ५ २ ३ ५ २ ३
आयाम्। धार३४त्वा। सूतावार३४न्ताः। आपोनार

५ २र १ २र १ ३ ५ २
३४वृ। क्तावर्हिषाः। ऐहोयि। आर३४यिही। पा

३ ५ २ ३ ५ २र१ २र १
विआर३४स्या। प्रास्रावा२३४णे। षूवृत्रहान्। ऐहोयि।

३ ५ २ ३ ५ ३ २ ४
आर३४यिही। पारिस्तोर३४ता। रआ३सा५ता६ ५ ६

२र १ २ १ २ १ २ २
यि॥(१) औहोहोहायि। आयिही। स्वारा। तार

५ २ ३ ५ २ ३ ५ २र
३४यित्वा। सूतेना२३४राः। वासोना२३४यिरे। का

१ २र १ ३ ५ २ ३
उक्थिनाः। ऐहोयि। आर३४यिही। कादाम्र३४

५ २ ३ ५ २र १र २र १
ताम्। तार्षाणा२३४ओ। काआगमाः। ऐहोयि।

३ ५ २ ३ ५ ३ २ ४
आर३४यिही। आयिन्द्रास्वा२३४द्वी। ववा३०सा५गा

२र १ २ १ २ १ २ ३
६५६ः॥(२) औहोहायि। आयिही। कार्णवे। भार

५ २ ३ ५ २ ३ ५ २र
३४यिर्झा। ष्णावांधार३४र्षात्। वाजन्दार३४षी॑। सा

१ २ २र १ ३ ५ २ ३
हस्त्रिणाम्। ऐहोयि।. आर३४यिही। पायिमआर३

५ २ २ ५ २र १ १र१ २
४ह। पञ्चाघा२३४वान्। वीचर्षणायि। ऐहोयि। आ

५ २ ३ ५ ३२ ४
२३४यिही। माच्चगो२३४मा। तमा३यिमा५हा६५६

३ ५
यि। आ२३४भौ(३)॥८*॥ [२]

५ ५ २ ४ ५र ४ ५ १र
॥ अभीवर्त्तम्† ॥ वया३ह्वा३त्वासुतावन्तोवा। आपो

२ १ २ १ २ २४
नवू। वृक्तबार्हा१यिषा२:। पावित्रस्या३१२३४। प्रस्र

५र २ १ २ १ २ ३ १
णे। धुवार्त्रा१द्दा२न्। परायिस्तो१ता२। रआ३।

१ ३ १ १ १ १ ५ ४ २ ४ ५र ४ ५
सा२३४५। ता२३४यि॥(१) स्वरा३न्ता३यित्वासुतेनरोवा।

१र २र १ २ १ २ २
वासोनिरे। कऊक्था१यिना२:। कादासुता३१२३४म्।

३र ४ ५र २ १ २ १ २ ३२
त्रिषाणओ। कआगा१मा२:। इन्द्रास्वा१ब्दीर२। ववा

१ ३ १ १ १ १ ५ ४ २ ४ ५र
३। सा२३४५। गा२३४५:॥(२) कण्वे३भा३यिधृष्णावा

४ ५ १ २ १ २
धृषोवा। वाजन्दषि। सद्दास्वा१यिणा२म्। पायिष्ठक्र

२ ३ ४ ५ २ १ २ १ २
कू३१२३४। पञ्चघवन्। विचार्षा१णा२यि। मच्चूगो१

* ऊ० गा० ४प्र० १ख० ८सा०। † "अभीवर्त्तः"—इति ख० पु०।

१ २ १ २ १ १ १ १ १
मारे । तमाइयि । मा२३४५ । हा२३४५यि(३) ॥ ६* ॥ [३]

१२

अथ प्रगाथरूपे तृतीयसूक्ते†—प्रथमा ।

३ २ ३ १ १ ३ २ ३ १ २ ३ २
तरणिरित्सिषासति वाजम्पुरन्ध्या युजा ।

१ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
आव इन्द्रम्पुरुहूतन्नमे गिरा नेमिन्तष्टेव सुद्रुवम् ॥ १‡ ॥

"तरणिरित्" युद्धादौ कर्मणि त्वरितएव पुमान् "पुरन्ध्या" महत्या धिया "युजा" सहायभूतया "वाजम्" अन्नं "सिषासति" सम्भजते, "पुरुहुतं" बहुभिराहुतम् "इन्द्रम्" "गिरा" स्तुत्या हे यजमानाः "वः" युष्मदर्थम् अहम् "आ नमे" आनतमभिमुखं कुर्वे। तत्र दृष्टान्तः—"नेमिं" चक्रस्य वलयम् "सुद्रुवं" शोभनदारु "तष्टेव" यथा वर्द्धकिः दारु-नेमिमानमयते तद्वदित्यर्थः ॥ १ ॥

---

* ऊ० गा० ६प्र० १अ० ६सा० ।

† 'रौरवमच्छावाकं साम'—इति वि० ।

‡ ऋ० सा० ३, १, ४, ६ ( १ भा० ४९३ पृ० ) = य० वे० ३३, ११ = ऋ० वे० ७, ३, २०, ५ ।

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
नदुष्टुतिर्द्रविणोदेषुशस्यतेनस्रेधन्तꣳरयिर्नशत् ।

३ २ ३ १ ३ २ २ ३ १ २ ३ १ २ २ ३ २
सुशक्तिरिन्मघवन्तुभ्यम्मावतेदेष्णंयत्पार्येदिवि ॥ २* ॥ १३

"द्रविणोदेषु" धनदातृषु पुरुषेषु "दुष्टुतिः" असमीचीना स्तुतिः "न शस्यते" नाभिधीयते। किञ्च "स्रेधन्तं" हिंसन्तं धनदातृविषय-स्तुत्यादि-कर्माण्यकुर्वन्तमित्यर्थः, एवम्भूतं जनं "रयिः" धनं "न नशत्" न व्याप्नोति। तथा हे "मघवन्" धनवन्निन्द्र! "पार्ये दिवि" सौत्ये दिवसे † "मावते" मत्सदृशाय स्तोत्रे "देष्णं" दातव्यं "यत्" धनमस्ति तत् "तुभ्यं" त्वत्तः सकाशात् "सुशक्तिरित्" शोभन-स्तुतिकएव स्तोता लभत इति शेषः॥

"नदुष्टुतिर्द्रविणोदेषुशस्यते" -इति छन्दोगाः, "नदुष्टुती मर्त्त्योविन्दतेवसु" --इति बह्वृचाः॥ २ ॥ १३

२ १ ५ १
॥ रौरवम् ॥ तरणिरित्सा३यिषासा२३४ती। वा३जम्पु

२ २ २ ३ २ १ २ २
रन्ध्यायुजावइन्द्रम्पूरुहूतन्नमा२यिगिरा। ओहा३उवा।

---

* ऋ० वे० ५, ७, २१, १।

† 'पार्ये दिवि—पारणीये द्युलोके'—इति वि०।

१र २ २ १र २ २ १
नेमिन्तष्टे वसू२३हाइ। नेमिन्तष्टे वसा२३उहाइ। ओ
१ २ १ ४ ५ २र २
हा३उवा। इवाम्। औ२३होवा॥(१) नेमिन्तष्टे वा
१ ५ १ २ २
३सुद्र२३४वाम्। नायिमिन्तष्टे वसुद्रुवन्नदुष्टुतिर्द्र विणो
१ ३ २ २ २ २ १ २
द्र पुशा२स्यतायि। ओहा३उवा। नस्वे धन्ता५रया२३
२ १ २ २ १ ४ ५
यिर्हायि। ओहा३उवा। नशात्। औ२३होवा॥(२)
२ १ ५ १ २
नस्वे धन्त५रा३यिर्ना२३४शात्। ना५स्वे धन्त५रयिर्नशत्सु
३ २ १ २ २ १र
शक्तिरिन्मघवन्तुभ्यम्मा२वतायि। ओहा३उवा। देष्णं
२ १ २ २ १ २
यन्मारियार२३यिहायि। ओहा३उवा। दिवा। औ३
५ ४
होवा। हो५इ। डा(३)॥ १८ *॥ [१] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य
चतुर्थः खण्डः † ॥ ४ ॥

---

* ऊ० गा० २प्र० १अ० १८सा०।

† 'उक्तं माध्यन्दिनं सवनम्'—इति वि०।

अथ पञ्चमे खण्डे*—

प्रथमतृचे—प्रथमा।

१ २उ १ १ २ ३ १ २ ३ १ २

तिस्रोवाचउदीरतेगावोमिमन्तिधेनवः।

१ २ ३ १ २

हरिरेतिकनिक्रदत्॥ १† ॥

"तिस्रोवाचः" ऋगादिभेदेन "उदीरते" प्रोद्गायन्ति ऋत्विजः। "धेनवः" आशिरेण प्रीणयित्र्यो "गावः" "मिमन्ति" शब्दायन्ति दोहार्थम्, "हरिः" हरितवर्णः सोमश्च "कनिक्रदत्" शब्दं कुर्वन् "एति" गच्छति द्रोणकलशम्॥ १ ॥

अथ द्वितीया।

१ १र २र ३ २ ३ १ २ ३ १ २

अभिब्रह्मीरनूषतयह्वीर्ऋतस्यमातरः।

३ १ २ ३ १ २र

मर्जयन्तीर्दिवःशिशुम्॥ २‡ ॥

"ब्रह्मीः" ब्राह्मण-प्रेरिताः¶ "यह्वीः" महत्यः ['यह्वः'—इति महन्नाम (निघ०३, ३, १२)] "ऋतस्य" यज्ञस्य "मातरः"

---

* 'इदानीं तृतीयसवनमारभते'—इति वि०। 'पाष्ठौहं साम'—इति वि०।

† छ० आ० ५, २, ४, ५ ( २ भा० १६ ) = ऋ० वे० ६, ८, २३, ४।

‡ ऋ० वे० ६, ८, २१, ५।

¶ 'ब्रह्मीः—ब्रह्मणा या याः स्तूयन्ते ता ब्रह्मीः'—इति वि०।

निर्मातारः स्तुतयः* "दिवः" द्युलोकात्† "शिशु"‡ शिशुस्थानीयं सोमम् "मर्जयन्तीः" पावयन्तीः "अभ्यनूषत" स्तुवन्ति [तृतीयस्यामितोदिवि सोमआसीदित्यादि श्रुतेः द्युशिशुत्व तस्य ]॥

"मर्जयन्तीः" "मर्मृज्यन्ते"—इति पाठौ ॥ २ ॥

अथ तृतीया।

राय:समुद्रा७ श्चतुरोस्मभ्य७ सोमविश्वतः।

आपवस्वसहस्रिणः॥ ३ ¶ ॥ १४

"रायः" धनस्य सम्बन्धिनश्च "चतुरः समुद्रान्" मणि-मुक्तादि-धन-पूर्णानित्यर्थः। तादृशीन् समुद्रान् "अस्मभ्यम्" अर्थाय हे "सोम।" "विश्वतः" सर्वतः "आ पवस्व"। तथा "सहस्रिणः" § अपरिमितान् कामान् आपवस्व प्रयच्छ [चतुःसमुद्रस्य धन-विशेष प्राप्ते तन्मध्यगत धन भूमि-स्वामित्वमन्तरेणा सम्भवात् चतुस्समुद्र सहित-भूमण्डल स्वामित्वमेवाशास्ते यजमानः ]॥ ३ ॥ १४

---

* 'मातर —धनव आदित्यरश्मयो वा आपो वा —इति वि०।

† 'दिव —द्युलोकात् मकाशात इति वि०।

‡ 'शिशु शसनीय सोमम —इति वि०।

¶ ऋ० वे० ६ ८ २३, ६।

§ सहस्रिण —सहस्रसंख्याता' —इति वि०।

॥ पाष्ठौहम् ॥ तिस्रोवाचा२उदीरतायि । गावो
मिमन्तिधेनवः । हरिरा२३यिती । कनी२ । ऊवायि ।
होऽ३वा३ । क्रा२दा२३४औहोवा ॥(१) अभिब्रह्मा२यि
रनूषता । यह्वीर्ऋतस्यमातरः । मर्ज्जया२३न्तीः । दिवी
२ । ऊवायि । होऽ३वा३ । शिशुमा२३४औहोवा ॥(२)
रायःसमु२द्रा\'ँश्चतुराः । अस्मभ्यꣳसोमविश्वतः । आ
पवा२३स्वा । सही२ । ऊवायि । हो३वा । स्रा२यि
णा२३४औहोवा । हाओवा । ओवा२३४५ ॥ २०* ॥ [१]

॥ तुल्लकवैष्टम्भम् ॥ तिस्रोऽ५वा । चा३उदीरतायि ।
गावोमिम । तिधायिता१वा२३ः । होवा३हायि । हरा
यिरा१यिती२३ । होवा३हायि । कनि । क्रा२दा२३४
औहोवा ॥(१) अभाऽ५यिब्र । ह्मा३यिरनूषता । याह्वी

* ऊ० गा० २प्र० १ख० २०गा० ।

र्त। स्यमाता१रा२३:। होवा३हायि। मर्त्त्याया१
त्तो२३:। होवा३हायि। दिवः। ग्रा२यिग्रा२३४औ
होवा॥(२) रायाऽ५:सम्। ऊ३द्रा२स्रतुराः। आस
भ्य२मो। मंवायिस्वा१ता२३:। होवा३हायि। आपा
वा१खा२३। होवा३हायि। सद्ध। सा२यिणा२३४औ
होवा। दौ२३४शाः(३)॥ १६ *॥[२]

॥ सा२हितम॥ तिस्रोवाचउत्। आ२यिरतायि।
गावो२। मा२३यिमा। तिधा२यिनावाः। हा२३रौः।
आ२यितायि। कना२३। हाउवा३। क्रा२३४दात्॥(१)
अभिब्रह्मीर। नू२षता। यह्वा२यिः। आ२३र्त्ता।
स्यमा२तारा:। मा२३र्ज्जा। या२न्तायिः। दिवा२
३:। हाउवा३। ग्रा२३४यिशूम्॥(२) रायःसमुद्रान्।

---

* ऊ० गा० ७प्र०१ख० १६गी०।

चा२स्तुराः। अस्मा२। भ्या२३ॶसो। मवा२यिश्वा

ता:। आ२३पा। वा२स्वा। सहा२३। हाउवा३।

वो२३४णाः(३) ॥ ७ * ॥ [३]

॥ ऐडसैन्धुक्षितम् ॥ तिस्रोवाचो। हायि। उदी

रा२३तायि। गावोमिमन्तिधा१यिना३वाः। हरि२तो

२३४हायि। काना३यिहायि। क्रदात्। औ२३हो

वा ॥(१) अभिब्रह्मो। हायि। अनूषा२३ता। यह्वी

र्ऋतस्यमा१ता३राः। मर्ज्जयन्तो२३हायि। दायिवा३

हायि। शिशुम्। औ२३होवा ॥(२) रायःसमो। हा

यि। द्राॶश्चतू२३राः। अस्मभ्यॶसोमावा१यिश्वा३ताः।

आपवस्वो२३४हायि। साहा३हा। म्रिणा। औ३हो

वा। होऽ५ई। डा(३) ॥ १८ † ॥ [४]

---

* ऊ० गा० ६प्र० १ख० ७सा०। † ऊ० गा० १५प्र० १ख० १८सा०।

१ २र र १ २ १र २
॥ गायत्रौशनम् ॥ तिस्रोवाचाः । उदीरा२३ता
१ र २ १र २ १ २ २
यि । गावोमिम । तिधेना२३वाः । हरायिरा३यिता३
१ २ १ ५ ५ १
यिं । काना२३यिहा३४३यि । क्रा२३४दो६हायि ॥(१) अ
२ १ २ १र २ १ र २ १र
भिब्रह्मायिः । अनूषा२३ता । याक्रोर्क्षत । स्यमाता
२ १ २ २ १ २ १
२३राः । मज्जाया३न्तो३ः । दायिवा२३हा३४३यि । श्रा
५ ५ १र २ २ १ २
२३४यिश्रो६हायि ॥(२) रायःसम् । द्रा२ऽस्रतू२३राः ।
१ २ र २ २ १र २ २ १
अस्मभ्य२सो । मविश्वा२३ताः । आपावा३स्वा३ । साहा
२ १ ५ ५
२३हा३४३यि । मा२३४यिणा६हायि(३) ॥ १० * ॥ [५]

२ १र ५ २ १ २ २
॥ वैरूपम्† ॥ तिस्रोवा२३४चाः । उदायिरा३ता३यि ।
१र ३ ५ १ २ १
गावो२मा२३४यिमा । तायिधे१नावा२ः । हरा२३यिः ।
र २ ५र र २ १ २ ३ १ १ १ १ २ १
एता३४औहोवा । कनिक्रदा२३४५त् ॥(१) अभिब्रा२३
५ २ १ २ २ १ ३ ५ १ २
४ह्मीः । अनूषा३ता३ । यक्रा२यिरा२३४र्त्ता । स्यामा

* ऊ० गा० २०प्र० १अ० १०खा० । † "गायत्रोवैरूपम्"—इति ख० पु० ।

२ १ २ ५र र २ १ २
१तारा२ः । मर्ज्जा२३ । यन्ता३४औहोवा । दिवःशि

३ १ १ १ १ २ १ ५ १र १ २ २ १
शू२३४५म् ॥(२) रायःसा२३४मू । द्रा२ऌस्वातू३रा३ः । च

२ ५ १ ० १र २
स्मा२भ्या२३४ऌसो । माविस्वाता२ः । आपा२३ । वस्वा

५र र २ १ २ २ १ १ १ १
३४औहोवा । सद्दमि्ना२३४५ः(३) ॥ ११ * ॥ [६] १४.

अथ द्वितीयत्टचे†—प्रथमा ।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
सुतासोमधुमत्तमाःसोमाइन्द्रायमन्दिनः ।

३ १ २ ३ १ २ ३ १ २
पवित्रवन्तोअक्षरन्देवान्गच्छन्तुवोमदाः ॥ १ ‡ ॥

"मधुमत्तमाः" अतिशयेन माधुर्य्योपेताः अतएव "मन्दिनः" मदकरा "सुतासः" अभिषुताः सोमाः "पवित्रवन्तः" पवित्रे-वर्त्तमानाः सन्तः "इन्द्राय" इन्द्रार्थम् "अक्षरन्" पात्रेषु क्षरन्ति । अथ प्रत्यक्षक्रतः—"व" युष्माकं "मदाः" मदहेतवः रसाः "देवान्" इन्द्रादीन् "गच्छन्तु" ॥ १ ॥

---

* ऊ० गा० २०प्र० १ख० ११सा० ।

† 'ताद्दौ साम'—इति वि० ।

‡ ऋ० आ० ६, २, १, २ (२भा० १५५पृ०)= ऋ० वे० ७, ५, १, ४ ।

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २

इन्दुरिन्द्रायपवतइतिदेवासोअब्रुवन्।

३ १ १ २ ३ २ ३ १ २ ३ १ २

वाचस्पतिर्मखस्यतेविश्वस्येशानओजसः॥ २ * ॥

"इन्दुः" सोमः "इन्द्राय" इन्द्रार्थं "पवते" कलशे क्षरति "—इति" "देवासः" स्तुतिकारिणः स्तोतारः "अब्रुवन्" वदन्ति; यदा स्तोतार एवं ब्रुवन्ति तदानीं "वाचः" स्तुतेः "पतिः" पालयिता † यद्वा शब्दस्य स्वामी अत्यन्तं शब्दायमान इत्यर्थः, तादृशः सोमः "मखस्यते" स्तुतिभिः पूजामिच्छति [लालसायां सुगागमः]। कीदृशः? "ओजसः" बलवतः "विश्वस्य" सर्वस्य "ईशानः" प्रभुः॥

"ओजसः"-"ओजसा"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ २

सहस्रधारःपवतेसमुद्रोवाचमीङ्खयः।

२ ३ १ २ ३ १ १२ ३ १

सोमस्पतीरयीणाꣳसखेन्द्रस्यदिवेदिवे॥ ३ ‡ ॥ १५

* ऋ० वे० ७, ५, १, ५।

† 'वाचस्पति'—ऋग्यजुःसामलक्षणाभ्यो वाग्भ्यः पतिः'—इति वि०।

‡ ऋ० वे० ७, ५, २, १।

"सहस्रधारः" बहुविध धारोपेतः "सोमः" "पवते" क्षरति । कीदृशः ? "समुद्रः" समुद्रवन्ति "रसा" रस-स्थानीयः "वाचमीङ्खयः" [ईङ्खतेर्ण्यन्तस्य सुप्युपपदे खश् प्रत्ययः] स्तुतीनां प्रेरयिता * "रयीणां" धनानां "पतिः" प्रभुः [यद्वा "रयीणां" हविर्षोदातॄणां यजमानानां † "पतिः" पालयिता] "दिवे-दिवे" प्रत्यहम् "इन्द्रस्य" "सखा" मित्रभूतः सोमः पवते ॥

"सोमस्पतिः"-"सोमःपतिः"—इति पाठौ ॥ ३ ॥ १५

॥ गौरीवितम् ‡ ॥ सुता । सोमा३ । धुमत्तमाः । सोमाइन्द्रायमन्दिना२३: । पावित्रवा३१२३ । तो आ५ श्र रान् । दायिवान्गच्छा३१२३ । तुवोवा । मा५दो६ हा यि ॥(१) इन्दुः । इन्द्रा३ । यपवतायि । इतिदेवासो अब्रुवा२३न् । वाचस्पता३१२३यिः । मखा५स्यतायि । वायिश्वस्ये शा३१२३ । नश्रोवा । जा५सो ६ हायि ॥(२) सह । सूधा३ । र:पवतायि । समुद्रोवाचमीङ्ख्या२३: ।

---

* 'वाचमीङ्खयः—शब्दं कुर्वन्त' - इति वि० ।

† 'सोमः पतिः केषाम् ? रयीणाम् चरु-पुरोडाशादि लक्षणानां धनानाम् अथवा सर्वधनानाम्'—इति वि० । ‡ "महागौरीवितम्"—इति ख० पु० ।

१ २ ४ १ २ २
सोमस्यता३१२३यिः। रया५यिणाम्। साखेन्द्रस्या३१२३।
४ ५ ४ ५
दिवोवा। दा५यिवो६हायि(३) ॥ ३ * ॥ [१]

२ र र २
॥ त्वतन्त्वाष्ट्रीसाम ॥ सुतासोमा। धुमा ३ त्तमाः।
१र २ १ २ १२२ १ १ २
सोमाइन्द्रा३यमा३। ए३। दिनआ। पवायिनवा३न्तो
२ २१२ १ २ २ २
३। ए३। त्तरन्ना। दायिवाङ्गच्छा३न्तुवा३ः। ए३।
२ २र२ २ २ २र र
मदाआ ॥(१) इन्दुरिन्द्रा। यपा३वतायिदेवा३सो ३।
२ २ २ २ १र २ २ २ २ २
ए३। ब्रुवन्ना। वाचास्पता३यिर्म्मखा३। ए३। स्यत
२ १ १र २ २ २ २ २ २
मा। विश्वास्येशा३नओ३। ए३। जसआ ॥(२) सह
२ १ २र १ २
स्रधा। रःपा३वतायि। समुद्रोवा३चमा ३ यि। ए३।
२ २ २ १र २ २ २ २ २
खयआ। सोमास्यता३यिरया३यि। ए३। णा ३ मा।
१ २ २ २ २ ३ २
सखेन्द्रस्या३दिवा३यि। ए३। दिवआ(३) ॥ ४ † ॥ [२]

२ र र २ १र र
॥ आन्धीगवम् ॥ सुतासोमधुमा१त्तामाः। सोमाइ।

---

* ज० गा० २प्र० २ख० ३सा०।
† ज० गा० २प्र० २ख० ४सा०।

र २ १ १ २१ र र ३१
द्रायार३मा । ऊम्मा २१ऽर । दिनःपवित्रवन्तोअक्षरार

१११ १ २ २ १ २ १
३४५न् । दायिवा३उवा । गा २च्छा । तूर३वो । मदा ।

२ ४ ५ २ र २ १ र र
औ३होवा ॥ (१) इन्दुरिन्द्रायपा१वातायि । इतिदे । बा

२ १ १ २र १ १ ३ १ १ १
सोर३आ । ऊम्मा २१ऽर । ब्रुवन्वाचस्पतिर्मखस्युतार३४

१ २ २ १ २
५यि । वायिस्वा३उवा । स्या २यिष्मा । ना२३ओ । ज

१ २ ४ ५ २ र २ १
सा । औ३होवा ॥ (२) सहस्रधारःपा१वातायि । समु

र २ १ १ र२ १ र१
द्रः । वाचार३मा । ऊम्मा २१ऽर । खयःसोमस्यतीर

३र १ २ २ १ २
यीणा१म् । साखा३उवा । द्रा २स्या । दा २ ३ यिवे ।

१ २ ४ ५ ४
दिवा । औ३होवा । होऽ५इ । डा(३) ॥ २० * ॥ [१]

१ २ २ ३ २ १
॥ स्वारत्वाष्ट्रीसाम ॥ सहस्रधा ३ हा । रःपवाता २

१ र २ २ ३ २र १ १र २
यि । समुद्रोवा३हा । चमीङ्ख्याया २ः । सोमस्यता३यि

* ऊ० गा० ७प्र० १ ख० २०षा० ।

हायि। रयायिणा२म्। सखेन्द्रस्याइहायि। दिवा३
हो२३४। वा। दा५यिवो६हायि(३) ॥८*॥ [२]

॥ स्वारत्वाष्ट्रीसाम ॥ सुतासोमा३हा। धुमत्तामा
२:। सोमाइन्द्रा३हा। यमन्दायिना२:। पवित्रवा३
हा। तोअक्षारा२न्। देवान्गच्छा३हा। तुवो३हो२
३४। वा। मा५दो६हायि ॥(१) इन्दुरिन्द्रा३हा। यप
वाता२यि। इतिदेवा३हा। सोअब्रूवा२न्। वाचस्प
ता३यिर्हायि। मखस्याता२यि। विश्वस्येशा३हा। न
ओ३हो२३४। वा। जा५सो६हायि ॥(२) सहस्रधा३
हा। रःपवाता२यि। समुद्रोवा३हा। चमीङ्खाया२:।
सोमस्पता३यिहायि। रयायिणा२म्। सखेन्द्रस्या३हा
यि। दिवा३हो२३४। वा। दा५यिवो६हाइ(३) ॥१†॥[३]

* ऊ० गा० ९प्र० १अ० ८खा०।   † ऊ० गा० १५प्र० २अ० १खा०।

४ र  ३र २  २
॥ दिरभ्यस्त्वाष्ट्रीसाम ॥ सुता। सोमा३। हा ३

२ ३ २ १ १ र ५र ३ २ २ २
हा। धुमत्तामा२३४ः। सोमाः। इन्द्रा३। हा३हा।

२ १ १ ५ ३ २ २ २ ३र २
यमन्दायिना२३४ः। पवि। त्रवा३। हा३हा। तोश्र

१ र ५र ३ २ २ २ ३ २
हारा२३४न्। देवान्। गच्छा३। हा३हा। तुवो३

१ ५ ४ ५ ५ २ २
हो२३४। वा। मा५दो६हायि॥(१) इन्दुः। इन्द्रा

२ २ ३ २ १ ५ ३र २ २
३। हा३हा। यपवाता२३४यि। इति। देवा३। हा

२ ३र २ १ र ५ ३ २ २
३हा। सोम्रब्रूवा२३४न्। वाचः। पता३यिः। हा३

२ ३ २ १ ५ ३र २ २
हायि। मखस्याता२३४यि। विश्व। स्येशा३। हा३

२ ३ २ १ ५ ४ ५ ५
हा। नस्रो३हो२३४। वा। जा५मो६हायि॥(२) स

३ २ २ २ ३ २ १ ५
ह। मृधा३। हा३हा। रःपवाता३३४यि। समु।

३र २ १ २ ३ २र १ र ५ ३ २
द्रोवा३। हा३हा। चमोह्वाया२३४ः। सोमः। पता

१ २ १ ५ २ २
३यि। हा३हायि। रयायिणा२३४म्। सखे। इन्द्रया

२ । हाउहायि । द्रिवाउहोउ२३४ । वा । दा५यिवोह्
हायि(३) ॥ २ * ॥ [४]

॥ ऊर्द्धत्वाष्ट्रीसाम ॥ सुतासोमधुमत्तमाः । सोमा
२३इन्द्राऽ२ । यमा३४५ । दो२३४नाः । पवित्रवन्तोअ
त्तरा२३४न् । देवान्गच्छा । तुवोमा२३दा ३ ४ ३ः॥(१)
इन्दुरिन्द्रायपवतायि । अयिता२यिदेवा२ । सोआ३४
५ । ब्रू२३४वान् । वाचस्पतिर्म्मखस्यना२३४५यि । वि
श्वस्येशा । नओजा२३सा३४३ः ॥(२) सहस्रधारःपवता
यि । सामू२द्रोवा२ । चमा३४५यि । खा२३४याः । सो
मस्यतोरयोणा१म् । सखेन्द्रस्या । दिवेदा२३यिवा३४३
यि । ओ२३४५ई(३) ॥ २ † ॥ [७]

॥ साध्रम् ॥ सुतासो३सा॰धुमत्तमाः । सोमाइन्द्रा२ ।

* ऊ० गा० १५प्र० २ख० २सा० । † ऊ० गा० १६प्र० १ख० १सा० ।

यमा३४५। दी२३४ना:। पविञ्चवन्तोअक्षरा२३४५न्। दायिवाओ२३४५वा। गाच्छाओ२३४वा। तुवो५मदाः॥(१)

इन्दुरा३यिन्द्रायपवतायि। इतायिदेवा२। सोआ३४५। ब्र२३४वान्। वाचस्पतिर्म्मखस्यता२३४५यि। वायिश्व आ२३४वा। स्यायिषाओ२३४वा। नओ ५ जसाः॥(२)

सहम्रा३धार:पवतायि। समुद्रोवा२। चमा ३ ४ ५ यि। खा२३४याः। सोमस्पतीरयिणा१म्। साखाओ २ ३ ४ वा। द्रास्याओ२३४वा। दिवे५दिवायि। चो ५ ई।

डा (३) ॥ १२ *॥ [८]

॥ श्यावाश्वम् ॥ सुना३१। सो३माऽ। धुम। ना३ म। एहिया। सो। माइन्द्राया। म। दिना२:। एहिया२। पविञ्चवान्तो३आ३। चा२३४रान्। ऐहा

* ऊ० गा० १०प्र० १ख० १२सा०।

१र २र१ २ ४ २
२यि । एहिया२ । देवान्गाच्छान्तू३वो३ । मा३४५दोई
५ १ २ २ ४ऽ ५ २ ४र
ह्नायि ॥(१) इन्दु३१: । आ३यिन्द्रा । यप । वा३ते ।
५ १ र र २ १ १र
एहिया । आयि । तिदेवासो । अ । ब्रूवा२न् । ए
र १ २ ४ ५ २र
हिया२ । वाचस्पतायिर्म्मा३खा३ । स्या२३४तायि । ऐ
१र १र २ ४ २
हा२यि । एहिया२ । विश्वस्येशाना३ओ३ । जा३४५
५ ३१ २ ४ऽ ५ २ ४र
सोई्हायि ॥(२) सहा३१ । स्रा३धा । र:पा । वा३ते ।
५ १ र र १र १ १र
एहिया । साम् । उद्गोवाचाम् । ई । रया२: । ए
र १ २ ४ ५ १र
हिया२ । सोमस्याती३रा३ । या२३४यिणाम् । ऐहा
१र र१ २ ४ २
२यि । एहिया२ । सखेद्र स्यादा३यिव३ । दा३४५यि
५
वोई्हायि(३) ॥ १३ * ॥ [९]

२ १र २र १ २ १ २
॥ महाविष्टम्भम् ॥ सुतासोमोहायि । धुमत्तमोवा ।
१ र २ र १ २ १ १ २ १
सोमाइन्द्रा । यमान्दा१यिना२३: । होवा३हायि । पवित्र

* ऊ० गा० १०प्र० १ख० १३गा० ।

२ २र १ २ १ २ १ १र २
व। तोश्राद्दा१रा२३न्। होवा३हायि। देवान्गा१

१ २ २ १ २ ५र र
च्छा२३। होवा३हा। तुवः। मा२दा२३४औहोवा॥(१)

१ २ १ २ १ १ १ २र र १र २
इ॒न्दुरि॒न्द्रोहा। यपवतोवा। आयितिदेवा। सोश्राम्र॒

१ २ २ र १ २ १ २
१वा२३न्। होवा३हायि। वाचस्पतिः। मखास्या१

१ १ २ १ २ १ २
ता२३यि। होवा३हायि। विश्वास्ये१श्रा२३। होवा३

२ १र ३ ५र र १ २ १
हा। नश्रो। जा२सा२३४औहोवा॥(२) सहस्र॒धोहा।

२ १ २ १ २र र १ २ १
र:पवतोवा। सामुद्रोवा। चमायिङ्गा१या२३:। हो

२ २ १र २ ५र र ३
वा३हायि। दिवे। दा२यिवा२३४औहोवा। दी२३४

५
श्राः(३)॥ ११*॥ [१०] १५

अथ तृतीयतृचे†—प्रथमा।

३१२२ १२
पवित्रन्ते विततम्ब्र॒ह्मणस्पते

३१ २र ३१२ ३१२
प्रभुर्गात्राणिपर्य्येषिविश्वतः।

---

* ऊ० गा० ११०प्र० २अ० ११सा०। †.'वरिष्ठं साम'—इति वि०।

१ २ ३ २उ ३ १ २
अतप्ततनूर्नतदामोअश्नुते
३ २ ३ १ २र ३ १ २र
शृतासइद्वहन्तःसन्तदाशत ॥ १* ॥

हे "ब्रह्मणस्पते" मन्त्रस्य स्वामिन् सोम! "ते" "पवित्रं" शोधकमङ्गं "विततं" सर्वत्र विस्तृतम्। सः "प्रभुः" प्रभविता त्वं "गात्राणि" पातुरङ्गानि "पर्य्येषि" परिगच्छसि "विश्वतः" सर्वतस्तव तत् पवित्रम् "अतप्ततनूः" पयोव्रतादिना असन्तप्तगात्रः "आमः" अपरिपक्वः "न अश्नुते" न व्याप्नोति। "शृतासः इत्" "शृताएव" परिपक्वाएव "वहन्तः" यागं निर्वहन्तः "तत्" पवित्रम् "समाशत" व्याप्नुवन्ति॥

*"सन्तदाशत"--"तत्समाशत"—इति पाठौ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ २ ३
तपोष्पवित्रं विततन्दिवस्पदे
१ ३ २ ३ २क २र
र्च्चन्तोअस्यतन्तवोव्यस्थिरन्।

---

* छ० ब्रा० ६, २, १, १२ (२भा० १९८ पृ०) = ऐ० ब्रा० १, २१ = ऋ० वे० ७, ३, ८, १।

१ २ ३ १ २ ३ १ २
अवन्त्यस्यपवितारमाशवो

३ २ ३ १ ३ र ३ १ २
दिवःपृष्ठमधिरोहन्तितेजसा ॥ २ * ॥

"तपोः" † शत्रूणां तापकस्य सामस्य "पवित्र" शोधक-मङ्ग "दिवस्पदे" द्युलोकस्योच्छ्रिते स्थाने "विततं" विस्तृतम् [ "तृतीयस्यामितो दिवि सोम आसीत्"—इति ब्राह्मणम् ] "अस्य" "तन्तवः" अंशवः ‡ "अर्चन्तः" दीप्यमानाः "व्यस्थि-रन्" विविधं तिष्ठन्ति पृथिव्यां हविर्द्धाने वा "अस्य" सोमस्य "आशवः" शीघ्रगामिनः रसाः "पवितारं" पावयितारं यज-मानम् "अवन्ति" रक्षन्ति होमद्वारा पश्चाद्गुता "दिवः" द्युलो-कस्य "पृष्ठ" पृष्ठभागम् उन्नतदेशम् "तेजसा" स्वप्रकाशेन सार्द्धं "अधिरोहन्ति" आरोहणं कुर्वन्ति ॥

"अर्चन्तः"-"शोचन्तः"—इति पाठौ, "अधिरोहन्तितेजसा"-"अधितिष्ठन्तिचेतसा"—इति पाठौ ॥ २ ॥

---

* ऋ० वे० ७, ३, ८, २।

† 'हे तपोः'—इति वि०।

‡ 'अस्य दशापवित्रस्य तन्तवः'—इति वि०।

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ १
अरूरुचदुषसः पृश्निरग्रिय

३ १ २ ३ १ २ ३ २
उक्षा मिमेति भुवनेषु वाजयुः ।

२ १ २ ३ १ २
मायाविनो ममिरे अस्य मायया

३ १ २ ३ १ ३ २ ३ १ २
नृचक्षसः पितरो गर्भमादधुः ॥ ३ * ॥ १६

"उषसः" सम्बन्धि "पृश्निः" आदित्यः [ "पृश्निरादित्यो भवति प्राश्नुत एनं वर्णः"—इति निरुक्तम् ( २, १४ ) ] "अग्रियः" मुख्यः सोऽयं "अरूरुचत्" रोचयति । स "उक्षा" जलस्य सेक्ता "भुवनेषु" भूतजातेषु "मिमेति" मिनोति उदकं प्रक्षिपतीत्यर्थः । "वाजयुः" † तेषामन्नमिच्छन् "मायाविनः" माया प्रज्ञा तद्वन्तः देवा "अस्य" सोमस्य "मायया" प्रज्ञया "ममिरे" निर्मितवन्तः, सोमस्यैकांशपानबला अग्न्यादयः स्व-स्व-व्यापारेण जगत् सृजन्तीत्यर्थः । तथा "अस्य" मायया "नृचक्षसः" नृणां द्रष्टारः "पितरः" पालका देवाः अङ्गिरसः पितरो वा "गर्भम्" "आदधुः" धारयन्ति ओषधीषु च । अत्र सूर्य्यात्मकः सोमः स्तूयते । सूर्य्यरश्म्यनुगमाधीन-

* ऋ० वे० ७, ३, ८, ३ ।

† 'वाजयुः—वाजमन्नं तदिच्छुः अथवा वाजयुः वाजप्रदः अथवा वाजयुः वेगवान्'—इति वि० ।

वर्धनाश्चन्द्रस्य अयमुषसः पृश्निः सविता अरूरुचत् रोचते रोचयति वासवं शिष्टं समानं तत्सम्बन्धिनः नृचक्षसः नृणां द्रष्टारः पितरो जगद्रक्षका रश्मयो गर्भमादधुः वृष्ट्यर्थम् ॥

"मिमेतिभुवनेषु"-"बिभर्त्तिभुवनानि"—इति पाठौ ॥३॥ १६

२र १ २ १ र २ १
॥ स्वारसाम ॥ पवौहोवा। त्रन्ते विततंब्र। ह्मणस्पा

१ र र २ १
ता२यि। प्रभुर्गात्राणिपरियायि। षिविश्वाता२ ३ः।

१ २ ४ ५ २ ३ ५ २ ३र १ २
आता३ग्नाता। नूर्न्नोता२३४दा। हो। मोश्नाश्नू२३४

५ २ १ २ ४ ५ २ ३ ५
तायि। हो३यि। श्रात्ताो३साईत्। वाहन्तो२३४ःमा।

२ ३ २ ४ २र १ २ १
हां। तदा३शा५ताई५६ ॥१) तपौहोवा। पवित्रं वित

२ १ १ र २
ताम्। दिवस्पादा२यि। अर्चन्तोअस्यतन्तवो। विय

१ १ २ ४ ५ २ २ ५
स्यायिरा२३न्। आवा३न्तोया। स्यापावी २ ३ ४ ता।

२ ३ २ ३ ५ २ १ २ ४ ५
हो। रमात्मा२३४वाः। हो३यि। दायिवा३ःपाष्ठीम्।

२ ३ ५ २ ३ २ ४
आधोरो२३४हा। हां। तिता३यिजा५सा ६ ५ ६ ॥(२)

१ र १ २ १ २ १ १ र
अरौहोवा। रूचदुषसःपा। श्निरग्रायार२ः। उक्षामि

मेतिभुवनायि । षुवाजायू२३: । मायाइवायिनो । मा मौरे२३४आ । द्दों । स्यमायार२३४या । द्दो३यि । ना वो३स्वासा: । पायितारो२३४गा । द्दों । भमा३दा५धू ६५६:(३) ॥ १ * ॥ [१]

॥ कावम्† ॥ पवोवा । त्रन्तं विततंब्रा । ह्मणस्या । ता२यि । प्रभुर्गात्राणिपरियायि । षिविश्वाता२: । अतप्ततनूर्न्नतदा । मोअश्न ता२३यि । शार्त्ता३साईत् । वहन्ता:सा२३म् । तादा३शापूता६५६ ॥(१) तपोवा । पवित्रंविततााम् । दिवस्पादा२यि । अर्च्चन्तोअस्यतन्त वो । वियस्थायिरा२न् । अवन्त्यस्यपविता । रमाश्ना वा२३: । दायिवा३:पाष्ठोम् । अधिरोहा२३ तायि ता३यिजा५सा६५६ ॥(१) अरोवा । रुचदुषस:पा । श्नि

---

† ऊ० गा० ७प्र० २ख० १सा० ।

१ १र र २र १
रश्मायार२ः । उच्चामिमेतिभुवनायि । षुवाजाय्२ः ।
१रर र र रर १ १ २ ४ ५
मायाविनोममिरेश्रा । स्यमायायार२३ । नाचाँ३चासाः ।
२ १ १ २ ४
पितरोगार२३ । भामा३दा५धू६५६:(३) ॥ ३ * ॥ [२].

४ ३ ४ २ ४ ५
॥ यज्ञायज्ञीयम् ॥ पवा ऽ ५यित्रम् । ता३यिवां३यिततंब्र ।
१ र र र २ १ २ २
ह्माणस्पतेप्रभुर्गात्राणि । परियायि । षी३वायिश्वा३ताः ।
१ १ र र र र २ १
अता२मतनूर्नतदामोअश्नु । तेश्रा२३त्ता । ऊम्मायि ।
२ २ १ ३२ १ २ १र
सा३ई.त् । वाहन्तःमन्तदा२शताउ ॥(१) ताता । पोच्च
र र २ २
वित्रंविततन्दिवस्पदेचंन्तोअस्यतन्तवो । वा३यास्था३यि
र १ १ र र र २
रान् । अवार२न्त्यस्यपवितारमाश । वोदा २ ३ यिवाः ।
१ २ २ १ऽ र ३ २
ऊम्मायि । पा३ष्ठीम् । आधिरोहन्तिता२यिजसाउ ॥(२)
१ २ १र र र
साश्रा । रूरुचदुषसःपृश्निरग्रियउत्तामिमेतिभुवनायि ।
२ १ २ २ १र १र र र र
षू३वाजा३यू: । माया२विनोममिरेअस्यमाय् । यामा२

* छ० गा० १२प्र० २ख० ३सा० ।

२ १ २ २ १ र २१
३र्वा। ऊम्मायि। श्रा३सा:। पायितरोगर्भमा२दधा

२ १११
उ। वा३४५(३) ॥ १ * ॥ [३] १६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य पञ्चमः खण्डः † ॥ ५ ॥

---

अथ षष्ठे खण्डे ‡—

प्रथमस्तृचः प्रगाथे—

१ २र ३१२ ३२३१२
प्रमꣳहिष्ठायगायतऋतावे्न बृहतेशुक्रशोचिषे।

३ १ २ ३१२
उपस्तुतासोअग्नये ॥ १ ¶ ॥

हे "उपस्तुतासः" उपस्तोतारः। यूयं "मंहिष्ठाय" दातृतमाय "ऋतावे्न" ऋतवते यज्ञवते वा "बृहते" महते "शुक्रशोचिषे" दीप्ततेजसे "अग्नये" "प्र गायत" स्तोत्रं पठत ॥ १ ॥

---

* ऊ० गा० १५प्र० १ख० १गा०।

† 'यज्ञायज्ञीयम् अग्निष्टोम साम'—इति वि०।

‡ 'इदानीमुक्थानि भवन्ति'—इति वि०।

¶ छ० आ० २ १, २, १ ( १ भा० १२४ प० ) = ऋ० वे० ६, ७, १४, १।

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २

आवꣳसतेमघवावीरवद्यशःसमिद्धोद्युम्न्याहुतः ।

३ १ २ ३ १ २र ३ २ ३ २ ३ १ २

कुविन्नोअस्यसुमतिर्भवीयस्यच्छवाजेभिरागमत् ॥ २* ॥१७

"मघवा" धनवान् "द्युम्नो" अन्नवान् यशस्वी वा । [तथाच यास्कः—"द्युम्नं द्योतते यशोवान्नं वा (५, ५)"—इति. "समिद्धः" सम्यग् दीप्तः "आहुतः" आभिमुख्येन हुतः अग्निः "वीरवत्" पुत्रवत् "यशः" यशस्करम् अन्नम् "आवंसते" यजमानेभ्य आ प्रयच्छति तस्य "अस्य" अग्नेः "भवीयसी" अस्मासु अतिशयेन भवितुं योग्या "सुमतिः" अनुग्रह-बुद्धिः "नः" अस्मान् "अच्छ" प्रति "वाजेभिः" अन्नैः सह "कुवित्" बहु-सलिलम् † [कुविदिति बहु-नाम (निघ० ३, १, १२)] "आगमत्" आगच्छतु ॥

"भवीयसी"-"नवीयसी"—इति पाठौ ॥ २ ॥ १७

५ र ४र ५र २

॥ प्रमꣳहिष्ठीयम् ॥ प्रमꣳह्वा३यिष्ठायगायता । ऋ

१ १ र २ ४ ५ २ १

तावे२ । बृहतेशुक्रा३शो३ । चा२३४यिषायि । उपा

---

* ऋ० वे० ६, ७, १४, ४ ।

† 'कुवित्—कदाचन'—इति वि० ।

२ २ १ २ ४ २ ५
औ३हो। स्तोतासो३आ३। गा३४५यो६हायि॥(१)

५ २ ४२२५ २२१ १२
उपस्तु३तासोअग्नयायि। आव९ृसाता२यि। मघवाना

२ ४ ५ २१२ २ १ २
यिरा३वा३त्। या२३३शाः। समाऔ३हो। धोयू्नी

४ २ ५ ५ २ ४ ५२
३या३। इ३४५तोंं६हायि॥(२) समिद्धो३द्युम्नीयाहुताः।

२१ १ २ ४ ५
कुवायिन्नो२। अस्यसुमनातिर्भा३वी३। या२३४सायि।

२ १ २ २ १२ १ ४ २ ५
अच्छाऔ३हो। वाजायिभी३रा३। गा३४५मो६हायि(३)॥

॥ ५ * ॥ [१] १७

अथ द्वितीयतृचे†—प्रथमा।

२ ३ १ २ २१२ २१२ ३ २
तन्ते मदङ्गृणीमसिवृषणम्पृत्सुसासहिम्।

३ १२ ३ १ २
उलोककृत्नुमद्रिवोहरिश्रियम्॥ १ ‡॥

हे "अद्रिवः" वज्रवन् इन्द्र! "ते" त्वदीयं तं "मदं" सोम-पान-जनितं हर्षं "गृणीमसि" गृणीमः प्रशंसामः [ 'गृ शब्दे'

---

० ऊ० गा० ९प्र० २ख० ५सा०।

† 'हारिवर्णं साम'—इति वि०।

‡ छ० आ० ४, २, ५, २ (१भा० ७८८ पृ०) = ऋ० वे० ६, १, १७, ४।

च्छान्दसः "प्रादीनां च्छन्दः (७, ४, ८०)", "इदन्तोमसि (७, १, ४६)"—इति मसइगागमः]। कीदृशम्? "वृषणं" वर्षितारं कामानां "पृत्सु" पृतनासु सङ्ग्रामेषु "सासहिं" शत्रूणाम् अभिभवितारं "लोककृत्नुं" लोकस्य स्थानस्य कर्त्तारं हरिश्रियं "हरिभ्याम्" अश्वाभ्यां "श्रयणीयं" सेव्यम् ["उ"शब्द एवः समुच्चये पादपूरणे वा]॥

"पृत्सु"-"पृत्सु"—इति पाठौ॥ १॥

अथ द्वितीया।

येनज्योतीꣳष्यायवेमनवेमनवेचविवेदिथ।

मन्दानोअस्यबर्हिषोविराजसि॥ २ *॥

हे इन्द्र! "येन" आत्मीयेन मदेन "आयवे" औवंशेयाय † "मनवे" विवस्वतः पुत्राय च "ज्योतींषि" सूर्यादीनि वृत्रादिभिरावृतानि तदा रोण "विवेदिथ" अलभय प्रज्ञापितवान् प्रकाशितवानसीत्यर्थः; तेन मदेन "मन्दानः" मोदमानस्त्वम् "अस्य बर्हिषः" वृद्धस्य यज्ञस्य "विराजसि" विशेषेण दीप्यसे [यद्वा अस्येति तृतीयार्थे षष्ठी, अनेन बर्हिषा वृद्धेन मदेन हृष्यन् विराजसि विशेषेण दीप्यसे॥ २॥

---

* ऋ० वे० ६, १, १०, ५।

† 'आयवे—यजमानाय—इति वि०।

अथ तृतीया।

२ ३ १ ३ १ १ २र ३१ २
तद्द्याचित्तउक्थिनोनुष्टुवन्तिपूर्वथा॥

१ २ ३ १ २ ३ १ २
वृषपत्नीरपोजयादिवेदिवे॥ ३ *॥ १८

हे इन्द्र! "ते" त्वदीयं "तत्" प्रसिद्धं बलं "अद्याचित्" † अद्यापि ‡ "पूर्वथा" ¶ पूर्वस्मिन् काले इव "उक्थिनः" शस्त्रिणः स्तोतारः "अनुष्टुवन्ति" क्रमेण प्रशंसन्ति। स त्वं "वृषपत्नीः" वृषा वर्षन्तः पर्जन्याः पतिर्यासां तादृशीः "अपः" "दिवेदिवे" प्रतिदिवसं "जय" § स्वायत्तं कुरु॥ ३॥ १८

१ र र १ २
॥ हारिवर्णम्॥ तन्तेमदा२गृणीमसायि। वार्षणं

१ २ २ १ २ २ १ १ २
प। पुसाभा३होइम्। हौवा३हायि। उलोका३कृ३।

१ २ २ १ २ ५र र २
हो३वा३हा। तुम। द्रा२यिवा२३४औहोवा। हरि

---

* ऋ० वे० ६, १, १८, १।

† "निपातस्य च (६, ३, १३६)"—इति वि०।

‡ 'चित्—इति पदपूरणः'—इति वि०।

¶ "दिक्शब्देभ्यः (५, ३, २७)"—इति था।

§ मन्त्रे जयति दीर्घान्तः, तत्र "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति दीर्घः।

श्रियार२३४५म् ॥(१) ये नज्योता२यि९षिश्रापवायि। मा

नवेच। विवायिदो३था३। होवा३हायि। मन्दानो२

आ३। होवा३हा। सयव। हा२यिषा२३४औहोवा।

विराजसा२३४५यि ॥(२) तदद्याचा२यित्तंउक्थिना:।

आनुष्टुव। तिपूर्वा३था३। होवा३हायि। वृषापाली३:।

होवा३हायि। अप:। जा२या२३४औहोवा। दिवे

दिवा२३४५यि(३) ॥ ६ *॥ [१]

तन्तेमदाऔहोहायि। गार्णायिमा२३४सायि। वृ

षाणा२३४९हायि। पृत्सु सासहिमुलोका३४। औहोवा।

हुहा२३४हायि। उरुवा२३४क्। तु मद्रि। वोहरिश्रा

३४। औहोवा। हुहा२३४हायि। औहो३१२३४।

याम्। एहियाहा ॥(१) येनज्योता। औहोहायि।

---

* उ० गा० २प्र० २अ० ६सा०।

३ ५ २ १ ५ १ २
षोआया२३४वायि। मनावा२३४ई हायि। चविवेदिअम

२ १ १२ ४२ ५ १ २ ५ २ २
न्दाना३४। औहोवा। इहा२३४हायि। उरुवा२३४

५ २ १ २ १ ० २ १ ३२ ४२ ५ १ २
आ। स्वर्चिः। षोविराजा३४। औहोवा। इहा२३४

५ ३२ २ ५२ ५
हायि। औहो३१२३४। सायि।। एहियाइहा॥(२)

२ २२ २ १ २ ३ ५ २ १
तद्याचाऔहोहायि। ताउच्छा२३४ईना:। अनूष२३

५ १ २ २ २ ३२ ४२ ५ १ २ ५
४हा। वन्तिपूर्वथावृषपा३४। औहोवा। इहा२३४हा

२ २ ५ २ १२ २ १ ० २ २ ३२
यि। उरुवा२३४नीः। अपोज। यादिवेदा३४। औ

४२ ५ १ २ ५ ३२ २ ५२
होवा। इहा२३४हायि। औहो३१२३४। वायि। ए

५
हियाइहा(३)॥ १३ ग॥ [२]

५ ४ २ ४ ५२ ४ ५ १
॥ सौभरम्॥ तन्ता३यिमा३दङ्गृणीमसावा। वृषणं

२ १ ० १ २ ५ १
पृक्षुसासा२हायिमुलो२३। हो। का२३४कु। तुमद्रि

ऽ २ १ २ ५२ २ ५२ ४
वः। हरा३यिहा३यि। आ२या२३४औहोवा॥(१) येना

---

० ऊ० गा० १३प्र० १अ० १३सा०।

२ ४ ५र ४५ १ र र १ ७
इज्यो३तीऽषिआयवोवा । मनवेचविवेदा२यिथामन्दा

१ १ ५ १ ५ २
२३। हो। नो२३४वा। स्यर्चिषः। विरा३हा३यि।

१ ३ ५र र ५४ ५ ४ ५ ४ ५
जा२सार३४औहोवा ॥(२) तदा३द्या३चित्तउक्थिनोवा।

१ र १ ७ १ ३ ५ १
अनुष्टुवन्तिपूर्वा२थावृषार३। हो। पा२३४नीः। अ-

र र ५ २ १ ३ ५र ७ १
पोजया। दिवे३हा३यि। दा२यिवा२३४औहोवा। ऊ

१ १ १ १
२३४५(३) ॥ १९ ॥ १८

अथ तृतीयतृचे† —प्रथमा ।

३ १ २र ३ २उ ३ १ २ ३ १ २
श्रुधी हवन्तिरश्च्या इन्द्र यस्त्वा सपर्यति ।

१ २ ३१ २ १ २ २ १ २
सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ १‡ ॥

हे इन्द्र ! यः "त्वा" त्वां "सपर्यति" । सपरशब्दः कण्ड्वादिः¶ हविर्भिः परिचरति । तादृशस्य "तिरश्च्याः"—एतन्नामकस्य ऋषेर्मम "हवं" स्तुतिभिस्त्वद्विषयमाह्वानं "श्रुधि" शृणु ।

* उ० गा० १९प्र० १ख० २९सा० ।

† "तैरश्च्यं तृतीयमुक्थ्यम्"—इति वि ।

‡ छ० आ० ४, २, १, ४ ( १०७ पृ० ) = ऋ० वे० ६, ६, २०, ५ ।

¶ अत "कण्ड्वादिभ्यो यक् (३, १, २७)"—इति यकि रूपमिति भावः ।

श्रुत्वा च हे इन्द्र ! त्वं "सुवीर्यस्य" शोभन-वीर्योपेतस्य [ यद्वा, वीरे पुत्रे भवं वीर्यं, सुपुत्रवतः ] "गोमतः" गवादि-पशुमतः "रायः" धनस्य दानेन अस्मान् "पूर्द्धि" पूरय । एतत्सामर्थ्यं कुतइत्यतआह—त्वं "महान्" गुणाधिकः श्रेष्ठश्च "असि" भवसि खलु ॥ १ ॥

अथ द्वितोया ।

१ २ ३ १ २ ३ १ २ ३ १ २र
यस्त इन्द्र नवीयसीङ्गिरम्मन्द्रमजीजनत् ।

२ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
चिकित्विन्मनसन्धियम्प्रत्नामृतस्यपिप्युषीम् ॥ २ * ॥

हे "इन्द्र !" "यः" यजमानः "नवीयसीं" नवतरां † पुनःपुनः क्रियमाणतया "मन्द्रां" मदकरीं "गिरं" स्तुतिलक्षणां वाचं "ते" त्वदर्थम् "अजीजनत्" उदपीपदत् अकार्षीदित्यर्थः । तस्मै "स्तोत्रे" त्वं "प्रत्नां" पुरातनीम् ‡ "ऋतस्य" सत्यस्य¶ सम्बन्धि [ यद्वा तृतीयार्थे षष्ठी ( २, ३, ६३ ) ] सत्येन "पिप्युषीं" प्रवृद्धां ["सिलङ्गर्भोश्च ( ६, १, २८ )"—इति प्यायतेः पी-भावः ] तादृशः "चिकित्वित् मनसं" [ 'कित ज्ञाने' वसौ रूपम्, आकारस्येकारश्छान्दसः ] चिकित्वांसि ज्ञानानि

* ऋ० वे० ६, ६, २०, ६ ।

† 'नवीयसीं—नवतरां स्वदुपदवर्णस्वरोदाहरणयुक्ताम्'—इति वि० ।

‡ 'ऋग्यजुःसामलक्षणाम्'—इति वि० ।

¶ 'ऋतस्य पिप्युषीं—ऋतो यज्ञः अथवा ऋतमन्नम् अथवा ऋतः प्रजापतिः अथवा ऋतं सत्यं परं ब्रह्म, तस्य पिप्युषीं पोषणसमर्थाम्'—इति वि० ।

सर्वेषां हृदयानि ययेति अभयङ्कियमाणं यत्तव रक्षणं तत् सर्वेषां हृदयं प्रज्ञापयतीति । ततः अतीन्द्रियार्थदर्शिकं "धिय" त्वदीयं रक्षणाख्यं कर्म तस्मै कुरु ॥

"यस्तइन्द्र"-"इन्द्रयस्ते"—इति व्यत्ययेन पाठो ॥ २ ॥

अथ तृतीया ।

१ २   ३ १र   २ १ २ ३   १ २ ३ १

तमुष्टवामयङ्गिरइन्द्रमुक्थयानिवावृधुः ।

३ १ २ ३ १   २ १ २

पुरूण्यस्यपौꣳस्यासिषासन्तोवनामहे ॥ ३ * ॥ १९

॥ इति द्वितीयः प्रपाठकः ॥

अन्वयः "तम्" परस्परमाहुतं पूर्वोक्तलक्षणम् "उ"—इत्यवधारणे तमेव "इन्द्रम्" "स्तवामः" स्तुतिभिः स्तुमः "यम्" इन्द्रं "गिरः" अस्माकं स्तुतयः "उक्थ्यानि" शस्त्राणि च "वावृधुः" प्रावर्धयत् तं स्तुमः ; ततो वयम् "अस्य" इन्द्रस्य "पुरूणि" बहूनि "पौंस्याणि" वीर्याणि "सिषासन्तः" [ 'षण सम्भक्तौ' सनीड्भावपक्षे आत्वे कृते रूपं. "सनोतेरनः (८, ३, १०८)"—इति सांहेतिकं षत्वम् ] तानि वीर्याणि सम्भक्तुमिच्छन्तः सन्तो "वनामहे" तमिन्द्रं स्तुतिभिः सम्भजामहे ॥ ३ ॥

* ऋ० वे० ६, ६, २१, १ ।

॥ तैरश्चम्॥ अधीद्दा३वन्तिरश्विया:। इन्द्रायस्त्वा। सपर्य्यता२३४यि। सुवी। रिया। स्या२३४गो। मातार:। रायास्पृर्द्धी३। हा३हायि। महा५ऽश्रसो॥(१)

यस्त्वा३यिन्द्रनवीयसायिम्। गिराम्मन्द्राम्। अजीजना२३४त्। चिकि। त्विन्मा। ना२३४साम्। धायार्म्। प्रत्नामार्त्ता३। हा३हा। स्यपा5५यिप्पुषीम्॥(२)

तमुंष्टा३वामयङ्गिरा:। इन्द्रामुक्था। निवावृधू२३४:। पुरू। णिया। स्या२३४पौ। साया२। सिषासान्ता३:। हा३हायि। वना५महायि। हो५ई। डा३॥ ७ *॥ [१]

॥ वारवन्तीयम्॥ अधीहवाश्रौहोहायि। ताइरश्वा२३४या:। इन्द्रयस्त्वासपर्य्यातो२३४हायि। सुवीर्य्यस्यगो

* ऊ० गा० २प्र० २श्र० ७सा०।

मा३४। औहोवा। इहा२३४हायि। उक्षवा२३४ता:।
रायस्पू। धायिमहाꣳआ३४। औहोवा। इहा२३४
हायि। औहो३१२३४। सायि। एहियाइहा॥(१) य
स्तइन्द्राऔहोहायि। नावीया२३४सायिम्। गिरम्
न्द्रामजीजानो२३४हायि। चिकित्विन्मनमश्वा३४। औ
होवा। इहा२३४हायि। उक्षवा२३४याम्। प्रत्नाम्ट।
तास्यपिप्यू३४। औहोवा। इहा२३४हायि। औहो
३१२३४। षोम्। एहियाइहा॥(२) तमुष्टवाऔहोहा
यि। मायज्ञा२३४यिरा:। इन्द्रमुक्थानिवावार्धो२३४
हायि। पुरूण्यस्यपौꣳसा३४। औहोवा। इहा२३
४हायि उक्षवा२३४या। सिषास। तोवनामा३४। औ

४र ५ १ २ ५ ३र २ ५र
होवा। इहार३४हायि। औहो३१२३४। हायि। ह

५ ४
हियाईहा। होपुइ। डा(३) ॥ १४ * ॥ [२] १८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थाध्यायस्य

षष्ठः खण्डः † । ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ४ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-

श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-

चार्य्येण विरचिते माधवीये सामवेदार्थ-

प्रकाशे उत्तराग्रन्थे चतुर्थोऽध्यायः ‡ ॥

---

* ऋ० गा० १३प्र० १अ० १४सा० ।

† 'तृतीयखण्डः समाप्तः' इति वि० ।

‡ द्वितीयश्च प्रपाठकः समाप्तः'—इति वि० मूल-पदकारादि-सम्मतश्चेति-भ्रम् ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम्॥ ५॥

## ॥ अथ पञ्चमाध्यायः आरभ्यते* ॥

तत्र,

प्रथमे खण्डे प्रत आश्विनीरिति† तृचं प्रथमं सूक्तम्,

तत्र प्रथमा—

२ ३ १ २ ३ १ २
प्रत आश्विनीः पवमान धेनवो
३ १ २ ३ १ २ ३ १ २
दिव्या असृग्रं पयसा धरीमणि।
१२ २२ ३ १ २ ३
प्रान्तरिक्षात्स्थाविरीस्ते असृक्षत
१ २ ३ १ २ ३ १ २
ये त्वा मृजन्त्यृषिषाण वेधसः॥ १ ‡॥

हे "पवमान" सोम! "ते" तव "आश्विनीः" व्याप्ताः [ 'अशू व्याप्तौ ( स्वा० आ० )' तस्मादौणादिको विनिः, ततोऽण्, व्यत्ययेनाद्युदात्तः] "धेनवः" प्रीणयित्र्यः "दिव्याः" दिवि भवाः

---

* 'अथ चतुर्थस्य दशरात्रस्य द्वितीयस्त्रिरात्रः। प्रकृतच्छन्दाः प्रथमस्त्रिरात्रः। अथोत्तरस्य छन्दांसि बृहत्यस्त्रिष्टुभो जगत्यः प्रतिपदः, जगतीस्थाने त्रिष्टुभः, त्रिष्टुभां गा प्रवाः'—इति वि०।

† "एषा चतुर्थस्य प्रतिपत्"—इति वि०।

‡ ऋ० वे० ७, ३, १२, ४।

दिवः पतन्त्यो धाराः "पयसा" युक्ताः* "धरीमणि" धारके द्रोणकलशे "प्र असृग्रन्" गच्छन्ति "ये" "वेधसः" विधातारः ऋत्विजः हे सोम ! "ऋषिषाण" ऋषिभिः सम्भक्तत्वात् "त्वा" त्वाम् "मृजन्ति" अभिषुण्वन्ति, "ते" वेधसः "स्थाविरीः" स्थविरा धारा"‡ "अन्तरिक्षात्" सकाशात् "प्र असृक्षत" पात्रं प्रति सृजन्ति ॥

"धेनवे"–"धीजुवो"—इति पाठौ, "प्रान्तरिक्षात्स्थाविरीस्तेअसृक्षत"–"प्रातऋषयःस्थाविरीरसृक्षत"—इति च ॥ १ ॥

अथ द्वितीया ।

३ १ ३ १ २ ३ १ २
उभयतःपवमानस्यरश्मयो

३ १ २ ३ १र २र ३ १ २
ध्रुवस्यसतःपरियन्तिकेतवः ।

१ २ ३ २ ३ १ २ ३ २ ३ २ ३
यदीपवित्रे अधिमृज्यतेहरिः

२ ३ १र २र ३ १ २
सत्तानियोनौकलशेषुसीदति ॥ २ ¶ ॥

"पवमानस्य" पूयमानस्य "ध्रुवस्य" स्वयमविचलितस्य "सतः" विद्यमानस्य सोमस्य "केतवः" प्रज्ञापका रश्मयः "उभयतः" इतश्चामुतश्च "परि यन्ति" परितो गच्छन्ति अभिषव-

---

* 'पयसा—तृतीयैकवचनमिदं प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् पयांसि'—इति वि० । † 'धरीमणि—यज्ञ'—इति वि० ।

‡ 'स्थाविरीः स्थिराः स्थूला वा स्थविरीर्वा गावः रश्मयः'—इति वि० ।

¶ ऋ० वे० ७, ३, १३, १ ।

समये एवं भवति । "यदि" यदा "पवित्रे"* दशापवित्रे "हरिः" हरितवर्णोऽयं सोमः "अधि मृज्यते" तदानीं "सत्ता" सदनशीलोऽयं "योनौ"† योनिषु स्थानेषु "कलशेषु" द्रोणकलशादिषु पात्रेषु "निषीदति" निषस्रो भवति ॥

"योनौ"--"योना"—इति च पाठौ ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ २
विश्वाधामानिविश्वचक्षऋभ्वसः
३ १ २ ३ १र २र २ १ २
प्रभोष्टसतःपरियन्तिकेतवः ।
२ १ २ २ १ २ २
व्यानशीपवसेसोमधर्मणा
२ २ १ २ ३ १ २
पतिर्विश्वस्यभुवनस्यराजसि ॥ ३ ‡ ॥ १

हे "विश्वचक्षः" सर्वस्य द्रष्टः ! सोम ! "प्रभोः" परिवृढस्य "सतः" "ते" तव "ऋभ्वसः" "[ऋभ्वा"—इति महन्नामसु¶] महान्तः "केतवः" रश्मयः "विश्वा" विश्वानि सर्वाणि

* 'पवित्रे अधि—सप्तम्येक-वचनमिदं प्रथम्येकवचनस्य स्थाने द्रष्टव्यम्, पवित्रादधि'—इति वि० ।

† 'नितरां योनिर्नियोनिः, अथवा नीचैः स्थिता पवित्रस्य योनिर्नियोनिः, तस्मिन् नियोनौ'—इति वि० ।

‡ ऋ० वे० ७, ३, १९, ५ ।

¶ सायणमतेऽदःपदं निघण्टौ महन्नामसु ( ३, ३ ) पाठभेदेन पठ्यते । विवरणकारस्तु 'ऋभ्वसः—प्रभुत्वस्य'—इति व्याचष्टे ।

"धामानि" तेजः-स्थानानि देव-शरीराणि* "परियन्ति" परितो गच्छन्ति प्रकाशयन्तीत्यर्थः। हे "सोम !" "व्यानशी" व्यापन-शीलस्त्वं "धर्मणा" धारकेण रसनिष्यन्देन "पवसे" पूयसे। किञ्च "विश्वस्य भुवनस्य" "पतिः" स्वामी त्वं "राजसि" ईश्वरो भवसि† ॥

"प्रभोष्टेसतःपरियन्ति"-"प्रभोस्तेसतःपरियन्ति"—इति पाठौ, "व्यानशी"-"व्यानशि"—इति, "धर्मणा"-"धर्मभिः" —इति च ॥ ३ ॥ १

२ २ २र ५ १र ४ २र
॥ लौशाद्यम् ॥ प्रतआश्वि। नीःपवमार३। ना३धे

३ ५ २ २र २ ५ १ ४ २र ३ ५ १र
नवः। दिव्याश्रसृ। ग्रन्पयसार३। धा३रीमणि। प्रा

२ ३ ५र १र र ४ २ ३ ५ ३र २ १
न्तरिक्षात्। स्थाविरीस्ते २ ३। आ३सृक्षत। येत्वामृ

५ १ २ ४ २ १
जा। तिऋषिषार३। णवा३यिधा५साई५६ः ॥(१) उभ

३ ५ १ र ४ २ १ ५ १ १ ३ ५ १
यतः। पवमाना२३। स्या३रश्मयः। ध्रुवस्य। तः

४ २र ३ ५ ३ २र १ ५ १र
परियार३। न्ती३केतवः। यदीपवि। त्रेअधिमा२३।

---

* 'विश्वा धामानि—विश्वानि स्थानानि जन्मानि नामानि वा'—इति वि०।

† 'राजसि—दीप्यसे शोभसे वा'—इति वि०।

४ २र ३५ ३२र ३५ १र २
ज्याइतेचहरिः। सत्तानियो। नौकवामाऽ२३यि। मुसा३

३ २र २र५र १
यिदा५ता६५६यि॥(२) विश्वाधामा। निविश्वचा २३।

४ १ ३ ५ ३ २र३र५ १ ४ २र३५
श्वा३श्वभ्वसः। प्रभोष्टेस। तःपरियार३। तौ३केनवः।

३ १र३५र १ र ४ २१५र ३ १ ३५
वियानशो। पवसेसो२३। मा३धर्मणा। पतिर्विश्वा।

१ २ ४
स्यभुवना२३। स्यरा३जा५सा६५६यि(३)॥ २ *॥ [१].

अथ द्वितीयतृचे—प्रथमा।

१ २ ३ २ ३ १र २र ३ २
पवमानोअजीजनद्दिवश्चित्रन्नतन्यतुम्।

१ २ ३ २ ३ २
ज्योतिर्वैश्वानरंबृहत्॥ १ †॥

"पवमानः" पूयमानः सोमः "बृहत्" महत् "वैश्वानरं" वैश्वानराख्यं "ज्योतिः" तेजः "दिवः" द्युलोकस्य "चित्र" विचित्रं "तन्यतुं न" अशनिमिव "अजीजनत्" अजनयत्॥ १॥

---

* ऊ० गा० ८प्र० २अ० २सा०।

† छ० आ० ५, १, ५, ८ (२भा० ३८ पृ०)=ऋ० वे० ७, १, ११, १।

अथ द्वितीया ।

१ २   ३ १ ३ १ २ १ ३   ३ २
पवमानरसस्तवमदोराजन्नदुच्छुनः ।
२उ २
विवारमव्यमर्षति ॥ २ * ॥

हे "राजन्" दीप्यमान ! "पवमान" पूयमान ! सोम ! "तव" त्वदीयः "मदः" मदकरः "अदुच्छुनः"† रक्षोवर्जितः "रसः" "अव्यम्" अविमयं "वारं"‡ वालं दशापवित्रम् "वि अर्षति" अभिगच्छति ॥

"पवमानरसस्तव"-"पवमानस्यतेरसः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २   ३ २ ३ १ ३ १ २   ३ २
पवमानस्यतेरसोदक्षोविराजतिद्युमान् ।
२ ३ २ ३ २र ३ २
ज्योतिर्विश्वꣳस्वर्दृशे ॥ ३ ¶ ॥ २

हे सोम ! "पवमानस्य" "ते" त्वदीयः "रसः" "दक्षः" § "द्युमान्" दीप्तिमान्‖ "विराजति" प्रकाशते** । न केवलं

---

* ऋ० वे० ७, १, २१, २ ।

† 'दुच्छुनः दुष्टजनः, न दुच्छुनः अदुच्छुनः'—इति वि० ।

‡ 'विवारं—वि-अकारिवं च, वारं=यालम्'—इति वि० ।

¶ ऋ० वे० ७, १, २१ ३ ।

§ 'दक्षः शीघ्रगामी, अथवा दक्षरक्षणक्रियायाः कर्म'—इति वि० ।

‖ 'द्युमान् द्युलोकवान्'—इति वि० ।

** 'विविधं दीप्यते शोभते वा'—इति वि० ।

स्वयमेव प्रकाशते किन्तु "विश्वं" व्याप्तं *"स्वः" सर्वं "ज्योतिः" तेजः "दृशे" द्रष्टुं करोतीति शेषः† ॥

"पवमानस्य तेरसः"-"पवमानरसस्तव"—इति पाठौ ॥३॥२.

१ २र र १ २
॥ सप्तहितम् ॥ पवमानोअ। जा२यिजनात्। दि

१ २ १ १ २
वा२ः। चा२३यिचाम्। नता२न्यात्नम्। ज्यो२३तीः।

१ ७ २ ५
वा२यिश्वा। नरा२३म्। हाउवा३। ब२३४हात्॥(१)

१ २र १ २ १ २ १
पवमानर। सा२स्तवा। मदो२। रा२३जान्। अ

१ २ १ ७
दू२च्छुनाः। वा२३यिवा। रा२मा। व्यमा२३।

२ ५ १ २र १०
हाउवा३। षा२३४ती॥(२) पवमानस्य। ता२यिरसाः।

२ १ १ १ १
दक्षो२। वा२३यिरा। जता२यिद्युमान्। ज्यो२३-

२ १ ७ २
तीः। वा२यिश्वाम्। सुवा२३। हाउवा३। ह२३४

५
श्रो(३)॥ १२ ॥ [१]

---

* 'विश्वं सर्वम्'—इति वि०।

† 'स्वर्दृशे—स्वर्गलोकस्य गमनाय ; न केवलं स्वर्गलोकस्य, सर्वस्य जगतो दर्शनायेत्यर्थः'—इति वि०।

‡ ऋ० गा० १२म० १ख० १२सा०।

॥ जराबोधीयम् ॥ पवमानोवा। आजीजनात्।
दिवाश्चार२३यिचाम्। नतन्यातूम्। ज्योतार्यिर्वा१यि
श्वार२३ना। रम्। बृहो३४५ई। डा॥(१) पवमानोवा।
रासस्तवा। मदोरार२३जान्। अदुच्छूनाः। विवारा
१मार२३व्याम्। अ। षतो३४५ई। डा॥(२) पवमानों
वा। स्यातेरसाः। दक्षोवा२३यिरा। जतिद्युमान्।
ज्योतायिर्वा १ यिश्वा २ ३ॐसूऽ। वः। हशो ३ ४ ५ ई।
डा(३) ॥ ८ * ॥ [२]

॥ औपगवोत्तरम् ॥ पवमा३नोअजीजनात। दिवश्चि
त्रन्नतन्यतूम्। ज्योतौ२। हौ२। ऊवा २ ३ यि।
वा३४यिश्वा। नरम्बृहात् ॥(१) पवमा३नरसस्तवा। मदो
राजन्नदुच्छुनाः। विवौ२। हौ२। ऊवा२३यि। रा

---

* ऊ० गा० १८प्र० १अ० १८सा०।

५　　२ १ २　　५ ५ ४ ५र　　१ र
३४मा । व्यमर्षातायि ॥(२) पवमा३नस्यतेरसाः । दक्षो
र　　२र　　१
विराजतिद्युमान् । ज्योती२ । र्ची२ । ऊवा२ ३ यि ।
२　५　　२ १ १　　र　　१　　२
वा३४यिश्वाम् । सुवर्हृशायि । ऐ । चा२ए२३ । ह्शिां
५र र　　२　　१ २　　१ १ १ १
३४औहोवा । ए३ । उपा३१२३४५(३) ॥ ८ * ॥ [३] २

अथ प्रयद्गावइति षडृचं तृतीयं सूक्तम्,

तत्र प्रथमा ।

२उ　३ १　२र　३ २ ३ २　३　१ २
प्रयद्गावोनभूर्णयस्त्वेषाअयासोअक्रतुः ।
१ २ ३ २उ　३ १ २
घ्नन्तःकृष्णामपत्वचम् ॥ १ † ॥

"यत्" ये अभिषुताः सोमाः "गावः न" उदकानीव [तानि यथा तूर्णमधः पतन्ति तद्वत्; गाव एव वोपमीयन्ते, ता यथा स्वं गोष्ठं प्रत्याशु गच्छन्ति तद्वत्; अथवा गावः स्तुतिवचनाः यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति तद्वत्], "भूर्णयः" क्षिप्राः, "त्वेषाः" दीप्ताः "अयासः" अयाः गमनशीलाः, "कृष्णां" कृष्णवर्णाम् "अपत्वचम्" अपकृष्टां त्वचं "घ्नन्तः" विनाशयन्तः, ईदृग्भूता ये सोमाः "प्र अक्रमुः" तां स्तुम इति शेषः ॥

"यत्"-"ये"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १८प्र० १ख० ८सा० ।

† ऋ० सा० ६, १, १, ५ ( २भा० ४७पृ० )=ऋ० वे० ६, ८, ११, १

अथ द्वितीया ।

२ १२ ३१ ३१२३ क२र
सुवितस्यवनामहेतिसेतुन्दुराय्यम् ।
३ २ ३१ २ ३२
साह्यामदस्युमव्रतम् ॥ २* ॥

"सुवितस्य"† शोभनं प्राप्तस्य सोमस्य सम्बन्धिनम् "अति-सेतुम्"‡ रक्षोविषयं बन्धनं "वनामहे"¶ सोमकर्त्तृकं रक्षसां बन्धनं स्तुमइत्यर्थः । कीदृशम् ? "दुराय्यम्" दुष्प्रापणीयम् § किञ्च "अव्रतम्" यज्ञादि-कर्म-रहितं "दस्युं"‖ शत्रुं "साह्याम" अभिभवेम ॥

"दुराय्यं"-"दुराव्यं","साह्याम"-"साह्वांस"—इति पाठाः॥२॥

अथ तृतीया ।

३ १२१२ ३१र २र ३ १ २
शृण्वेवृष्टेरिवस्वनःपवमानस्यशुष्मिणः ।
१२ ३१२ ३ २
चरन्तिविद्युतोदिवि ॥ ३ ** ॥

"शृण्वे" श्रूयते । कः ? "स्वनः" । किमिव ? "वृष्टेः"

---

* ऋ० वे० ६, ८, २१, २ । "मनामहे"—इति च तत्र क्वचित् पाठः ।

† 'सुवितस्य—अभिषुतस्य'—इति वि० ।

‡ 'अतिसेतुं—मर्य्यादां त्यक्त्वा अतिप्रहृष्यमानतया'—इति वि० ।

¶ 'वनतिः स्तुतिकर्मा, स्तुतिं कुर्मः'—इति वि० ।

§ 'दुराय्यं—दुर्वार्यम्, अथवा दुराप्यं दुःसाध्यम्'—इति वि० ।

‖ 'व्रत-वर्ज्जितम्'—इति वि० ।

** ऋ० वे० ६, ८, २१, ३ ।

वर्षणस्य स्वनइव [ तस्य यथा महान् स्वनः श्रूयते तद्वत् प्रभूत-रस-पात-समये श्रूयते ]। कस्य स्वन इति? तत्राह—"पवमानस्य" पूयमानस्य "शुष्मिणः" बलवतः तस्यैव "विद्युतः" दीप्तयः* "दिवि" अन्तरिक्षे चरन्ति ॥ ३ ॥

अथ चतुर्थी ।

१ २ ३ २३ ३ १ २ ३ १ २
आपवस्वमहीमिषङ्गोमदिन्दोहिरण्यवत् ।

अश्ववत्सोमवीरवत् ॥ ४ † ॥

हे "इन्दो !" "सोम !" अभिषुतः त्वं "महीम् इषम्" महदन्नम् "आ पवस्व" ‡। कीदृशम् अन्नम्? "गोमद्" गोभिर्युक्तम्, "हिरण्यवत्" सुवर्णोपेतम्, "अश्ववत्" अश्वोपेतम्, "वीरवत्" पुत्रयुक्तम् ॥

"अश्ववत्सोमवीरवत्"-"अश्वावद्वाजवत्सुतः"—इति पाठौ॥४॥

---

* 'विद्युतः—विद्युत्संयुक्तस्य'—इति वि० ।

† ऋ० वे० ६, ८, ३१, ४ ।

‡ 'आपवस्व महीमिषम्'—आभिमुख्येन पवस्व महीमिषम् महतीमिष बृहिमन्नं वा'—इति वि० ।

अथ पञ्चमी।

१ २ ७ २ ३ १ १२
पवस्वविश्वचर्षणआमहीरोदसीपृण।
३ २उ ३ २ ३ १ २
उषाःसूर्योनरश्मिभिः॥ ५ *॥

हे "विश्वचर्षणे" विश्वस्य द्रष्टः सोम! स त्वं "पवस्व" क्षर रसम्। तथा कृत्वा तेन रसेन "मही"† "रोदसी" द्यावापृथिव्यौ "आ पृण" आ पूरय। "उषाः" उषसः [एकदेश-वाचिनोषः-शब्देनाहान्युपलक्ष्यन्ते तत्प्राधान्यात्] अहानि "रश्मिभिः" "सूर्योन" सूर्यइव॥

"पवस्वविश्वचर्षणे"-"पवस्वविश्वचर्षण"—इति पाठौ॥ ५॥

अथ षष्ठी।

१ २ ३ २ ३ १ २ ३ १ २
परिनःशर्मयन्त्याधारयासोमविश्वतः।
१ २ ३ १ २ ७ १ २
सरारसेवविष्टपम्॥ ६ ‡॥ ३

हे सोम! "नः" अस्मभ्यं "शर्मयन्त्या" सुखयन्त्या धारया¶ "विश्वतः" सर्वतः "परि सरा" परिसर परिचर। "रसेव"

---

* ऋ० वे० ६, ८, ३१, ५।

† 'मही—महती'—इति वि० महत्यौइत्यर्थः।

‡ ऋ० वे० ६, ८, ३१, ६।

¶ 'शर्मयन्त्या—शर्म-सुखं, तद्भावयन्त्या धारया'—इति वि०।

रसेनेव "विष्टपं" भूलोकं* [ यद्वा रसा नदी स्थानं सा प्रवणरूपमिव ] ॥

"परिनः"-"परिणः"—इति पाठौ ॥ ६ ॥ ३

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य पञ्चमाध्यायस्य प्रथमः खण्डः ॥ १ ॥

अथ द्वितीय खण्डे—

आशुरर्षेति षडृचं-प्रथमं सूक्तम्, तत्र प्रथमा ।

३ १ २　　३ १ २ ३ १ ३ १ २
आशुरर्षबृहन्मतेपरिप्रियेणधाम्ना ।

१ २ १ ३उ १ १ २
यत्रदेवाइतिब्रवन् ॥ १ † ॥

हे "बृहन्मते" ‡ महामते सोम ! "प्रियेण" देवानां प्रियतमेन "धाम्ना" शरीरेण ¶ "धारया" "आशुः" शीघ्रः सन्

---

* 'विष्टपं स्वर्गं लोकम्,—इति वि० ।

† ऋ० वे० ६, ८, २९, १ । "ब्रुवन्"—इति मु०पाठः, ऋग्वेदे च क्वचित् पाठः

‡ 'बृहन्मते—बृहद्बुद्धे'—इति वि० ।

¶ 'परिप्रियेण—परि समन्तात् प्रियेण धाम्ना प्रियेण स्थानेन'—इति वि० ।

"पर्यर्षं" परिगच्छ, "यत्र" "देवाः" इन्द्रादयः वर्त्तन्ते—"इति" "ब्रुवन्" उच्चारयन्, तं देशं गच्छामीति ब्रुवन्नित्यर्थः ॥ १ ॥

अथ द्वितीया।

१ १र २र ३ १ २ ३ २ ३ १ २
परिष्कृण्वन्ननिष्कृतञ्जनाययातयन्निषः।
३ २ ३ १ २र
वृष्टिन्दिवःपरिस्रव ॥ २ * ॥

"अनिष्कृतम्" असंस्कृतम् † यजमानं स्थानं वा "परिष्कृण्वन्" संस्कुर्वन् "जनाय" "इषः" अन्नानि "यातयन्" ‡ निर्गमयन् "दिवः" अन्तरिक्षात् "वृष्टिं" ¶ "परि स्रव" ॥ २ ॥

अथ तृतीया।

२ २उ ३ १र २र ३ १ ५ ३ २ ३ २
अयꣳसयोदिवस्परिरघुयामापवित्रआ।
१ २ ३ १ २र
सिन्धोरूर्म्माव्यक्षरत् ॥ ३ § ॥

"सः" "अयं" सोमः "पवित्रे आ" सिच्यमानः [—इति

* ऋ० वे० ६, ८, २९, २।

† 'अनिष्कृतम्—आभिमुख्येन निष्कृतम्'—इति वि०। इह केनचिन्मतम् अनर्थ आभिमुख्यं कुतो लभ्यमिति।

‡ 'यातयन्'—प्रापयन्—इति वि०।

¶ मुद्रित-मूले तु "वृष्टिम्"—इति पाठः ऋग्वेदेपि तथा।

§ ऋ० वे० ६, ८, २९, ३।

शेषः *] "सिन्धोः" जलस्य † "ऊर्मौ" ‡ ऊर्मौ सङ्घाते "वि अचरन्" विविधं चरति। स इत्युक्तम्, कः? इत्याह— "यः" "दिवस्परि" द्युलोकस्योपरि "रघुयामा" लघुगमनः ¶. देवप्रासौ, सोयमिति सम्बन्धः ॥ ३ ॥

अथ चतुर्थी।

३ १ २　३ २ ३ २उ　३ १ २ ३ १ २

सुतएतिपवित्रआत्विषिन्दधानओजसा।

३ १ २　३ १ २

विचक्षाणोविरोचयन् ॥ ४ § ॥

"सुतः" अभिषुतः सन् "पवित्रे" दशापवित्रे [ "आ" —इत्यनर्थकः ] "ओजसा" बलेन "शीघ्रम्" "एति" गच्छति। कीदृशः सन्? "त्विषिं" दीप्तिं "दधानः" धारयन्, "विचक्षाणः" सर्वं पश्यन्, ‖ "विरोचयन्" दीपयंश्च; किम्? देवानिति शेषः ॥ ४ ॥

---

* 'पवित्रे—अधिकरण-सप्तम्यषा; पवित्रे अधिकरणभूते। आ-इत्ययमुपसर्गः अचरदित्याख्यातेन सम्बन्धयितव्यः; आ अचरत्'—इति वि०।

† 'सिन्धोः—समुद्रस्य नदीनाम्बोदकस्य वा'—इति वि०।

‡ 'ऊर्मयः सङ्घाताः'—इति वि०। ऊर्मा इति तूर्म्मिशब्दस्य सुपां सुलुगिति सुपो डादेशे डि-लोपे रूपम्।

¶ 'रघुशब्दो लघुवाची'—इति वि०।

§ ऋ० वे० ६, ८, २९, ४।

‖ 'विचक्षाणः—विविधं पश्यमानः कथं वा विश्वं जगत् पश्यमानः'—इति वि०।

अथ पञ्चमी।

२ ११ ३१२ १२ ३१२ ३१
आविवासन्परावतोअथोअर्वावतःसुतः।
१२ ३१२
इन्द्रायसिच्यतेमधु॥ ५ *॥

"सुतः". अभिषुतः सोमः "परावतः" [दूरनामैतत् †] दूरस्थान् "अथो" ‡ अपिच "अर्वावतः" अन्तिकस्थांश्च ¶ देवान् "आ विवासन्" रसेन परिरक्षणायेत्यर्थः। "इन्द्राय" इन्द्रार्थम् "मधु" मधुमद्रसः सोमः "सिच्यते"॥ ५॥

अथ षष्ठी।

२ १२ ३१२ ३१२
समीचीनाअनूषतहरिंहिन्वन्त्यद्रिभिः।
२३१२ ३१२
इन्दुमिन्द्रायपीतये॥ ६ §॥ ४

"समीचीनाः" सम्यगञ्चिताः सङ्गताः स्तोतारः ‖ "अनूषत" स्तुवन्ति किञ्च सोमं "हरिं" हरितवर्णं "हिन्वन्ति"

* ऋ० वे० ६, ८, २९, ५।

† "परावतः"—इति निघण्टौ तृतीय-षड्विंशे दूरनामसु पञ्चमत्वेन पाठात्।

‡ "अथ उ"—इति वि०।

¶ अन्तिकनामसु "अर्वाके"—इति पाठात् (निघ० २, १६, ८)।

§ ऋ० वे० ६, ८, २९, ६। "योनावृतस्यसीदत"—इति सत्र तृतीयः पादः।

‖ 'समीचीनाः—आसन्नवर्त्तिनः'—इति वि०।

प्रेरयन्ति गमयन्ति "अद्रिभिः" ग्रावभिः । किमर्थं हिन्वन्ति? "इन्दुं" सोमम् "इन्द्राय" इन्द्रस्य "पीतये" पानाय ॥ ६ ॥ ४

अथ तृचात्मके द्वितीयसूक्ते—प्रथमा ।

२ ३ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
हिन्वन्तिसूरमुस्रयःस्वसारोजामयस्पतिम् ।
२ १ १ २ ३ १ २
महामिन्दुम्महीयुवः ॥ १ * ॥

"उस्रयः" कर्मार्थं निवसन्त्यः सर्वत्र गन्त्र्य इत्यर्थः, "जामयः" एकस्याः पाणेः उत्पन्नत्वात् परस्परं बन्धुभूताः, "स्वसारः" [ अङ्गुलि-नामैतत् ( निघ॰ २, ५, १३ ) । सुष्ठु कर्मसु प्रेर्यन्ते ऋत्विग्भिरिति स्वसारः ] अङ्गुलयः, "महीयुवः" सोमाभिषवं कामयमानाः सन्तः "सूरं" सुवीर्यं [ सोमे पीते वीर्यं भवतीति ; शोभनं वीर्यं कारणं वा, सर्वेषां कर्मणि प्रेरकं वा, तादृशम् ] "पतिम्" सर्वस्य स्थावर-जङ्गम-जातस्य स्वामिनं, यस्माद् देवार्थमिज्यतेऽतएव "महाम्" देवेभ्यो दीयमानत्वेन महान्तं मंहनीयं वा "इन्दुम्" ग्रहेषु स्यन्दमानं सोमं "हिन्वन्ति" प्रेरयन्ति ["हिवि प्रीति-गत्योः (भ्वा॰ प॰)"—इति धातोरेतद्रूपं स्वादि ] † ॥ १ ॥

---

* ऋ॰ वे॰ ७, ९, १, १ ।

† 'हिन्वन्ति सूरम् उस्रयः = सेवयन्ति सूर्यम् आदित्यरश्मयः । स्वसारः जामयः पतिम् = स्वसारः भगिन्यः जामयः आदित्यरश्मयः ; यथा परस्परं भगिन्यः एकस्यैव भर्तुः अहमहमिकया सेवां कुर्वन्ति, तद्वदादित्य-रश्मयः अहमहमिकया आदित्यं सेवन्ति । एवं, महामिन्दुम्महीयुवः = महिमानमिच्छन्त्यः सोमरश्मयः उदकानि वा'—इति वि॰ ।

अथ द्वितीया।

१२ ३ १ २ ३ १ १ ३ १ २ ३ २
पवमानरुचारुचादेवदेवेभ्यःसुतः।
२ ३ २३ १ २
विश्वावसून्याविश ॥ २ * ॥

हे "पवमान" दशापवित्रेण पूयमान ! [यद्वा पुनान शुद्ध !] सोम ! "रुचारुचा" ["रुच दीप्तौ (भ्वा० आ०)] सर्वेण तेजसा हे "देव" दीप्यमान ! "देवेभ्यः" देवार्थं "सुतः" अभिषुतः त्वं "विश्वा" व्याप्तानि सर्वाणि बहूनि "वसूनि" धनानि "आ विश" अस्मात् प्रापय [ यद्वा सर्वाणि "वसूनि" वासस्थानानि ग्रहादीनि† "आविश" समन्तात् प्रविश] ॥

"देवेभ्यस्सुतः"–"देवेभ्यस्परि"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ २ ३ २ ३ १ २
आपवमानसुष्टुतिंवृष्टिन्देवेभ्योदुवः।
३ १ २ ३ १ २
इषेपवस्वसंयतम ॥ ३ ‡ ॥ ५

हे "पवमान" पूयमान ! पुनान ! वा सोम ! "सुष्टुतिं" ¶

* ऋ० वे० ७, २, १, २।

† ग्रह-चमसादीनि यज्ञीयपात्राणीति यावत्।

‡ ऋ० वे० ७, २, १, ३।

¶ 'सुष्टुतिं—शोभनां स्तुतिम् प्राप्यमाणां' —इति वि०

शोभनस्तुति-युक्तां "वृष्टिं" "देवेभ्यः" देवानां "दुवः"* ["सुपां सुलुक् (७, १, ३९)"—इति चतुर्थ्या लुक्] दुवसे परिचरणाय† "आ पवस्व" आ गमय त्वम् [यथा मदीयया स्तुत्या वृष्टिर्भवति तथा कुर्वित्यर्थः] किञ्च अस्माकम् "इषे" अन्नार्थञ्च "संयतं"‡ सम्यगस्मान् सङ्गच्छतीति वृष्टिं कुरु [यद्वा "दुवः" परिचर्या मभिलक्ष्य क्रियमाणां "सुष्टुतिं" शोभन-स्तुति-रूपां वृष्टिं बहुशः स्तुतिमित्यर्थः, एतां देवेभ्यः प्रापय]॥ २ ॥५

॥ विशोविशीयम्॥ . हिन्वाङ्कम्। ता३यिम्। रा३मूस्ना३याः। स्वसारः। जामार३याः। ऊम्नायि। पा३ता३यिम्। मार३४हा५हायि। ओ। ऊवायि। ई२३४न्दूम्। ऊम्नायि। मा३हो३। यू२३४वाः। एहि-याई६हा ॥(१) पवाङ्कम्मा३ना। रू३चारू३चा। देवदे। वायिभार३याः। ऊम्नायि। सू३ता३ः। वार३४यि

---

* 'दुवः—दूरात् द्युलोकात्'—इति वि०।

† "दुवस्यति"—इति परिचरण-कर्म्मसु पञ्चमं नैघण्टुकम् (३, ५)।

‡ "संयतं—सम्यङ् नियतम्'—इति वि०।

आहायि। ओ। ऊर्वायि। वा२३४सू। ऊम्मा। नी
ऱ्याऽ३। वा२३४यिश्वा। एहियाऽ६हा॥(२) आपाऽ३म्।
वाऽ३मा। नाऽ३सूष्ट्ऽ३तीम्। वृष्टिन्दे। वायिभा२३याः।
ऊम्मायि। दूऽ३वाऽ३ः। आ२३४यिषेहायि। ओ। ऊर्वा
यि। पा२३४वा। ऊम्मा। स्वाऽ३साऽ३म्। या २ ३ ४
ताम्। एहियाऽ६हा। हो५ई। डा(३)॥ १० *॥[१]

॥ ऐडानाऽमक्रारम्†॥ औहोयिऊवा३होयि। हि
न्वन्तिसूऽ३राऽ३मुस्रयः। स्वसारोजाऽ३माऽ३यस्पतिम्। म
हामा२३४यिन्दूम्। महीयुवः। इडा२३॥(१) पवमा
नाऽ३रुऽ३चारुचा। देवदेऽ३वेऽ३भ्यःसुतः। विश्वावा२३४सू।
नियाविश। इडा२३॥(२) आपवमाऽ३नाऽ३सुष्टुतिम्।
वृष्टिन्देऽ३वेऽ३भ्योदुवः। औहोयिऊवा३होयि। इषायि

* ऊ० गा० ५प्र० १ ख० १०सा०। † "इडानांसंक्षारः"—इति ख० पाठः।

२　४　२ १ २　१　२　४　५　४
पा२३४वा । स्वसंयतम् । इडा२३भा३ । एहीडा । हो

५ई । डा (३) ॥ १० * ॥ [२] ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य
द्वितीय खण्डः † ॥ २ ॥

---

अथ तृतीयखण्डे ‡ प्रथमतृचे—

प्रथमा ।

१ २　३ १ २　३ १ २
जनस्यगोपाअजनिष्टजागृवि

३२ ३ १ २　७　२ ३ १ २
रग्निःसुदक्षःसुवितायनव्यसे ।

३ १ २　३ १　२ ३ १　२
घृतप्रतीकोबृहतादिविस्पृशा

३ १र　२र　१ २ ३　१ २
द्युमद्विभातिभरतेभ्यःशुचिः ॥ १ ¶ ॥

"जनस्य" § "गोपा" गोपयिता रक्षिता, "जागृविः"

---

* ऊ० गा० १९प्र० २ख० १०गा० ।

† 'उक्तम् बहिष्पवमानमेकविंशस्तोमिकम्'—इति वि० ।

‡ 'इदानीमाज्यानि वक्ष्यन्ते'—इति वि० ।

¶ ऋ० वे० ४, १, ७, १=य० वे० १५, २७ ।

§ 'जनस्य—यजमानस्य'—इति वि० ।

जागरणशील: सदा प्रबुद्ध:, "सुदक्ष:" सुबल: सर्वैः श्लाघनीय-बल:, स: "अग्नि:" "नव्यसे" नवतराय "सुविताय"* लोकानां कल्याणाय "अजनिष्ट" जात:। तत: "घृत-प्रतीक:" घृतेन प्रज्वलिताङ्ग:, बृहता" महता "दिविस्पृशा" द्युलोकं प्राप्नुवता तेजसा युक्त:, "शुचि:" शुद्ध:, एवंविधोऽग्नि: "भरतेभ्य:" ऋत्विग्भ्य: तत्तदर्थं† "द्युमत्" दीप्तिमत् यथा भवति तथा "भाति"‡ प्रकाशते¶ ॥ १ ॥

---

* "सुविताय—यजमानजनाय अभिषवकर्त्रे'—इति वि०।

† 'भरता: मनुष्या: ऋत्विजो गृह्यन्ते, तेभ्य:'—इति वि०। "भरता:"—इति ऋत्विङ्नामसु प्रथमं नैघण्टुकम् (३, १८)।

‡ नाच वि-शब्दो व्याख्यात: सायणेन, विवरणकारस्त्वाह—'वि=विविधम्'—इति।

¶ अत्र महीधरव्याख्या यथा—"योऽग्निर्भरतेभ्य: ऋत्विग्भ्य: सकाशादजनिष्ट जात: तैर्मथितत्वात्तेभ्यो जात इत्युच्यते। भरता इति ऋत्विङ्नामसु पठितम्। किमर्थं जात:। नव्यसे नवीयसे नवतराय सुविताय सूताय प्रसूताय कर्मणे यागाय सूतरिडागम आर्ष: अभिनवं नवीयस्तस्मै ईलोप आर्ष:। सोऽग्निर्दिविस्पृशा द्युलोकस्पर्शिना बृहता ज्वालासमूहेन द्युमत्कान्तिमद्यथा तथा विभाति विविधं दीप्यते। कीदृशोऽग्नि: ? जनस्य यजमानस्य गोपा:। गोपायति रक्षतीति गोपा: क्विप् लोपोव्योर्वलि यलोप:। जागृवि: जागरणशील: कर्मणि सावधान:। सुदक्ष: शोभनो दक्ष उत्साहो यस्य अतिकुशलो वा। घृतप्रतीक: घृतं प्रतीके मखे यस्य। शुचि: शुद्ध: बहूनि हवींषि भक्षयन्नपि उच्छिष्टो न स्यात् शोधको वा॥"—इति।

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १२
त्वामग्ने अङ्गिरसोगुहाहित
१२ ३ १ २२
मन्वविन्दञ्छिश्रियाणंवनेवने।
१ २ ३ १ २ ३ १ २ ३ १२
सजायसेमथ्यमानःसहोमह
२२ ३ १ २ ३ १ २
त्वामाहुःसहसस्पुत्रमङ्गिरः॥ २ *॥

हे "अग्ने!" "अङ्गिरसः"†—एतन्नामका ऋषयः "गुहा" गुहायां "हितं" निहितं निगूढं "वनेवने" वृक्षे "शिश्रियाणम्" आश्रितम् "त्वाम्" "अन्ववविन्दन्"‡ अलभन्त। "महत्" महता "सहः" सहसा बलेन युक्तः "सः" त्वं "मथ्यमानः" "जायसे" हे "अङ्गिरः"¶ अङ्गिरसां प्रकृतिभूत! त्वां "सहसस्पुत्रम्" आहुः§॥ २॥

---

* ऋ० वे० ४, १, ३, ६ = य० वे० १५, २८।

† 'अङ्गानां रसभूताः'—इति वि०।

‡ 'अन्वविन्दन्—विद्ज्ञाने, विद्लाभे, विद्सत्तायाम्'—इति वि०।

¶ 'अङ्गिरा जाठरोऽग्निः'—इति वि०।

§ अत्र महीधरव्याख्या यथा—'हे अग्ने! अङ्गिरसः अङ्गिरोवंशोद्भवा ऋषयस्त्वा अन्वविन्दन् लेभिरे अन्विष्य प्रापुरित्यर्थः। किम्भूतं त्वां? गुहा गुहायां निगूढे प्रदेशे हितं स्थितमप्सु प्रविष्टमित्यर्थः। अग्निर्देवेभ्य उदक्रामत्सोऽप आविशदित्यादि श्रुतेः। सुपां सुलुगिति गुहाशब्दात्सप्तमीलोपः। हे अग्ने! पुनर्मह त्वां वनेवने शिश्रियाणं नानावनस्पतिषु श्रितमङ्गिरसोऽन्वविन्दन्। नित्यवीप्सयोरिति वनेपदस्य

अथ तृतीया।

३१ २३१२३१२३१ २
यज्ञस्यकेतुम्प्रथमम्पुरोहित

३१र २र ३१र २र
मग्निन्नरस्त्रिषधस्थेसमिन्धते।

१२ ३२३१३ २३२ ३
इन्द्रेणदेवैःसरथ७ंसबर्हिषि

२३ १र २र३१२र २१२
सीदन्निहोतायजथायसुक्रतुः॥ १*॥ ६

"नरः" कर्मणां नेतारः ऋत्विजः "यज्ञस्य" यागस्य "केतुं" प्रज्ञापकं "पुरोहितं" यजमानैः पुरस्कृतम् "इन्द्रेण" "देवैः" "सरथं" देवानां तेषां मान्यत्वात् समान-रथम् "अग्निं" "त्रिषधस्थे"† त्रिस्थाने विहारप्रदेशे "प्रथमं" "समिन्धते" सम्यग् दीपयन्ति। ततः "सुक्रतुः" शोभन-कर्मा "होता" देवाना-माह्वाता "सः" अग्निः "बर्हिषि" बर्हिर्युक्ते तस्मिन् स्थाने

---

स्थितम्। अयतेः शानचि बहुलं छन्दसीति शपः श्लुः द्वित्वं च। यं त्वामङ्गिरसो ऽलभन्त स त्वं जायसेऽधुनाप्यरणिभ्य उत्पद्यसे। कीदृशः? महस्वः महता बहुना सहसा बलेन मथ्यमानः। महस्वः-शब्दाभ्यां तृतीयालोपः। मथ्यमानो जायस इत्यर्थः। हे अङ्गिरः अग्ने! अतएव सहसो बलस्य पुत्रं त्वामाहुः वदन्ति मुनयः बलेन मन्थनाज्जायमानत्वाद्बलपुत्रं वदन्तीत्यर्थः॥"—इति।

* ऋ० वे० ४, १, ३, २।

† 'त्रिषधस्थे—सधस्थं स्थानमुच्यते। तृभिः स्थानैः समिन्धते—गार्हपत्य-दक्षिणाग्न्याहवनीय-प्रभृतिभिः स्थानैः समिन्धते'—इति वि०।

"यजथाय" यज्ञाय * "निषीदन्" न्यसीदत् प्रतिष्ठितो भवदिति यावत् ॥

"समिन्धते"-"समीधिरे"—इति पाठौ ॥ ३ ॥ ६

२ १ २ र २ र १

॥ कावम् ॥ जनोवा। स्यगोपाअजनायि। ष्टजागृ

१ २ १ १

वा२यिः। अग्निःसुदक्षःसुविता। यनव्यासा२यि। घृ

र र २ १ १ २ ४ ५ २

तप्रतीकोबृहता। दिविस्पृशा२३। द्युमाउद्दायिभा। ति

१ १ २ ४ २ १

भराता२३यि। भायाउःग्रुछ्५चा६५६यिः ॥(१) तुवोवा।

र २ र १ १ र

अग्न अङ्गिरसो। गहाहायिता२म। अन्वविन्दञ्छिश्रिया

२ र १ १ र र र २

णाम्। वनेवाना२यि। सजायसेमथ्यमानाः। स

र १ १ २ ४ ५ २ १ १ २

होमाहा२३त्। त्वा३माहुः। सहसास्पु२३त्। चामा

४ २ १ र

३४गा५यिरा६ ५६ः ॥(२) यज्ञोवा। स्यकेतुम्प्रथमाम्।

२ र १ २ र १ १

पुरोहायिता२म्। पुरोहायिता२म्। अग्निन्नरस्त्रिष

२ १ १ र र र

धस्थायि। समिन्धाता२यि। इन्द्रेणादेवैःसरथाम्।

---

* 'यजथाय—यजन-क्रियायाः कर्तृ णे'—इति वि०।

२ १   १ २ ४५ ५ २र १
सबर्हीयिषा२३यि । सायिदा३न्नायिचो । तायजाथा२३ ।
१ २ ४
यासू३क्रा५तू६५६:(३) ॥ १५ * ॥ [१] ६

अथ द्वितीयतृचे†—

प्रथमा ।

२ १ २   ३ १र १र
अयंवाम्मित्रावरुणासुत:सोमऋतावृधा ।
२उ ३ १ २ ३ १ २
ममेदिहश्रुतꣳहवम् ॥ १ ‡ ॥

हे "ऋतावृधा" ऋतस्य सत्यस्य यज्ञस्य वा वर्द्धकौ¶ ! "मित्रावरुणा" हे मित्रावरुणौ ! "वां" युवाभ्याम् "अयं" "सोम:" "सुत:" अभिषुत: । यस्मादेवं तस्मात् "इह" अस्मिन् यज्ञे "ममेत्" मदीयमेव§ "हवम्" आह्वानं "श्रुतं" शृणुतम् ॥ १ ॥

---

* ऊ० गा० १९प्र० १ख० १५सा० ।

† 'मैत्रावरुणमाज्यम्'—इति वि० ।

‡ ऋ० वे० २, ८, ७, ४ ।

¶ 'ऋतावृधा—ऋतो यज्ञः, तेन वर्द्धयितारौ अथवा ऋतमन्नं तेन वर्द्धेते ऋतावृधौ' —इति वि० । निघण्टौ तु ऋतमिति यज्ञनामसु ( १, १९ ), धननामसु ( २, १० ), उदकनामसु ( १, १२ ), सत्यनामसु ( ३, १० ) च दृश्यते परं नान्ननामसु ।

§ 'मम इत्—इत्-इति पद-पूरणः । इह मदीये यज्ञे'—इति वि० ।

अथ द्वितीया।

२ १ २ २ २ . ३ १२ ३२ ३ २
राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे।
३ १ २
सहस्रस्थूण आशाते॥२ *॥

"राजानौ" ईश्वरौ दीप्यमानौ वा "अनभिद्रुहा" †
अनभिद्रोग्धारौ यौ मित्रावरुणौ "ध्रुवे" स्थिरे "उत्तमे" उत्कृष्टे
"सहस्रस्थूणे"‡ "सदसि"¶ स्थाने "आशाते" उपविशतः
[तावागच्छतामिति शेषः]॥२॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १२ २३२ १२
ता सम्राजा घृतासुती आदित्या दानुनस्पती।
१ २३२ १ २
सचेते अनवह्वरम्॥ ३ §॥ ७

"सम्राजा" सम्राजौ आश्रयेव सर्वेषां शास्तारौ, "घृतासुती"
घृताशौ‖ ["तद्वां महित्वं घृतान्नावस्तु"—इति मन्त्रान्तरात्,]

* ऋ० वे० २, ८, ७, ५। "आसाते"—इति तत्र पाठः।

† 'अद्रोग्धकर्त्तारौ'—इति वि०।

‡ 'सहस्रस्थूणे—स्थूणानां सहस्र यस्मिन्'—इत्यादि वि०।

¶ 'सदोनामसमण्डपे इति यावत्।

§ ऋ० वे० २, ८, ८, १।

‖ 'घृतासुती—घृतेन आसुतिः * * * शरीरहविर्षोर्भवति * *'—इति वि०।

"आदित्या" अदितेः पुत्रौ, "दाशुषपत्नी" 'दाशुषः' यजमानस्य देवस्य वा 'पत्नी' स्वामिनौ,* "ता" तौ मित्रावरुणौ "अन-वह्वरम्" अकुटिलं यजमानं† "सचेते" हविर्भक्षणार्थं सेवेते ॥ २ ॥ ७

अथ तृतीय तृचः‡—प्रथमा।

१ १ ३ २ ३ १ २ २ १र २र
इन्द्रोदधीचोअस्थभिर्वृत्राण्यप्रतिष्कुतः।
३ १ २ ३ १र २र
जघाननवतीर्नव ¶ ॥ १ § ॥

[अथ शाट्यायनिन इतिहासमाचक्षते—"आथर्वणस्य दधीचो जीवतो दर्शनेन असुराः पराबभूवुः। अथ तस्मिन् स्वर्गते सति असुरैः पूर्णा पृथिव्यभवत्। अथेन्द्रस्तैरसुरैः सह योद्धुमशक्नुवं-स्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव। अथ पप्रच्छ तत्र-त्यान्—'नेह किमस्य किञ्चित् परिशिष्टमङ्गमस्ति?'—इति; तस्मा अवोचन्—'अस्त्येतदाश्वं शीर्षं, येन शिरसा अश्विभ्यां मधुविद्यां प्राब्रवीत्, तत्तु न विद्मः यत्राभवत्'—इति। पुन-

* 'दाशुषस्पत्नी—दान-कर्तृ यजमानाय'—इति वि०।

† 'अनवह्वरं—यज्ञम्'—इति वि०।

‡ 'ऐन्द्रमाख्यम्'—इति वि०। ¶ "नवतीर्नवा"—इति क० पु० पाठः।

§ ऋ० आ० १, १, ४, ५ (१भा० ३९९ पृ०) = ऋ० वे० १, ९, ७, २।

रिन्द्रोऽब्रवीत्—'तदन्विच्छत'—इति । तद्धाश्वशिरस्तच्छर्यणा-वत्यनुविविदुः । शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते । तस्य शिरसोऽस्थिभिरिन्द्रोऽसुरान् जघान"—इति ॥] "अप्रतिष्कुतः" परैरप्रतिशब्दितः प्रतिकूल-शब्द-रहितः इन्द्रः आथर्वणस्य "दधीचः"—एतन्नामकस्य ऋषेः "अस्थभिः" पार्श्व-शिरः-सम्बन्धिभिरस्थिभिः "नवतीर्नव" नवसङ्ख्याका नवतीः दशोत्तरा अष्टशतसङ्ख्याकाः (८१०) [ तथाहि — लोकत्रयवर्त्तिनो देवान् जेतु मादावासुरी माया त्रिधा सम्पद्यते ; त्रिविधा सा अतीतानागतवर्त्तमान-काल भेदेन तत्काल-वर्त्तिनो जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति—एवं नव सम्पद्यन्ते ; पुनरपि उत्साहादि-शक्ति-त्रय-रूपेण त्रैगुण्ये सति सप्तविंशतिः सम्पद्यते ; पुनः सात्विकादि-गुणत्रयभेदेन त्रैगुण्ये सति एकोत्तरा अशीतिः सम्पद्यते ;—एवं चतुर्भिस्त्रिकैर्गुणि-ताया मायाया दशसु दिक्षु प्रत्येकमवस्थाने सति नवनवतयः सम्पद्यन्ते । एवंविधमायारूपाणि ] "वृत्राणि" आवरकाण्यसुर-जातानि "जघान" हतवान् ] दधीचः—दधि अञ्चतीति दध्यङ्, अञ्चतेः ऋत्विगित्यादिना ( ३, २, ५९ ) क्विन्, अनिदिता-मिति ( ६, ४, २४ ) न-लोपः, षष्ठ्येकवचने "अचः ( ६, ४ १३८ )"—इत्यकारलोपे चाविति ( ६, ३, १३८ ) दीर्घत्वम्, उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्व-विधानेन तद्बाध्यते ।

ऽक्षभिः—"छन्दस्यपि दृश्यते (७, १, ७६)" —इति श्रम-आदावपि अस्थि-शब्दस्यानङादेशः मध्योदात्तः] ॥ १ ॥

अथ द्वितीया।

२१ २र३२उ ३ १२३ १२
इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम्।

१२ ३१ २
तद्विदच्छर्यणावति ॥ २ * ॥

"पर्वतेषु" पर्ववत्सु गिरिषु अपश्रितम् अप गत्य स्थितम् "अश्वस्य" अश्व-सम्बन्धिनो दधीचः "यत्" "शिरः" "इच्छन्" इन्द्रो वर्त्तते, "शर्यणावति" एतन्नाम्नके सरसि† "तत्" शिरः "विदत्" अज्ञासीत्। 'ज्ञात्वा, तदाहृत्य, तदीयैः अस्थिभिः वृत्राणि जघान'—इति पूर्वस्यामृचि सम्बन्धः॥ इच्छन्—इषु इच्छायां तुदादित्वाच्छप्रत्ययः। विदत्— वेत्तेर्लुङि व्यत्ययेन च्लेरङादेशः। शर्यणावति—शर्यणा नामानो देशास्तेषामदूर-भवः सरः शर्यणावत्; मध्वादिषु शर्यणाशब्दस्य पाठात् "मध्वादिभ्यश्च (४, २, ८६)"—इति चातुरर्थिको मतुप्, "सञ्ज्ञायाम् (८, २, ११)"—इति मतुपो वत्वम्, मतौ बह्वचोऽनजिरादीनाम् (६, ३, ११९)"—इति दीर्घः॥ २॥

---

* ऋ० वे० १, ९, ७, ४।

† 'शर्यणावति—यज्ञे कर्मवति'—इति वि०।

अथ तृतीया ।

२उ ३ १ २ ३ २ ३ १ २ ३क २र
अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।
२ ३ ३ १ २ ३ २
इत्था चन्द्रमसो गृहे ॥ ३ * ॥ ८

"अत्राह" अस्मिन्नेव "गोः" गन्तुः "चन्द्रमसः" "गृहे" मण्डले "त्वष्टुः" दीप्तस्य आदित्यस्य सम्बन्धि "अपीच्यं" रात्रावन्तर्हितं स्वकीयं यत् "नाम" तदादित्यरश्मयः "इत्था" इत्थमनेन प्रकारेण "अमन्वत" अजानन् [ उदकमये स्वच्छे चन्द्रविम्बे सूर्य-किरणाः प्रतिफलन्ति, तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं सञ्ज्ञां लभन्ते तादृशीं चन्द्रेऽपि वर्त्तमानां लभन्त इत्यर्थः । एतदुक्तम्भवति—यद्रात्रावन्तर्हितं सौरं तेजस्तच्चन्द्र-मण्डलं प्रविश्य अह्नीव नैशं तमो निवार्य सर्वं प्रकाशयति ; ईदृगभूत-तेजसा युक्तः सूर्यश्चेन्द्र एव, द्वादशस्वादित्येषु इन्द्रस्यापि परिगणितत्वात् । अतोऽहोरात्रयोः प्रकाशक इन्द्र एवेति इन्द्र-स्तुतेः प्रतीयमानत्वादिन्द्रोदेवतेत्येतदुपपन्नं भवति । अत्र निरुक्तम्—'अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपे-क्षितव्यमादित्यतोऽस्य दीप्तिर्भवतीति ; 'सुषुम्णः सूर्यरश्मि-श्चन्द्रमा गन्धर्वः'—इत्यपि निगमो भवति ; सोऽपि गौरुच्यते—

---

* छ० आ० २, २, १, २ (१भा० ३८२ पृ०) = ऋ० वे० १, ८, ७, ५ ।

"अत्राह गोरमन्वत"—इति (२, ६, )। "अत्रा ह गोः सममं-सतादित्यरश्मयः स्वनामापीच्यमपगतमपचितमपिहितमन्तर्हितं वा (४, २५)"—इति॥ अमन्वत—'मनु अवबोधने (त०, आ०)। अपीच्यम्—अपपूर्वाच्चिनाते र्निपातनाद् यत्, अतएवा-भिमतरूपसिद्धिः; यद्वा अपिपूर्वादञ्चतेः "ऋत्विग् (३, २, ५९)"—इत्यादिना क्विन्, "अनिदिताम् (६, ४, २४)"—इति न-लोपः, अपिगते निर्गते भवमपीच्यम् "भवे छन्दसि (४, ४, ११०)"—इति यत्, "अचः (६, ४, १३८)"—इत्य-कारलोपे "चौ (६, ३, १३८)"—इति दीर्घत्वम्; 'अपीच्यो प्रकाशः'—इति भट्टभास्करमिश्रः। इत्था—इदम्-शब्दात् "था हेतौ च छन्दसि (५, ३, २६)"—इति प्रकारवचने था-प्रत्ययः; यदि तत्रेदं-शब्दोनानुवर्त्तते तदानीम् "इदमस्थमुः (५, ३, २४)"—इति थमुः प्रत्ययः; "अव्ययादाप्-सुपः (२, ४, ८२)"—इति सुब्लुकं बाधित्वा "सुपां सु-लुक् (७, १, ३९)"—इत्यादिना डादेशः। चन्द्रमसः—चन्द्रमाह्लादनं मिमीते निर्मिमीते—इति चन्द्रमाः "चन्द्रेमोडित् (उ०, ४, २२७)"—इत्यसि-प्रत्ययः; दासीभारादिषु पठितत्वात् पूर्व-पदप्रकृतिस्वरत्वम्; पूर्वपदस्य "स्फायितञ्चि ( , , )"—इत्या-दिना रक्-प्रत्ययान्तत्वादन्तोदात्तम्॥ २॥ ८

अथ चतुर्थर्चे—प्रथमा ।

१ १ २ १ १  १ २ १ २  ३ १ २
इयंवामस्यमन्मनइन्द्राग्नीपूर्व्यस्तुतिः ।

३ २ ३ १ २
अभ्राद्वृष्टिरिवाजनि ॥ १ * ॥

हे "इन्द्राग्नी! "इयं" "पूर्व्यस्तुतिः" पूर्व्या स्तुतिः मुख्या स्तुतिः†, कस्य सम्बन्धिनी? "मन्मनः"‡ स्तोतुः मत्तः वसिष्ठात् "वां" युवाभ्यां युवयोरर्थम् "अभ्रात्" मेघात् "वृष्टिरिव" वह्वी सती "अजनि" प्रादुर्भूता¶, तां शृणुतमित्युत्तरत्र सम्बन्धः ॥ १ ॥

अथ द्वितीया ।

२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
शृणुतञ्जरितुर्हवमिन्द्राग्नीवनतङ्गिरः ।

३ १ २ ३ १ २
ईशानापिप्यतन्धियः ॥ २ § ॥

हे "इन्द्राग्नी!" "जरितुः" स्तोतुः "हवम्" आह्वानं युवां

* ऋ० वे० ५, ६, १७, २ ।

† 'पूर्व्यस्तुतिः'—पूर्व्या प्रथमतरा स्तुतिः सर्वेषां स्तुत्यानां प्रथमतरे इन्द्राग्नी-स्तुत्यौ —इति वि० ।

‡ 'मन्मनः प्रकाशनस्य वक्तुः'—इति वि० ।

¶ 'यथा अभ्रात् वृष्टिरुत्पद्यते, तद्वदिन्द्राग्नीभ्यां सकाशात् वसु उत्पद्यते —इति वि० ।

§ ऋ० वे० ५, ६, १७, २ ।

शृणुतम्। श्रुत्वा च "गिरः" तदीयाः स्तुतीः "वनतं" सम्भजतम्। तथा "ईशाना" ईश्वरौ युवां "धियः" अनुष्ठितानि कर्माणि "पिप्यतं" तैस्तैः फलैः पूरयताम्॥ २॥

अथ तृतीया।

१ २३१ २ ३१ ३ ३१ १२
मापापत्वायनोनरेन्द्राग्नीमाभिशस्तये।
१ ३ ३ २
मानोरीरधतन्निदे॥ ३ *॥ ९

हे "नरा" नेतारौ! इन्द्राग्नी! "नः" अस्मान् "पापत्वाय"† हीनभावाय "मा रीधतम्"‡ मा वशं नयतम्, तथा "अभिशस्तये" शत्रुभिः कृतायाभिशंसनाय मा रीरधतम्, तथा "निदे"¶ निन्दकाय मा रीरधतं मा वशीकुरुतम्॥ ३॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य तृतीयः खण्डः§॥ ३॥

---

* ऋ० वे० ५, ६, १७, ३।

† 'पापत्वाय—पापबुद्धये'—इति वि०।

‡ 'मा रीधतम्—रध हिंसायाम्; मा हिंसताम्'—इति वि०।

¶ 'निदे—नितरां दीयते यस्मिन् यज्ञे निदे'—इति वि०।

§ 'उक्ता' प्रातः-सवनम्'—इति वि०।

अथ चतुर्थखण्डे* प्रथमतृचं—

प्रथमा ।

१२ २ १ २ ३ १ २ ३ १ २
पवस्व दक्षसाधनो देवेभ्यः पीतये† हरे ।
३ १ २ ३ १ २ ३ १ २
मरुद्भ्यो वायवे मदः ॥ १ ‡ ॥

हे "हरे" हरितवर्ण ! पापहर्त्तर्वा सोम ! "दक्षसाधनः" दक्षो बलं तस्य साधनो "मदः" मदकरस्त्वं "पवस्व" क्षर । किमर्थम् ? "देवेभ्यः" इन्द्रादिभ्यः "पीतये" पानाय, तथा "मरुद्भ्यः" "वायवे" च पीतये पवस्व ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ २
सन्देवैः शोभते वृषा कविर्योनावधि प्रियः ।
१ २ ३ १ २
पवमानो अदाभ्यः ॥ २ ¶ ॥

"अयं" सोमः "सं शोभते" "देवैः" सह । कीदृशः सोमः ? "वृषा" वर्षकः, "कविः" क्रान्तदर्शी, "योनौ" स्थाने स्वीये "अधि" अधिष्ठितः§ "प्रियः" प्रियोभूतः सर्वेषां [यद्वा प्रीणयिता]

---

* 'इदानीं माध्यन्दिनसवनमुच्यते'—इति वि॰ ।

† "देवेभ्यष्पीतये"—इति क॰ पु॰ पाठः ।

‡ छ॰ आ॰ ५, ९, ४, ८ ( २ भा॰ २४ पृ॰ ) = ऋ॰ वे॰ ६, ८, १५, १ ।

¶ ऋ॰ वे॰ ६, ८, १५, १ । "पवमानो अदाभ्यः"—इति स्थले "इन्द्राय देववीतम"—इति ऋ॰-पाठः ।

§ 'योनौ अधि—सप्तम्येकवचनमिदं द्वितीयैकवचने द्रष्टव्यम् । योनिम् अधि'—इति वि॰ ।

"पवमानः" क्षरन् "अदाभ्यः" केनाप्यहिंसितश्च भवति अतएव सोमः सं शोभते ॥ २ ॥

अथ तृतीया।

१२ ३२ ३२ २उ ३१ २
पवमानधियाहितोऽ३ऽभियोनिङ्कनिक्रदत्।

१२ ३१ २र
धर्मणावायुमारुहः ॥ ३ * ॥ १०

हे "पवमान" सोम! "धिया" कर्म्मणा अस्मद्‌व्यापारेण अङ्गुल्या वा † "हितः" धृतः सन् "कनिक्रदत्" शब्दं कुर्वन् "योनिं" स्थानं "द्रोणकलशं" च "अभि आरुहः" आभिमुख्येन आरोहणं कुरु प्रविशेत्यर्थः। तदेवाह—"धर्मणा" कर्म्मणा "वायुं" वायुसम्बन्धिपात्रमित्यर्थः, तदारुहः प्रविश ॥

"आरुहः" "आविश"—इति पाठौ ॥ ३ ॥ १०

१ र१ २र१र
॥ निधनकामम् ॥ पवस्वदा२क्षसाधनाः। देवेभ्यः

र र २१र ० ३र२
पीतयेहरायि। मरुद्भ्योवा। पवा२३४यि। हाहोयि।

१र १ १ १
मदाः। होयि। २। मदः। होयि। २। मदः। होयि।

* ऋ० वे० ९, ८, १५, २।

† 'धिया प्रज्ञया'—इति वि०।

२र १र २र २ १ १ १ १ १ २ २ २ १
२। औहोऔहोवा२३४५हाउ ॥(१) सन्द्रेवैःशो२भतेवृ

१ १ र र २ १ र ७
षा। कविर्योनावधिप्रियाः। पवमानाः। चदा२३४।

२र १ १ र
हाहोयि। भियाः। होयि। होयि। भिय। होयि।

२र १र २र १ १ १ १
२। भियः। होयि। २। औहोऔहोवा२३४५हाउ ॥(२)

१ र र १ २ १ र २ १
पवमाना२धियाहिताः। अभियोनिङ्कनिक्रदात्। धर्म्म

र ७ ३र २ १ र
णावा। युमा २ ३ ४। हाहोयि। रुहाः। होयि।

२र १र २र १ १ १ १
होयि। रुह। होयि। २। औहोऔहोवा २ ३ ४ ५

हाउ। वा(३) ॥ ८ * ॥ [१]

३ २ र ५
॥ सत्रासाहीयम् ॥ पवा३४। स्वदक्षसाधनः। औ

५ १रर र र १ २ २
हवा। देवेभ्यःपीतयेहा२रायि। मा२रु। औो२३वा।

१ ऽ २र १र २ १ ५ ५ २ १
यवौ३हो। वाहा३४३यि। मा२३४दो६हायि ॥(१) सन्द्रे

र र र र ५ ५ १ र र
३४। वैःशोभतेवृषा। औ६वा। कविर्योनावधिप्रा२

* ऊ० गा० १प्र० २अ० ८ सा० ।

याः । पा२वा । मा२३नाः । अदौ३हो । वाहा३४३

यि । भा२३४यो६हायि ॥(२) पवा३४ । मानधियाहि

तः । ओ६वा । अभियोनिङ्कनिक्रा२दात् । धा२र्मा ।

णा२३वा । युमौ३हो । वाहा३४३यि । ह२३४ओ६हा

यि(३) ॥ ८ * ॥ [२]

॥ त्वाष्ट्रीसाम ॥ पवस्वदा । वसा२धाना२ः । दा

यिवेभ्यःपो । तयायिहा१रा२यि । मरुद्भ्यो२३वा । यवे

मदा३१उवा२३ ॥(१) सन्देवैःशो । भता२यिवार्षा२ ।

कावियोनौ । अधायिप्रा१या२ः । पवमा२३नाः । अदा

भिया३१उवा२३ ॥(२) पवमाना । धिया२हायिता२ः ।

आभियोनिम् । कनायिक्रा१दा२त् । धर्म्मणा२३वा ।

युमारुहा३१उवा२३ । वृधे१(३) ॥ १ † ॥ [३] १०

* ऊ० गा० १५प्र० २ख० ८गा० । † ऊ० गा० १६प्र० २ख० १गा० ।

अथ प्रगाथरूपे द्वितीयसूक्ते—

प्रथमा ।

२ ३ १ २ ३ २ ३ ३ १ २
तवाहꣳसोमरारणसख्यइन्दोदिवेदिवे ।
३ १ २ ३ १ २ ३ १र २र ३ ३उ ३ १ २
पुरूणिबभ्रोनिचरन्तिमामवपरिधीꣳरतिताꣳइहि ॥ १* ॥

हे "इन्दो" स्यन्दमान-सोम ! "तव" "सख्ये" सखि-कर्मणि "अहं" "दिवेदिवे" अन्वहं "रारण" रमे [ रणेर्लिटि उत्तमे णलि रूपम् ]। हे "बभ्रो" बभ्रुवर्ण-सोम "पुरूणि" बहूनि रक्षांसि "मां" तव सख्ये स्थितं "नि अव चरन्ति" नीचीनं चरन्ति बाधन्ते। ये मां बाधन्ते तान् "परिधीन्" "अति इहि" अतीत्य गच्छ जहीति यावत् ॥ १ ॥

अथ द्वितीया ।

१ ३ १ २र ३ १ १ ३ १ २ ३ १ २ ३ १ २
तवाहन्नक्तमुतसोमतेदिवादुहानोबभ्रऊधनि ।
३ १ २र ३ २ ३ १ २ ३ १ २ ३ १ २
घृणातपन्तमतिसूर्य्यंपरःशकुनाइवपप्तिम ॥ २ † ॥ ११

हे "बभ्रो" बभ्रुवर्ण-सोम ! "उत" अपिच "नक्तम" "उत" अपिच "दिवा" अहोरात्रयोः "सख्याय" सख्यार्थं ‡ "तव"

---

* ऋ० आ० ६, १, ९, ६ (२आ० ९१४०) = ऋ० व० ७, ५, १५, ४ ।

† ऋ० वे० ७, ५, १५, ५ ।

‡ सख्यायेति ऋग्वेदीयपाठमवलम्ब्यैतं व्याख्यान भवत: सामवेदीय-पाठस्तु "दुहान:"—इति ।

"उपनि" समीपे * "अहं" रमे—इति शेषः । "ते" वयं "दुग्धा" दीप्त्या "तपन्त" ज्वलन्त "परः" परस्तात्स्थित "सूर्य" तदात्मकं त्वाम् † "अति पप्तिम" तत्र स्थितं त्वां प्राप्तुमतिपतेम । कथमिव ? शकुनाइव यथा सुपर्णादयः पक्षिणः सूर्यमतिगच्छन्ति तद्वत् ‡ [ पत्लृगतौ, अस्माच्छान्दसो लिटि "तनिपत्योश्छन्दसि ( ६, ४, ९९ )"—इत्युपधालोपः ॥

"दुहानः"--"सख्याय"—इति पाठौ ॥ २ ॥ ११

१ २र १ २र र १र १र १र

॥ आष्टादंष्ट्रोत्तरम् ॥ तवाहꣳसोमरारणहैबाहौ ।

२ १ १ र २र १ १र

होइवा । सख्यइन्दोदिवे । दायिवे २ ३ । ऐयार३त् ।

१ र १ १र २र १ २ र १

औरइहोवा । पुरूणिबभ्रोनिचरन्तिमाम् । आवार३ ।

१र १ र १ १र १ र १

ऐया२३त् । और३होवा । परिधीꣳरतितान् । आयि

१र १ र १ १ १र

हार३यि । ऐयार३त् । और३होवा३४३ ॥(१) परिधीꣳ

२ १र २ १र १र १र २ १ १र १ र

रतिताꣳइहिऐबाहौ । होइवा । परिधीꣳरतितान् ।

---

* 'उपनि—इमापविवात् द्रोणकलशे'—इति वि० ।

† 'परःसूर्यम्—सूर्यादपि परतः'—इति वि० ।

‡ 'एतदुक्तं भवति—सख्ये वयं स्थिताः पुरूणि यजमानकुलानि ता सुपर्णरात्रः, इव सुपर्णरमाणाः शकुनाइव पप्तिम'—इति वि० ।

१ १र १ र १ १ २र १
चायिड़ा२३थि। ऐया२३त्। औ२३होवा। तवाहम्

२ १ र १र १ १र १ र
हमुतसोमते। दायिवा२३। ऐया२३त्। औ२३हो

१ र १र २ र १ १र १
वा। दुह्वानोबभ्रऊ। धानी२३। ऐया२३त्। औ२३

र १ २र १र १ १र१ १र१र ११ १ १
होवा३४३॥(२) दुह्वानोबभ्रऊधनिऐयाही। हो३वा।

र १र १र १ १र १ र २
दुह्वानोबभ्रऊ। धानी२३। ऐया२३त्। औ२३होवा।

१र २ १२१र१ १ १र १
घृणातपन्तमतिसूरियम्। पारा२३ः। ऐया२३त्। औ

र १ १र २ १ १र
२३होवा। अकुनाद्रुवप। आबिमा२३। ऐया२३त्।

१ र १ १
औ२३होवा३४३। ओ२३४५ई। डा॥ ८*॥ [१]

२र र र
॥ आभीग्रवोत्तरम्॥ तवाह३ऽसोमरारणाए। ए। स

र ऽ १ २ २ ३ ५ २ २ १
ख्यइन्दो३दायिवे१दिवायि। पू२३४ह। हा३हा। शि

र २ १ ३ ५ १ १
वधोनिचरन्तायिमा१मवा। पा२३४री। पा३ हायि।

१ १ १ ५ ४ ५ १ र
धायि३ऽरतितो२२४वा। आ५यिहो६हायि॥(१) परिधी३

* ऊ० गा० २प्र० १अ० ८गा०।

रनिताꣳइहिए। ए। परिधीꣳराउतायिताउꣳइहायि।
ता२३४वा। हा३हायि। अद्दनक्तमुतसोमातेउदिवा।
दू२३४हा। हा३हायि। नोबभ्रओ२३४वा। धा५नोई
हायि॥(२) दुहानोबभ्रऊधनिए। ए। दुहानोबा३भ्राऊ१
धनायि। घा२३४र्णा। हा ३ हा। तपन्तमतिसूराय
भ्यारः। शा२३४क। हा३हायि। नायिवपो२३४वा।
ग्ना५यिमोइहायि(३)॥ १० *॥ [२]

॥ स्वःपृष्ठम्† ॥ तवा२हꣳसो३४। औहो५मरारणा।
सख्या२इन्दो३४। औहो५दिवेदिवायि। पुरू२णिबा३
४औहो५भ्रोनिचरा। ओ। ता२यिमा२३४औहोवा। आ
२३४वा। ऊ२३४पा। ऊ२३४पा। परिधीꣳरा २ ३।
ता२यिताꣳ२३४औहोवा। ई२३४ही॥(१) परा२यिधीꣳ

* क० ग्रा० ३प्र० २ष० १०सा०। † "पृष्ठम"—इति वि०।

राइ४ । औहोऽ५तिताऽइहायि । परा२यिधीऽरा३४ ।
औहोऽ५तिताऽइहायि । नवा२हम्रा३४ । औहोऽ५क्रामु
नमो । औ । मा२ता२३४औहोवा । दौ२३४वा । ऊ
२३४पा । ऊ२३४पा । दुहानोवा२३ । भा२ऊ२३४औ
होवा । धा२३४नी ॥(२) दुहा२नोवा३४ । औहोऽ५भ्र
ऊधनायि । दुहा२नोवा३४ । औहोऽ५भ्रऊधनायि । घृ
णा२तपा३४ । औहोऽ५न्तमतिसू । औ । रा२या२३४
औहोवा । पा२३४राः । ऊ२३४पा । ऊ२३४पा । अकु
नाआ२ ३ यि । वा २ पा २ ३ ४ औहोवा । मी २ ३ ४ .
मा(३) ॥ ११ * ॥ [३]

॥ अभीवर्त्तम् ॥ परा३यिधा३यिऽराऽतिताऽइहोवा ।
परिधीऽर । तिताऽआ१यिहा२यि । तावाहम्रा३१२३४ ।

---

* ऊ० गा० १प्र० १ख० ११गा० ।

क्रामुतसो । मतायिदा१यिवा २ । दुहानो१वा२ । अज
३ । धा२३४५ । ना२३४यि २) ॥ १८* ॥ [४]

॥ उत्सेधम् ॥ तवाह ऽसोमरारण । सख्ये । इन्दा
३४औहोवा । दिवेदिवाऽ२यि । हा३१उवा२३ । ऊ३
४ पा । पुरू ३ णिबा । औहोवाहायि । भ्रोनिचरा ।
न्निमामाव । हा३१उवा२३ । ऊ३४पा । परा३यिधी ऽ
र । औहोवाहायि । तिता३ऽआपुयिहा६५६यि ॥(२)
परिधी ऽरतिता ऽइहि । परि । धी ऽरा ३ ४ औहोवा ।
तिता ऽइहाऽ२यि । हा३१उवा२३ । ऊ३४पा । नवा३
हन्ना । औहोवाहायि । क्रामुतसो । मतेदायिवा ।
हा३१उवा२३ । ऊ३४पा । दुहा३नोव । औहोवाहायि ।
अज३धापुना६५६यि ॥(२) दुहानावअजधनि । दुहा ।

* ऊ० गा० ८प्र० १ख० १८सा० ।

१र २ १र ४र ५ १ १र २
ओवा३४औहोवा। अजधनाऽ२यि। हा३१उवा२३। ज
५ २ २ ४ ५र ४ ५ १ २ १
३४पा। घृणा२तपा। औहोवाहायि। तामतिसू।
२ १ १ २ ५ १ २ ४र
रियंपार। हा३१उवा२३। ज३४पा। मकूरूना४।
५र ४ ५ २ २ ४ ३ १ १ २ १
औहोवाहायि। वपा३प्रा५यिमा६५६। ज२३४५(३)॥

॥ १० * ॥ [५]

५ २ ४ ५ ४र ५ २
॥ जनित्राद्यम् ॥ परिधा३यिॡरातिता ॡइहायि। ऊ
१ १ र २ १ र
वेहो२यि। परिधीॡरतिताॡआ१यिहा२यि। नवाहम
१ २ ५ १ १ १ र
क्रमुतसो२। मतायिदा२३४यिवा। दुहा३होयि। नो
२ १ १ १र २ ४र र २ १ १ १
वा३हो। अज। धा२ना२३४औहोवा। जनित्रा२३
१ १
२३४५म्(२) ॥ १४ † ॥ [६]

१ २र १ २र १र २ १ २
॥ समन्तम् ॥ तवाहॡसोमरा२रणा। सख्यइन्दोऽदि
१र १ र २ १ १ १
वेदिवायि। पुरूणा२३यिवा। ओनिचर। तिमामा

* ऊ० गा० ६प्र० १ख० १८सा०। † ऊ० गा० ६प्र० २ख० १४सा०।

२ ३र १ ३र २ १ १
वा । औहो३४वाहायि । प । राविधा२३वि॒रा३ ।

१ २ २ १र २ १ १र
होवा३हायि । तिता॒आर२३यिहा३४३यि ॥(१) परिधी॒

२ १र २ १ र २ १र र
रतिता॒इहायि । परिधी॒राऽतिता॒इहायि । तवा

२ १ २ र १ १ ३र २
हा२३आ । क्षामुतसो । मतायिदायिवा । औहो३४

३र २ १ २ १ २ २ १र
वाहायि । दु । हानो२३वा३ । होवा३हा । अऊधा

२ २ र १र २ १र १ १ र र
२३ना३४३यि ॥(२) दुहानोवअऊधनायि । दुहानोवाऽ

२ १र र २ १ २र १
अऊधनायि । घृणाता२३पा । तामतिद्ध । रियाम्या

२ ३र २ ३र २ १ २ १
रा । औहो३४वाहायि । प्र । कूना२३आ३यि । हो

२ २ १ २ १
वा३हायि । वपप्रा२३यिमा३४३ । ओ२३४५ई । ओ२३

४५ई । डा(३) ॥ १ * ॥ [७]

७ २ २ ४ऽ ५ २
॥ यौधाजयम् ॥ तवा३१ । हा३॒सो । म । रा

३ ५ १ २ १ ३ २
रा२३४णा । साख्या३यि । इन्द्रो२ । दिवा ३ ४ ५ यि ।

---

* ऊ० गा० १३प्र० २अ० १मा० ।

२ ५ २ १ २ १ २र १ ३ २
दी२३४वे । पुरुणिवा । ओ । निचरा२ । तिमा३४५म् ।

२ ५ २ १ ३ २
आ२३४वा । परा२यि । धायि॒रा२ । तिता॒३४५ ।

२ ५ २ २ २ ४ ५ ?
दू२३४ही ॥(१) परा३१यि । धा३यि॒र । ति । तुरां॒

२ ५ १ ? १र ३ ३
पा२३४यिहायि । पारी३ । धी॒रा२ । तिता॒३४५ ।

३ ५ २ १ २ १ २ १ ३ २
ई२३४ही । तवाहन्ना । त्क्षम् । उतसो२ । मता३४

३ ५ ? १र ३ २
५यि । दी२३४वा । दुहा२ । नोबा२ । भज३४५ ।

२ ५ ३ २ २ ४ ५र २ ३
धा२३४नी ॥(२) दुवा३१ । नो३व । ओ । ऊधा२३४

५ १ २ १र ३ २ ३ ५
नायि । दूहा३ । नोबा२ । भज३४५ । धा२३४नी ।

२ १ २ १ २ १ ३ २ ३
घृणातपा । तम् । अतिसू२ । रिया३४५म् । पा२३

५ ? १ ३ २ ३
४राः । शकू२ । ना आ२यि । वपा३४५ । प्री२३४

५
मा(३) ॥ २ * ॥ [८]

५ र १ ४र ५ ४र ५ १
॥ पौरुहन्मनम् ॥ तवाहा३॒सोमरारणा । साख्य

* ऊ० गा० १२प्र० २ख० २सा० ।

इन्द्रो । दिवायिदा१यिवा२यि । दायिवा२यिपूव्यि
व । ओ । निचरा३ । निचरा३ । तायिमामा२३४वा ।
पारिधीऌरा । तायिताऌआ२३४यिहायि । तिताऌ५इ
हायि ॥(१) परिधा३यिऌरातिताऌइहायि । पारिधीऌ
रातिताऌआ१यिहा२यि । आयिहा२यि । तावाहम् ।
काम् । उतसो३ । उतसो३ । मातायिदा२३४यिवा ।
दूहानोवा । आऊधा२३४नायि । अऊ५ धनायि ॥(२)
दुहानो३वअऊधनायि । दूहानोव । अऊ१ा१ना२यि ।
धाना२यि । घार्णातप । नाम । अतिसू३ । अतिसू
३ । रायम्पा२३४राः । शाकुनाआयि । वापप्ता२३४यि
मा । वपा५प्तिमा । हो५ई । डा(३) ॥ १५ * ॥ [९]
॥ दैगतम् ॥ तवाहा३ऌसोमरारणा । साख्यइन्दो ।

० ऊ० गा० १६प्र० १ख० १५सा० ।

इवायिदा१यिवा२यि। पुरू३। औ३हो३वा। विव
श्वोनिमरत्नायिमा१मवा२। परा२३यि। धा२यि८रा२
३४औहोवा। ए३। तिता२३४हा२३४५यि ॥(१) भुरि
धा३यि८रा२ तिता२३हायि। पारिधी२र। तिता१२आ
१यिद्वा२यि। तवा३। औ३हो३वा। यदन्नममुतसो
मातेदिवा२। दुहा२३। नो२वा२३४औहोवा। ए३।
अज२धना२३४५यि ॥(२) दुहानो३वम्रजधनायि। दू
हानोव। अजधा१ना२यि। घृणा३। औ३हो ३वा।
तपन्तमति सूरायम्पारा२:। अकू२३। ना२भा२३४औ
होवा। ए३। वपा२न्निमा२३४५(३) ॥ १६ * ॥ [१०]

॥ गौङ्गवम् ॥ तवाद्धा२३मोमरारणा। साख्या२
यि। इन्दोदिवे३। दायिवायि। पुरूणिवभ्रोनिचार३

* ऊ० गा० १६प्र० २ख० १६गा०।

१ २२ २ ५ २१र र २२ ४
रा२। तिमा३मावा। पुहुणिवभ्रोनिचर। तिमा३मा

५ १ १र १ २ २ १ ५
वा। पारिधोन्। आ। औ३हो। तितो२३४वा।

४ ५ ५ ४ ५ ५ ४र ५
आ५यिहोई३हायि॥(१) परिधा३यि७रातिता७इहायि।

१ १र २२ ४ ५ २१प
पारी२। धो७रतिता३७। आयिहायि। तवाहम

१ ३२ ४ ५ २१र र
क्रमुता२३सो२। मता३यिदायिवा। तवाहमक्रमुतसो।

२१ ४ ५ १र १ १ २ २ १
मता३यिदायिवा। दूहानः। वा। औ३हो। अओ

५ ५ ५ ५र २ ४५४र ५
२३४वा। धा५नोई३हायि॥(२) दुहानो३वभ्रऊधनायि।

१ १र ३ १ ४ ५ २१र
दूहा२। नोवभ्रऊ३। धानायि। घृणातपन्तमता२३

१ २२ ४ ५ २१र र २२ ४५
यिमू२। रिया३पाराः। घृणातपन्तिमू। रिया३पाराः।

१ २र १ २ २ १ ५ ४
शाकुनाः। आ। औ३हो। वपो२३४वा। प्रा५यिमो

५
ई३हायि(३)॥ १७॥ [११]

---

* ऊ० गा० १९प्र० २अ० १७गा०।

॥ द्विनिधनमायास्यम् ॥ तवाहꣳसोमरारण । एइ ।

औ३होपुवाऽऽ । साख्याइयि । इन्दो२ । दिवा३४५यि ।

दा३यिवार३४५यि । पूरूणिवा । भ्रोनिचरा । तांयि

मा३त्रा । औ३होइ । त्रा२३४वा । पराश्रौ ३ हो ।

धायिꣳरार । तिताꣳ३४५ । त्रा३यिहार३४५यि ॥(१)

परिधीꣳरतिताꣳइहि । एइ । औ३होपुवाऽऽ । पारी

३ । धीꣳरार । तिनाꣳ३४५ । त्रा३यिहार३४५यिं ।

तावाहन्ना । त्कामुतसो । माता३त्रा । औ३होइ ।

दीर३४वा । दुहाश्रौ३हो । नोबा २ । भ्रज ३ ४ ५ ।

धा३ना२३४५यि ॥(२) दुहानोबभ्रऊधनि । एइ । औ३

होपुवाऽऽ । दूहा३ । नोबार । भ्रज२३४५यि । धा

णीतपा । तामतिमू । राया३त्रा । औ३होइ । पा

५ २१२ २ १ ३१ २
२३४राः। प्रकूञ्चीइद्धो। नाञ्चा२यि। वपा२३४५। प्रा
१ ११११
इयिमा२३४५(३) ॥ १८* ॥ [१२]

२१ ४र र ५ २ १ १र
॥ पृश्नि ॥ तवाहा२३ꣳसोमरारणहाउ। सख्यइन्दो
१र १ २ १२ २ १ऽ २
दिवेदिवे। पुरूणा१यिबा२३। होवा३हा। भ्रोनिचर। नि
१ २ १ २ २ १ २
मामा१वा२३। होवा३हायि। परायिधा१यिꣳरा२३।
१ २ २ १ र २ १
होवा३हायि। तायिताꣳइहि। इडा२३भा३४३। ओ
२३४५इ। डा(१) ॥ १† ॥ [१३]

१ १र१ १र र १
॥ अर्कपुष्पाद्यम् ॥ तवाहꣳसोमरारण। ऊवे२३।
२१ १र १र १र १ ११र २र १ २
सख्यइन्दोदिवेदिवे। ऊवे२३। पुरूणिबभ्रोनिचरन्ति
१र २ १ २ १र २१र २ १
मामव। ऊवे२३। परिधीꣳरनिताꣳइहि। ऊवे२३ ॥(१)
२ १र २१र २ १ २ १र २१र २
परिधीꣳरतिताꣳइहि। ऊवे२३। परिधीꣳरनिताꣳइ
१ १२र१ २१र १र १ १र १
हि। ऊवे२३। तवाहन्नक्तमुतसोमतेदिवा। ऊवे२३।

* ऊ० गा० १९प्र० २ख० १८गा०। † ऊ० गा० १९प्र० २ख० १९गा०।

दुहानोबभ्रऊधनि। ऊवेर३ ॥(२)· दुहानोबभ्रऊधनि।

ऊवेर३। दुहानोबभ्रऊधनि। ऊवेर३। घृणातपन्तमति

सूर्य्यम्पर:। ऊवेर३। शकुनाइवपप्तिम। ऊवे२३।

ऊवे२३। होवा३हा३। हा३४। औहोवा। पर्का

देवाना२म्। परमेवियो२मा२३४५न्(३) ॥ १४ * ॥[१४]

॥ वार्चद्वक्थ्यम् ॥ तवाहं सोम। रा२रणा। सख्य

इन्दोदिवेदा२३यिवा२यि। पुरू१णायिबा२। भ्रोनिचरा

२। तिमामवा। परिधा२३यिं२रा। तिता२भ्रा२३यि

हा३४३यि ॥(१) परिधी२रति। तां२इहायि। परि

धी२र्ततिता२आ२३यिहायि। तावा१हान्ना२। क्षामु

तासो२। मतेदिवा। दुहानो२३बा। भ्रऊधा२३बा

३४३यि ॥(२) दुहानोबभ्रो। ऊ२धनायि। दुहानोब

---

* क० गा० १०प्र० १ख० १४गा०।

१ १र २ १ २ १ ७
भ्रूजधा २ ३ नायि। घार्णा१तापा २। नामताथिसू २।
१ २ १ २ २
रियम्परा:। भ्रकुना२३आयि। वपप्रा२३यिमा३४३। औ
२३४५ई। डा(३)॥ १५ *॥ [१५]

२ र र र १ १ १ १र
॥ माण्डवम्॥ तवाह्ं सोमरारारणा। सख्यइन्दो
१र २र १ १ १ २ १ १
दिवेदिवे। पुरूणा१यिबा २। भ्रोनिचर। तिमामा१बा
१ २ १र ३ ५र
२। परिधार३यिॆरा। नितान्। आ२यिहा२३४औ
र २ र र १ २ १र २
होवा॥(१) परिधीॆरनिताॆआयिहायि। परिधीॆरनि
१र २ १ २ १ २र १ १
ताॆइहि। तवाहा१न्ना २। क्तामुतसो। मतायिदा
१र २ १र ३ ५र र
१यिबा २। दुहानो२३बा। भ्रूज। धा२ना२३४औहो
२ र र र १ २ र १र २ १र२
वा॥(२) दुहानोबभ्रूजधानायि। दुहानोबभ्रूजधनि।
१ १ १ २र १ १
घृणाता१पा २। नामतिसू। रियाम्पा१रा २:। भ्रकुना

---

* ऋ० गा० १प्र० १भा० १५ सा०।

२ १ ३ ५र र २ र १ २
२३आयि । वप । प्रा२यिमार३४औहोवा । विदावसू

१ १ १ १
२३४५(३) ॥ १६ * ॥ [१६] ११

अथ तृतीय-तृचे—

प्रथमा ।

३ १ २ ३ २उ ३ १ ३ १ २
पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।

२ २ ३ १ २ ३ १ २
शुम्भन्ति विप्रन्धीतिभिः ॥ १ † ॥

"पुनानः" पूयमानः "विचर्षणिः" विद्रष्टा सोमः "विश्वा" सर्वान् "मृधः" हिंसकान् शत्रून् "अभि अक्रमीत्" अतिक्रान्तवान्, तं "विप्रं" मेधाविनं "धीतिभिः" कर्मभिरभिषवादिभिः स्तुतिभिर्वा "शुम्भन्ति" दीपयन्ति अलङ्कुर्वन्ति ॥ १ ॥

अथ द्वितीया ।

१ २र ३ १ ३ २ ३ २ ३ १ २ ३ २
आ योनिमरुणो रुहद्गमदिन्द्रो वृषा सुतम ।

३ १ २र
ध्रुवे सदसि सीदतु ॥ २ ‡ ॥

अयम् "अरुणः" अरुणवर्णः सोमः "योनिं" स्थानं द्रोणकलशम् "आरुहत्" आरोहति, ततो "वृषा" कामानां वर्षकः

* ऊ० गा० २०प्र० १ख० १६ सा० ।

† ऊ० ब्रा० ६, १, १, २ (२ भा० ४४ पृ० ) = ऋ० वे० ६, ८, ३०, १ ।

‡ ऋ० वे० ६, ८, ३०, २ ।

"इन्द्रः" "सुतम्" अभिषुतं सोमं "गमद्" गच्छति, गत्वा "ध्रुवे सदसि" स्थिरे स्थाने द्युलोकाख्ये "सीदति"* निवसति ॥

"इन्द्रोवृषासुतम्"-"इन्द्रं वृषासुतः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

नूनोरयिम्महामिन्दोऽस्मभ्यꣳसोमविश्वतः ।

आपवस्वसहस्रिणम् ॥ ३ † ॥ १२

हे "सोम !" अभिषुतस्त्वं हे "इन्दो !" "नः" अस्मभ्यम् "नु" क्षिप्रं "महां" महान्तं "सहस्रिणम्"‡ असङ्ख्यातं "रयिं" धनं "विश्वतः" "आ पवस्व" सर्वतः परिस्रव ॥ ३ ॥ १२

॥ सत्रासाहीयम् ॥ पुना ३ ४ । नोअक्रमीदभि । ओ६वा । विश्वामृधोविचर्षा २णायिः । ऊ२भा । ता २३यिवो । प्रन्धीश्हो । वाहा३४३यि । ता२३४यिमो६ हायि ॥(१) आयो३४ । निमरुणोरुहत् । ओ६वा । गम दिन्द्रोवृषामू२ताम् । ध्रू२वे । सा२३दा । सिसी ३

* "सीदति"—इति ऋग्वेदीय पाठः, मूलपाठस्तु "सीदतु"—इति ।

† ऋ० वे० ६, ८, २०, ३ ।

‡ 'सहस्रिणं सहस्रसङ्ख्यातम्'—इति वि० ।

चो। वाहा३४३यि। दा२३४तो६हायि॥(२) नूनो३४।
३४। रयिम्महामिन्द्र। वो६वा। अस्मभ्यꣳसोमविश्वा
२ताः। आ२पा। वा२३स्वा। सहौ३हो। वा,हा३
४३यि। स्वा२३४यिणो६हायि(३)॥ १२ *॥ [१]

॥ यामम्॥ पुनानोआ२। क्रमीदा२३४भी। वि
श्वाम्मृधो२। विचर्षा२३४णायिः। प्रशुम्भतिवा२३यि। प्र
न्धा३यिता५यिभा६५६यिः॥(१) आयोनिमा२। रुणोरु
२३४हात्। गमदिन्द्रो२। वृषासू२३४ताम्। ध्रुवेस
दा२३। सिसा३यिदा५ता६५६उ॥(२) नूनोरया३यि
म्। महामा२३४यिन्दो। अस्मभ्यꣳसो२। मविश्वा२३
४ताः। आपवस्वा २ ३। सहा ३ स्वा ५ यि णा ६ ५
६ म(३)॥ ११॥ [२]

* ऊ० गा० २प्र० १ख० ११गा०। † ऊ० गा० २२प्र० १ख० ११गा०।

॥ यामोत्तरम् ॥ पुनानोअक्रमीदभि। ओहा३ओ
हा। विश्वामृधोविचर्षणिः। ओहा३ओहा। शुम्भ
ता२३यिवि। प्रन्धा३यिता५यिभा६५६यिः ॥(१) आयो
निमरुणोरुहत्। ओहा३ओहा। गमदिन्द्रोवृषासुतम्।
ओहा३ओहा। ध्रुवेसा२३दे। मिसा३यिदा५ता६५
६उ ॥(२) नूनोरयिंमहामिन्द। ओहा३ओहा। अस्म
भ्यꣳसोमविश्वतः। ओहा३ओहा। आपावा २ ३ स्व।
सहा३स्रा५यिणा६५६म् ३) ॥ १२ * ॥ [३]

॥ गौराङ्गिरसस्य साम ॥ आहायिरु३वा२३यि। उव
ए। पुनानोआ३क्रा३मीदभि। विश्वामृधो३चर्षणिः।
शुम्भतिवि। प्रन्धा३यिता५यिभा६५६यिः ॥(१) आयो
निमा३रु३णोरुहत्। गमदिन्द्रो३वा३षासुतम्। ध्रुवे

* ऋ० मा० १३प्र० २अ० १२सा०

२ १ ४ २र २ ४
सह । सिषाइयिदापूताइ३ई३उ ॥(२) नूनोरयाइयिमाइ

२र ३ ५र १ ४ १ २ ५ २र २
श्वामिन्दो । अस्मभ्यॐसोइमाइविश्वतः । श्रोचोयि । इ

१ २ ३ १ २ १ २ ४
इवार३यि । ऊवए । आपवस्व । सहाइस्राप्रियिणा.ई५

ई म्(३) ॥ १२ * ॥ [४] १२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य
चतुर्थ खण्डः† ॥ ४ ॥

---

अथ पञ्चम-खण्डे‡ प्रथमतृचे—

प्रथमा ।

२ ३ १ २ ३ १ ३ १ २ ३ १ २ ३ १ २
पिबा सोममिन्द्र मन्दतु त्वा यन्ते सुषाव हर्यश्वाद्रिः ।

१ २ ३ २ ३ १ २ ३ १ २
सोतुर्बाहुभ्याॐसुयतो नार्वा ॥ १ ¶ ॥

हे "इन्द्र !" "सोमं" "पिब", स सोमः "त्वा" त्वाम्
"मन्दतु" मादयतु, हे "हर्यश्व" हरिसंज्ञकाश्ववन् ! इन्द्र !

---

* ऊ० गा० ९२प्र० २० १२सा० ।

† 'उक्तो माध्यन्दिनः पवमानः'—इति वि० ।

‡ 'इदानीं पृष्ठान्युच्यन्ते विराजं पृष्ठं भवति । पवाग्निमन्थनम् ॥'—इतिवि० ।

¶ ऋ० आ० ५, १, १, ८ (१म० ८४ सू० ) = ० ५, ४, ५, १ ।

"ते" त्वदर्थं "सोतुः" अभिषवकर्त्तुः "बाहुभ्याम्" "अर्वा" रश्मिभ्यामश्व इव "सुयतः" सुष्ठु परिगृहीतः "अद्रिः" ग्रावा "यं" सोमं "सुषाव" अभिषवं करोषि, स मन्दत्विति पूर्वेण सम्बन्धः ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ २ ३ २ ३ १ ३ १ २ ३ १ १ ३ १ २
यस्तेमदोयुज्यश्चारुरस्तियेनवृत्राणिहर्यश्वहꣳसि ।
१२ २२
सत्वामिन्द्रप्रभूवसोममत्तु ॥ २ * ॥

हे "हर्यश्व !" "इन्द्र !" "ते" तव "युज्यः" योग्यः "चारुः" समीचीनः "मदः" मदकरः "यः" सोमः "अस्ति" विद्यते "येन" च पीतेन सोमेन "वृत्राणि" आवरकादीनि राक्षसादीनि "हंसि", हे "प्रभूवसो" प्रभूतधन इन्द्र! "त्वा" त्वां "सः" सोमः "मदतु" मादयतु ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ २ ३ १ २ ३ १ २ १ १ २ ३
बोधासुमेमघवन्वाचमेमांयान्तेवसिष्ठोअर्चतिप्रशस्तिम् ।
३ १२ २२ ३ १ २
इमाब्रह्मसधमादेजुषस्व ॥ ३ † ॥ १३

हे "मघवन्" इन्द्र! "ते" तव "प्रशस्तिं" स्तुतिरूपां "यां" वाचं "वसिष्ठः" नामर्षिः "अर्चति" वहति, "इमां" वसिष्ठस्य

---

* ऋ० वे॰ ५, ३, ५, २। † ऋ० वे॰ ५, ३, ५, ३।

सम्बन्धिनीं वाचं "सु आ बोध" सुष्ठु अभिबुध्यस्व किञ्च "इमा" इमानि "ब्रह्म" ब्रह्माणि हवींरूपाण्यन्नानि * "सधमादे" यज्ञे "जुषस्व" सेवस्व ॥ ३ ॥ १३

॥ दैर्घतमसम् ॥ हाउपिबा । सोममिन्द्र । मां । दतुत्वा । यन्तेसुषावहरिया । स्वा१द्रो२ः । स्वाद्रो२ः । सोतुर्बाहुभ्याम् । सुयता३ः । सुयताः । ना२वा२ ३ ४ औहोवा ॥(१) हाउयास्तायि । मादोयुजियः । वा । रस्ता३यि । रस्तायि । येनवृत्राणिहर्य्यश्वा । हां१ ९सा२यि । हा९सा२यि । सत्वामिन्द्रा । प्रभूवसा३ उ । भूवसा३उ । ममा२स्तू२३४औहोवा ॥(२) हाउबो धा । सूमेमघवन् । वा । चमेमा३म् । चमेमाम् । यान्तेवसिष्ठअर्चतिप्रा । शा१स्ता२यिम । शास्ता

* 'अथवा ब्रह्माणि मे विप्रलक्षणानि'—इति वि० ।

१र २ १ १ २ १
२यिम। इमाब्रह्मा। सधमादा३यि। धमादा३यिः।
१ ७ ५र र
जुषा२स्वा२३४औहोवा(३) ॥ १ * ॥ [१]

१र २ र १ २ २ १
॥ मराथम् ॥ हाउहाउहाउ। पायिबा। सोमाम्।
२ र र र १ १ १
इन्द्र। मन्दतुत्वा। त्वा। त्वा। यान्तायि। सुषा।
२ र १ २ र १ २र
वहर्य्यश्वाद्रिः। द्रिः। द्रिः। सोढुः। बाहू। श्या२
र र र र र १ २ १
सुयतोनार्वा। र्वा। र्वा ॥(१) यास्तायि। मदो। यु
२ र १ २ १
जियश्वारुरस्ति। स्ति। स्ति। यायिना। वृत्रा। णि
२ १ २ १ २र
हर्य्यश्वहꣳसि। सि। सि। सात्वाम्। इन्द्रा। भूप
र १ २ १ २ १
वसोममत्तु। तु तु ॥(२) बोधा। सुमायि। मघवन्।
१र र र र र १ २ १
वाचमेमाम्। माम्। माम्। यान्तायि। वसायि।
र २ १ २
ष्ठोअर्क्वतिप्रशस्तिम्। स्तिम्। स्तिम्। अयिमा। ब्र
१ २ १ र २र
ह्मा। सधमा। देजुषस्व। स्व। स्व(३) ॥ २ † ॥ [२] १३

* ऊ० गा० २.१प्र० १ख० १गा०। † ऊ० गा० ११प्र० १ख० १गा०

अथ द्वितीयतृचे—*प्रथमा।

२ ३ १ २   ३ १ २ ३ १ २
विश्वाःपृतनाअभिभूतरन्नरः

३ १ २ ३ २ ३ १ २ ३ १ २
सजूस्ततक्षुरिन्द्रञ्जजनुश्चराजसे।

२ ३ १ २ ३ २ ३ १ २ ३ १
क्रत्वेवरेस्थेमन्यामुरीमुतोग्र

२र ३ १ २ ३ १ २
मोजिष्ठन्तरसन्तरस्विनम्॥ १ †॥

"विश्वाः" सर्वाः व्याप्ता वा "पृतनाः" [ पृङ् व्यायामे (तु०, आ० ); व्याप्रियन्ते इति पृतनाः ] सेनाः परस्परं सङ्गताः सत्यः "अभिभूतरम्" [शत्रूणामित्यर्थः] अभिभवितारम् "इन्द्रम्" "ततक्षुः" आयुधादिभिः तीक्ष्णीचक्रुः आयुधवन्तम-श्ववन्तञ्च चक्रुरित्यर्थः [ यद्वा पृतना इति सङ्ग्राम नाम (निघ० २, १७, १८ ); व्याप्रियन्ते अत्रेति पृतनाः सङ्ग्रामाः, सर्वा-नेव सङ्ग्रामानभिभावुकमिन्द्रं "नरः" नेतारः स्तोतारः अन्योन्यं सङ्गताः स्तुतिभिः तीक्ष्णमकुर्वन्, सुतोऽतिबलवान् भवतीति। यद्वा यष्टारो हविः-प्रदानेन वीर्यवन्तं कुर्वन्तीति ] किञ्च स्तोतारः "राजसे" [ राजतेः तुमर्थे असे प्रत्ययः ( ३, ४, ९ ) ] आत्मनो विराजनार्थं प्रकाशनार्थं सूर्यात्मानमिन्द्रं "जजनुः" जनयामासुः स्तोत्र-शस्त्रैः स्व-यज्ञे प्रादुरभावयन्नि-

* 'वामदेव्यम्। मैत्रावरुणं साम। विशोकं ब्रह्मसाम'—इति वि०।

† छ० आ० ४, २, ४, १, ( १भा० ७५४पृ० ) = ऋ० वे० ६, २, २७, ५।

त्यर्थः। किञ्च "क्रत्वा" ईदृशमिन्द्रम् "आसुरीम्" यत् प्रणामाभिमुख्येन मारयितारम् "उग्रम्" उद्गूर्णबलम् अतएव "ओजिष्ठम्" ओजस्वितमं "तरसं" प्रवृद्धं "तरस्विनं" सङ्ग्रामे शत्रुवधार्थं वेगवन्तं बलवन्तं वा एवम्भूतमिन्द्रं धनार्थं स्तुवन्ति॥

'क्रत्वेवरेस्थेमनि"-"क्रत्वावरिष्ठंवरे"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १ ३ ३ १ २र ३ १
नेमिन्नमन्तिचक्षसामेषंविप्राअभिस्वरे।

३ १ २ ३ १उ ३ १ २ ३ ३ ३ १ १र
सुदीतयोवोअद्रुहोपिकर्णेतरस्विनःसमृक्वभिः॥ २ *॥

"नेमिम्" [ अरान् यथा नेमिर्व्याप्नोति तद्वदिन्द्रं सर्वं व्याप्नुते तादृशं ] नमनशीलमिन्द्रं "चक्षसा" दर्शनमात्रेणैव† "विप्राः" मेधाविनः ‡ "अभिस्वरे" ¶ अभिस्वरेण गीताय स्तोत्राय इन्द्रविषयं स्तोत्रं कर्त्तुमित्यर्थः "नमन्ति" नमस्कुर्वन्ति। कीदृशम्? "मेषम्" इन्द्रो मेषोभूत्वा मेधातिथिं स्वर्गमनयत् तस्मात् मेधातिथेर्मेषभूतमिति यावत्। इदानीं यजमानः स्तोतॄनाह—अपिच हे स्तोतारः! "सुदीतयः" शोभनदीप्तयः

---

* ऋ० वे० ६, १, २८, १।

† 'चक्षुषा दृष्टमात्रेण'—इति वि०।

‡ 'विप्राः ब्राह्मणाः'—इति वि०।

¶ 'अभिस्वरे—अभिस्वरो यज्ञस्तस्मिन् अभिस्वरे यज्ञे'—इति वि०।

"अद्रुहः" कस्याप्यद्रोग्धारः "वः" यूयं [ छान्दसो वसादेशः ] "तरस्विनः" कर्मसु स्तोत्रेषु वा त्वरायुक्ताः सन्तः इन्द्रस्य "कर्णे" श्रोत्र-समीपे "ऋक्वभिः" अर्चनयुक्तैर्मन्त्रैः * [ यद्वा ऋचो बह्व्यो येषु सन्ति तैः स्तोत्रादिभिः ] संस्तुत: इन्द्रा यथा युष्मदीयानि स्तोत्रादीनि शृणोति तथा सम्यगभिष्टुतेत्यर्थः ॥

"अभिस्वरे"-"अभिस्वरा"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २३ १ २   ३ २ ३ १ २   ३ १ २
समु रेभासो अस्वरन्निंन्द्रꣳ सोमस्य पीतये ।
२र ३ १ २ ३ २ ३ १ २ ३ १   २ ३ १ ३ १ २
स्वःपतिर्यदीवृधे धृतव्रतो ह्योजसा समूतिभिः ॥ ३ † ॥ १४

"रेभासः" [ रेभृ शब्दे ( भ्वा० आ० ) शब्दयितारः स्तोतारः [ यद्वा, "रेभासः" कश्यप-पुत्रा रेभाः एतन्नामका [illegible] ] "इन्द्रम् उ" इन्द्रमेव "समस्वरन्" ‡ सम्यगशब्दयन् [illegible]न्। किमर्थम्? "सोमस्य पीतये" सोमपानाय "यद्" [illegible]पतिः" स्वर्गस्य पालयिता धनस्य स्वामी वा इन्द्रः "वृधे" यजमानादिवर्द्धनाय भवति, तदा "धृतव्रतः" धृत-कर्मेन्द्रः

---

* 'ऋक्वभिः—ऋग्यजुःसामभिः'—इति वि० ।

† ऋ० वे० ६, १, ३८, १ । "यदीम्"—इति च ऋ०-पाठः ।

‡ 'समस्वरन्—सामभिर्गायन्ति'—इति वि० ।

"ओजसा" बलेन "ऊतिभिः" मरुद्भिः पालनैश्च वा सह सङ्गच्छते ; स्तुतिभिर्बलं मरुद्भिः पालनैश्चेन्द्रस्य भवतीत्यर्थः* ॥

"सम्"-"समीम्"—इति पाठौ, "स्वष्पतिः"-"स्वर्पतिम्"—इति च ॥ ३ ॥ १४

॥ त्रैशोकम् ॥ क्ष्वोहायि । पुतनाश्वभिभु । तरुत्तराः । सजूस्ततक्षुरायिन्द्र ञ्जजनूः । चराजासो२३४हायि । क्रत्वौहोयि । वरौहोयि । स्थेमन्या२मू२३४रीम् । उतोहायि । उग्रमो२३४जो । छन्तारा२३४साम् । होयि । तरा३४ । स्विनम् । ओ२३४वा ॥(१) नेमोहायि । नाम । तिचत्तसा । मेषंविप्राः । अभिस्वारो२३४हायि । सौहोयि । दौहोयि । तयो२वो२३४आ । इदुहोहायि । अपायिका२३४र्णं । तारखी२३४नाः । होयि । सम्३४ । कभिः । ओ२३४वा ॥(२) समोहायि ।

* अत्र 'सम् उ—इति पदपूरणः'—इति वि० ।

२　　२र३२१　　२१र　　२र१
रायिभा। सोअस्वरान्। इन्द्रꣳसोम। स्वपीतायो२३
५　　१र　　र　　३५
४वायि। सोवोयि। वौवोयि। पतार्यिय्या२३४वौ।
२१　　२१　　५　　१३　　५　२
वृधोवायि। धूतव्रा२३४ताः। हियोजा२३४सा। ‘वें
१२　　५५　　२　३
यि। समू३४। तिभिः। ओ६वा। ओयिवो२३४
५
वा (३)॥१२*॥ [१] १४

अथ प्रगाथरूपे तृतीयसूक्ते †—

प्रथमा।

१　२र　३　२उ　३१२　३१२
योराजाचर्षणीनांयातारथेभिरध्रिगुः।
१२　　३१　२र　३　र३१२३२३२
विश्वासान्तरुतापृतनानाञ्ज्येष्ठंयोवृत्रहागृणे॥ १ ‡॥

“यः” इन्द्रः “चर्षणीनां मनुष्याणां “राजा” स्वामी, “रथेभिः” रथैः “याता” आगन्ता च, “अध्रिगुः” अधृतगमनो ऽन्यैः, “विश्वासां” “पृतनानां” सेनानां “तरुता” तारकः, “यः” च “वृत्रहा” वृत्रं हतवान्, “ज्येष्ठं” गुणैर्ज्यायांसं तं महाभागमिन्द्रं “गृणे” स्तौमि॥ १॥

* ऊ० गा० १३प्र० २ख० १३सा० ।

† ‘भरद्वाजस्य पृश्निरक्षावाकं साम’—इति वि० ।

‡ छ० आ० ३, २, ४, १ ( १ भा० ५६३ पृ० ) = ऋ० वे० ६, ५, ८, १ ।

अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ १ २ ३१ १ २ १ २
इन्द्रन्तꣳशुम्भपुरुहन्मन्नवसेयस्यद्विताविधर्त्तरि ।
१ २ ३ २ ३ १ २ २ ३ २ ३ २ ३ १ २र
हस्तेनवज्रःप्रतिधायिदर्शतोमहान्देवोनसूर्य्यः ॥ २* ॥ १५

हे "पुरुहन्मन्" ऋषे ! † त्वं "तम्" "इन्द्र" "शुम्भ" ‡ हविःप्रदानादिना अलङ्कुरु । किमर्थम् ? "अवसे" रक्षणाय ¶ । एवमात्मा स्वात्मानं सम्बोध्य ब्रवीति—"यस्य" तव "विधर्त्तरि" विधारके इन्द्रे "द्विता" § द्वित्वम् अस्ति,—औग्र्यमनौग्र्यम् [तव शत्रून् हन्तुमुग्रत्व, तदनुग्रहाय अनुग्रहश्चेति द्वैतमस्ति ]; तच्चौग्र्यं दर्शयति—"दर्शतः" दर्शनीयः "महान्" प्रभूतः "वज्रः" "देवो न सूर्य्यः" द्योतमानः सूर्य इव स्थितः, "हस्तेन" करेण "प्रति धायि" प्रतिनिहितो भवति ‖ ॥

* ऋ० वे० ६, ५, ८, २ ।

† पुरुहन्मन्—पुरुहन्मा नामऋषिः अस्य तृचस्य सञ्ज्ञानं परोक्षत्वं ब्रवीति'—इति वि० ।

‡ 'शुम्भ—शुम्भं बलवन्तम्'— इति वि० ।

¶ 'स्तुहीति वाक्यशेषः'—इति वि० ।

§ 'त्रितः, द्वितः, एकतः—इति ऋषयः ; तेषां मध्ये द्विताः'—इति वि० ।

‖ 'हस्तेन वज्रः प्रतिधायि—हस्तेन गृहीत्वा वज्रः प्रति धेट् पाने सर्वप्राणिनां वीर्यं रसं शोणितादि पिबते'—इति वि० ।

"हस्तेन"-"हस्ताय"—इति पाठौ, "महान्देव"-"महोदेवः"
—इति च * ॥ २ ॥ १५

२र १ ४ र र ५ १र १र १ र
॥ पृश्नि ॥ योराजा२३चर्षणीना७हाउ। यातारथे

२ १ २ १ २ १ २ २ १,.२र.
भिरध्रिगुः। विश्वासा१न्ता२३। होवा३हायि। तृता।

१ २ १ २ २ १र २
पृतानाश्ना२३म्। होवा३हायि। ज्येष्ठांयो१वा २३।

१ २ २ १ र र १ २र १ ४
होवा३हा। त्राहागृणे। इडा२३॥(१) ज्येष्ठांयो२३वृ

र र ५ १र २ १र २ १र २र १ २
त्रहागृणेहाउ। ज्येष्ठंयोवृत्रहागृणे। इन्द्रान्ता१७भ्रू२

१ २ २ १ २ १ २ १
३। होवा३हा। भपुरुह। न्मन्नावा१मा२३यि। हो

२ २ १ २ १ २ २ १
वा३हायि। यस्यादा१यिता२३। होवा३हायि। वायि

२ १ २ १ ४र ५
धर्त्तरि। इडा २ ३॥(२) यस्यदो२३ताविधर्त्तरिहाउ।

१ २ १र १ २ २ १ २ १ २ २
यस्यद्दिताविधर्त्तरि। हस्तायिना१वा२३। होवा३हा।

१ २ र १ २ १ २ २ १
त्रः प्रतिधा। यिदाभ्रा१ता२३ः। होवा३हायि। मह्

---

* "महोदिवे"—इति च क० पाठः

१ १ २ २ १ ९ २ १
न्द्वा१यिवार३ः । ष्टोवा३चायि । नासूरियः । इडा २ ३
१ १
भा३४३ । ओ२३४५ई । डा(३) ॥ १४ * ॥ [१]

५र ४ २ ४ ५र ४ ५ १ र २
॥ अभीवर्त्तम् † ॥ योरा३जा३चर्षणीनोवा । यातार
र १ २ १ र २ २ ५ ५र
थे । भिराधा१यिगू २ः । वायिश्वासा३१२३४म् । तरुता ।
२ १ २ २र १ २ ३ २ १
पृतानाश्ना २म् । ज्येष्ठायो१वा२ । वृद्धा३ । गा२३४
२ १ १ १ ५र ४ २ ४ ५र ४ ५
५ । णा२ ३ ४ ५ यि ॥(१) ज्येष्ठा३यो३ वृत्रहागुणोवा ।
१ १र १ २ १ २
ज्यायिष्ठयोव । वृद्धा१गा१र्णा २यि । आयिन्द्रन्त९शूर३१
२ ४५ २ १ २ १ २
२३४ । भपुरुह । न्मन्नावा१सा २यि । यस्याद्वा१यिता
३ २ १ ३ १ १ १ १ ५ ४ २
२ । विधा३ । ता२३४५ । रा२३४यि ॥(२) यस्या३द्वा३यि
४ ५ ४ ५ १ २ र १ २ १
ताविधर्त्तरोवा । यास्यद्विता । विधार्त्ता१रा २यि । द्वा
र २ २ ४ ५र २ १ २ १
स्तेनवा३१२३४ । ज्ञःप्रतिधा । यिन्द्रार्णा१ता २ः । मह्ना

* ऊ० गा० २प्र० १अ० १४सा० । † "अभीवर्त्तः"—इति ख० पु० पाठः ।

न्दा१श्विवा२ः । नमू३ । रा२३४५ । या२३४५ः (३)

॥ ७ * ॥ [२]

॥ जनित्राद्यम ॥ योराजा३चर्षणायिनाम । ऊवे

हो२यि । याता२थेभिराधा१यिगू२ः । विश्वासान्तरू

ता२ । पृतना२३४नाम् । ज्ये ष्ठा३ऽहोयि । योवा३

ऽहोयि । योवा३हो । ऽहा । गा२र्णा २ ३ ४ औहो

वा ॥(१) ज्ये ष्ठं यो ३ वृत्रहागृणायि । ऊवेहो२यि ।

ज्ये ष्ठं योवृत्रहागा १ र्णा२यि । इन्द्रन्तऽप्राभ्रपुरुहा२ ।

ऽमन्नावा२३४सायि । यस्या ३ होयि । द्विता ३ होयि ।

विध । ता२रा२३४औहोवा ॥(२) यस्यद्वी३ताविधर्त्तरा

यि । ऊवेहो२यि । यस्यद्विताविधार्त्ता१रा२यि । हस्ते

नवज्रःप्रतिधा२ । यिदा३र्शा२३४ताः । महा३ऽहोयि ।

* ऊ० गा० ७प्र० ९ख० ७सा० ।

२ २ १ १ २ १ र १ ५ र र १ १ १
देवा३इो। नम्। रा२यो२३४औहोवा ॥(३) जनिबा२

१ १
४५म् ॥ १३ * ॥ [३] १५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य

पञ्चमः खण्डः † ॥ ५ ॥

---

अथ षष्ठे खण्डे ‡, प्रथमतृचेण—

प्रथमा।

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ २
परिप्रियादिवःकविर्वयांसिनप्त्योर्हितः।

३ १ २ ३ १ २
स्वानैर्यातिकविक्रतुः ॥ १ § ॥

"कविः" मेधावी "कविक्रतुः" क्रान्त-प्रज्ञः क्रान्त-कर्मा "नप्त्योः" अधिषवणफलकयोः "हितः" निहितः सोमः "दिवः" द्युलोकस्य "परि प्रिया" अति प्रियाणि "वयांसि" यावणः ॥

"स्वानैः"-"सुवानः"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १८प्र० २ख० १३सा०। † 'उक्तं माध्यन्दिनं सवनम्'—इति वि०।

‡ 'इदानीमार्भवमुच्यते'—इति वि०। ¶ 'चौर्णायवं साम'—इति वि०।

§ छ० आ० ५, २, ४, १० (२भा० २९) = ऋ० वे० ६, ७, ३२, १।

अथ द्वितीया।

१ २ २ ३ २ ३ १ २ ३ १ २ १ २
स सूनुर्मातरा शुचिर्जातो जाते अरोचयत्।
३ १ ३ १ २ ३ १ २
महान्मही ऋतावृधा॥ २ *॥

"जातः" उत्पन्नः "शुचिः" † विशुद्धः महान् हविष्कत्मः "सः" सोमाख्यः "सूनुः" पुत्रः "मही" महत्यौ "ऋतावृधा" ‡ यज्ञस्य वर्द्धयित्रौ "जाते" विश्वस्य जनयित्रौ "मातरा" आत्मनो मातरौ द्यावापृथिव्यौ "अरोचयत्" रोचयति दीपयति॥ २॥

अथ तृतीया।

२ ३१ २ ३१ २ ३ १ २ ३ १ २ ३ १ २
प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः।
२क २र ३ १ २
वीत्यर्ष पनिष्टये॥ ३ ¶॥ १६

हे सोम! "प्र प्र" अत्यन्तं "क्षयाय" तव निवास-भूताय-"अद्रुहः" अद्रुहे अद्रोग्धे "पन्यसे" स्तोत्रे "जनाय" मनुष्याय

---

* ऋ० वे० ६, ७, ३२, २।    † 'शुचिः दीप्तः'—इति वि०।

‡ 'ऋतावृधा—ऋतो यज्ञः तेन वर्द्धतः ऋतावृधौ अथवा ऋतमन्नं तेन वर्द्धते'-इति वि०।    ¶ ऋ० वे० ६, ७, ३२, २।

"वोति" वीत्यै भक्षणाय "जुष्टः" पर्याप्तः त्वं "पनिष्ठये"* स्तुतवे "अर्षं" अङ्गं प्रति गच्छ ॥

"अद्रुहः"-"अद्रुहे"—इति पाठौ, "पनिष्टये"-"चनिष्ठया"—इति च ॥ ३ ॥ १६

॥ औशर्णयवोत्तरम् ॥ परिप्रिया२दिवःकवायिः । वया२हो१वा ऽसिनप्रोवोर्हिताः । स्वानैर्या२३ती । ऊवा । हाोवा । हाोवा । ऊवा२यि । ई३र्या । कविक्रतो२ । या२३४औहोवा ॥(१) समूनुम्मा२तराप्नुचायिः । जाता२हो१वाजातेअरोवोचयात् । महान्मा२३हौ । ऊवा । हाोवा । २ । ऊवा२यि । ई३र्या । ऋतावृधो२ । या२३४औहोवा ॥(२) प्रप्रक्षया२यपन्यमायि । जना२हो१वायजुष्टोवोअद्रुहः । वीतिया२३र्षा । ऊवा । हाोवा ।

---

* 'पनतिः स्तुतिकर्म्मा ( निघ० ३, १४, १६ ),—इति वि०

२। ऊवा२यि। ई३र्या। पनिष्टयोर। या२३४औहो

वा। ई३या२३४५म्(३) ॥ १५ * ॥ [१]

॥ और्णायवाद्यम् ॥ परिप्रियादिवःकावीः। वयांऽ

सिनप्त्रोर्हिताः। स्वानैर्या२३ती। आया२। इया

२ई३या। कविक्रतोर। या२३४औहोवा ॥(१) ससुनु

र्मातराशुचीः। जातोजातेअरोचयात्। महान्मा २ ३

हो। आया२। इया २ई३या। ऋतावृधोर। या२

३४औहोवा ॥(२) प्रप्रक्षयायपन्यासायि। जनायजुष्टो

अद्रुहाः। वीतियार३र्षा। आया२। इया२ई३र्या।

पनिष्टयोर। या२३४औहोवा। ई२३४५(३) ॥८ † ॥[२]

॥ वृहद्भारद्वाजम् ॥ परिप्रिया। दिवःकवायिः।

वयाऽसा२३यिना। प्रियोर्हिताः। स्वानैर्या२३तायि।

* ऊ० गा० २प्र० २अ० १५सा०। † ऊ० गा० १प्र० २अ० ८सा०।

आ। औ३होवा। काविक्रतुः। इडा२३॥(१) ससूनुर्मा। नराघ्नुचाविः। जातोजा२३ते। चरोचयात्। मथान्मा२३ही। आ। औ३होवा। आर्त्तावृध। इडा२३॥(२) प्रप्रश्नया। यपन्यसायि। जनाया२३जू। ष्टो अद्भुहाः। वीतिया२३र्षा। आ। औ३होवा। पानिष्ट्ये। इडा२३भा३४३। ओ२३४५ई। डा(३)॥ १० * ॥[३]

॥ गौषूक्तम् ॥ परिप्रियादिवौ। वौहोवाहायि। कवायिः। वयाꣳसिनप्रियौ२। ऊवायि। ऊवा२यि। हायिता२ः। स्वानैर्य्यातिकवौ२। ऊवायि। ऊवा२यि। क्रातु२३ः। होऽ२वा२३४औहोवा। अग्निराऊता२३४५ः(१)॥ ११ † ॥[४]

॥ ईनिधनम्गागोयवम् ॥ परिप्रियादिवःकवा३यिरे।

* क० गा० १५प्र० २ग्र० १०सा०। † क० गा० १६प्र० १ग्र० ११सा०।

१ र र र र २
वयाᳪसिनप्रयोहिता:। स्वानैर्य्या२३तायि। ऐ२हो१आ

२ १ ३ ४र र १र
२३यिही। कवि। क्रा२स्ता२३४औहोवा॥(१) ससूनु

र र २ १ र रर र र
र्म्मातराशुचा३ए। जातोजातेअरोचयात्। महान्मा२३

२ २ १र ३ ४र र
ही। ऐ२हो१आ२३यिही। ऋता। वा२र्ता२३४औहो-

२ र २ १र र
वा॥(१) प्रप्रक्षयायपन्यसा ३ ए। जनायजुष्टोअद्रुहा:।

र २ २ १ ३
वीतिया२३र्षा। ऐ२हो१आ२३यिही। पनि। ष्टा२या

४र र ३११११
२३४औहोवा। ई२३४५(३)॥ १७ *॥ [५] १६

अथ प्रगाथे द्वितीयसूक्ते †—

प्रथमा।

२ ऽ १२३१२ ३१२ ३१२
त्वᳪह्या३ङ्गदैव्यपवमानजनिमानिद्युमत्तमः।

३ १२ ३ १२
अमृतत्वायघोषयन्॥ १ ‡॥

हे "पवमान" पूयमान! "दैव्य" देवसम्बन्धि सोम! "द्युम-

---

* ऊ० गा० २०प्र० १ख० १७सा०।

† 'वामदेव्यं बृहत्कं साम'—इति वि०।

‡ छ० आ० ६, २, ४, ६ ( २भा० २३५ पृ० ) = ऋ० वे० ७, ५, १०, २।

त्तमः” अतिशयेन दीप्तिमान् “त्वं हि” त्वमेव “अङ्ग” क्षिप्रं “घोषयन्” शब्दयन् शब्दं कुर्वन् “जनिमानि” देवसम्बन्धीनि जन्मान्यभिलक्ष्य “अमृतत्वाय” अमरणाय आगच्छेति शेषः ॥

“दैव्य”-“दैव्या”—इति पाठौ, “घोषयन्”-“घोषः”—इति च ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ २ १ २ ३ २उ ३ १ २ ३ २
येनानवग्वादध्यङपोर्नु*तेयेनविप्रासआपिरे ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
देवाना सुम्ने अमृतस्यचारुणोयेनश्रवा स्याशत ॥२†॥१७

“नवग्वा”‡ नवनीय-गतिः यद्वा नवभिर्मासैः सत्रस्यानुष्ठानात् “दध्यङ्”—एतन्नामकः अङ्गिराः “येन” सोमेन पणिभिरपहृतानां “द्वारम्” “अपोर्णुते” अपच्छादयति विवृतमकार्षीत् “विप्रासः” तत् मुख्याः सर्वे मेधाविनोऽङ्गिरसः “येन” च सोमेन “आपिरे” तैरपहृता गाः आप्नुवन् किञ्च “देवानाम्” इन्द्रादीनां “सुम्ने” सुखे यज्ञेन सञ्जाते सति “चारुणः” कल्याणस्य “अमृतस्य” उदकस्य सम्बन्धीनि “श्रवांसि” अन्नानि

---

* “र्णु”—इति क० पु० पाठः । † ऋ० वे० ७, ५, १७, २ ।

‡ ‘नवग्वा—नवा गावो यस्य असौ नवग्वा’—इति वि० ।

"येन" च सोमेन यजमानाः "आशत" व्याप्नुवत् अलभन्त ; स त्वं देवानाममरणायागच्छेति पूर्वेण सम्बन्धः ॥

"नवग्वा"-"नवग्वो"—इति पाठौ, "आशत"-"आनशुः" —इति च ॥ २ ॥ १७

१ २ १ २ १२ २ १
॥ बृहत्कम् ॥ तुवꣳहो । अङ्गदैवा२ ३ या । पाक
२र १ २र १ ७ १ २ २ ४
मानजनिमानि । द्युमत्तामा२ः । अमार्त्ताइत्वा३ । य
५ ४ ५ १ २ १ २र १र
घोवा । षा५र्योई्हायि ॥(१) अमृता । त्वायघोषा२३
२ १ २र १ २र १ २ १र
यान् । यायिनानवग्वाद्ध्यङ् । आपो१र्णुता२यि । येना
२ २ ४ ५ ४ ५ १र २ १
वा३यिप्रा३ । सओवा । पा५यिरोई्हायि ॥(२) येनवो ।
२र १र २ १ र २र १र २ १ २ १
प्रासआपा२३यिरायि । दायिवानाꣳसुम्न अमृत । स्या
२ १र २ २ ४ ५ ४ ५
चा१रूणा२ः । येनाआ३वा । सियोवा । शा५तोई्हा
यि(३) ॥ १६ * ॥[१]

* ऊ० गा० २प्र० २अ० १६ सा० ।

२ र २ ३ ४ र १
॥ स्वारसौम्॥ त्वंह्याङ्गदैवाइया। पवमानज

४ ५र र १ ३ ५ १ १ २
निमानिद्युमा। ऊम्। ता२३४माः। आमा ३ उवा।

र १र २ ५ ४ ५ २
तात्वा। यद्यो२३४वा। षा५यो ६ हायि॥(१) अमृत

र र १ ३र ४र ३ ४ र ३ ४ ५र १ ३
त्वायघोषाइयान्। येनानवम्वाद्ध्यङ्ङपो। ऊम्। णू

५ १ १ २ १र १ १ ५
२३४तायि। यायिनाइउवा। विप्रा। सम्रो२३४वा।

४ ५ १र ८ र र १ ४ र
पा५यिरो६हायि॥(२) येनविप्रसऋापाइयिरायि। दे

१र ४र १र ४ ३ ४ ५ र १ ३ ५ १ २
वानांसुम्ने अमृतस्यचा। ऊम्। रू२३४णाः। यायिना

२ १र २ १ ५ ४ ५
इउवा। श्रवा। सियो२३४वा। शा५सो६हायि(३)॥१६*॥[२]

१ २ १र १
॥ शाक्तम्†॥ तुवंह्यिया। ए२। गदा। विया।

र र २ १ २ १
पवमानजनिमानिमानिद्युमत्ता२३माः। आमा२त्तांत्वा

२ १ ५ ४ ५ १ १ १र
२३। यघो२३४वा। षा५यो६हायि॥(१) अमृतत्वा।

१ र र २ १र २
ए२। यघो। षयान्। येनानवम्वाद्ध्यङ्पोर्णू२३तायि।

---

* ज० गा० ५प्र० २ख० १६ सा०। † "शक्त"—इति ख० पु० पाठः।

१ १ २ १ ५ ४ ५
यायिना २वायिप्रा२३ । सखो२३४वा । पा५यिरो ६ हा

१र २ १र १ र र र
यि ॥(२) येनविप्रा । ए२ । सखा । पिरायि । देवा

र र २ १र १ १ १ २
नाᳪसुम्ने अमृतस्यचारु२३णाः । यायिना २स्नावा२३ । सि

१ ५ ४ ५
यो२३४वा । श्रा५तो६ हायि(३) ॥ १८ * ॥ [३]

६ २ र ५
॥ सखासाद्धीयम् ॥ तुवा३४म् । हियज्ञदैविय । औ

५ १ र र १ १
६वा । पवमानजनिमानिद्युमत्ता २माः । आ २मा । ता

२ १ ऽ २र ३र २ १ ५ ५
२३त्वा । यद्यौ३हो । वाहा३४३यि । पा२३४ यो ६ हा

३ २ र र र ५ ५ १र र
यि ॥(१) अमा३४ । तात्वायघोषयन् । औ६वा । येना

र र १ १ २
नवम्वादध्यङ्ङ्पोर्णु २तायि । या २यिना । वा२३यिप्रा ।

१ ऽ २र ३र २ २ ५ ५
सखौ३हो । वाहा३४३यि । पा२३४यिरो६ हायि ॥(२)

३र २ र र र ५ ५ १र र र र
येना३४ । विप्रासआपिरे । औ६वा । देवानाᳪसुम्ने

---

* ऊ० गा० ११प्र० २ख० १८गा० ।

र १ १ २ १ ६
अमृतस्यचारु२णाः । या२यिना । आ२३वा । सियौ३

२र ३र २ १ ५ ५
हो । वाहा३४३यि । शा२३४ता६हायि(३) ॥ १२ * ॥[४]१७

अथ तृतीयतृचे† — प्रथमा ।

१ २ ३ २ ३ २उ ३ २ ३ १ २
सोमःपुनानऊर्म्मिणाव्यंवारंविधावति ।

१ २ ३ १ २र ३ १ २
अग्रेवाचःपवमानःकनिक्रदत् ॥ १ ‡ ॥

"पुनानः" पूयमानः "सोमः" "ऊर्मिणा" स्वीयया धारया "अव्यम्" अवेः सम्बन्धिनं "वालं" पवित्रं "वि धावति" विविधं गच्छति । कीदृशः सोमः ? "पवमानः" पूतः "वाचः" स्तोत्रस्य "अग्रे" "कनिक्रदत्" पुनः पुनः शब्दं कुर्वन् विधावति ॥

"अव्यम्"-"अव्ये" — इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
धीभिर्म्मृजन्तिवाजिनंवनेक्रीडन्तमत्यविम् ।

३ १ २ ३ २ ३ १ २ १ २
अभित्रिपृष्ठम्मतयःसमस्वरन् ॥ २ ¶ ॥

"वाजिनं" बलवन्तं वा "नवनीये" वसतीवर्याख्ये उदके

* ऊ० गा० १९प्र० १ख० १२सा० । † 'आतीषादीयं साम' — इति वि० ।

‡ छ० आ० ६, २, २, ७ ( २ भा० २१४ पृ० ) = ऋ० वे० ५, ५, १०, ५ ।

¶ ऋ० वे० ५, ५, ११, १

"क्रीडन्तं" सङ्क्रीडमानम् "अत्यविम्" [ अविशब्देन तल्लोमकृतं पवित्रमभिधीयते] अतिक्रान्त-पवित्रं सोमम् ऋत्विजः "धीभिः" स्तुतिभिः * "मृजन्ति" शोधयन्ति [ यद्वा, धीभिः—वर्णलोपश्छान्दसः, धीतिभिः अङ्गुलीभिः मृजन्ति ] किञ्च "त्रिपृष्ठं" [ त्रीणि पवित्राणि द्रोणकलशाधवनीयपूतभृदात्मकानि पात्राणि स्पृशतीति त्रीणि सवनानि वा स्पृशतीति स तथोक्तः, तम् ] सोमं "मतयः" स्तुतयः "अभि समस्वरन्" अभितः संस्तुवन्तीति ॥

"मृजन्ति"-"हिन्वन्ति"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३१ २ ३ २ ३ २उ ३ १२३२
असर्जि कलशाꣳ अभि मीढ्वान्त्सप्तिर्न वाजयुः ।

३ १ २र ३ १ २
पुनानो वाचञ्जनयन्नसिष्यदत् ॥ ३ ॥ १८

"वाजयुः" यजमानानामन्नमिच्छन् "मीढ्वान्" सेक्ता ‡ स सोमः "कलशान्" "अभि" लक्ष्य, कलशेषु "असर्जि" असृज्यत । तत्र दृष्टान्तः—"सप्तिर्न" यथा सर्पणशीलोऽश्वः ¶ सङ्ग्रामे सृज्यते तद्वत् । ततः "पुनानः" पूयमानः सोमं

* 'धीभिः बद्धिभिः'—इति वि॰ ।  † ऋ॰ वे॰ ५, ५, ११, २ ।

‡ 'मीढ्वान् बलवान्'—इति वि॰ ।

¶ 'सप्तिर्न—सप्तिरश्वोऽभिधीयते'—इति वि॰ । "सप्तिः"—इति निघण्ट्वावश्वनामसु पञ्चमं पदम् ( १, १४, ) ।

"वाचं" शब्दं "जनयन्" उत्पादयन् "असिष्यदत्" पात्रेषु स्यन्दते ॥

"मीढ्वान्"--"मेल्हा"—इति पाठौ ॥ ३ ॥ १८

३र ४ ५ र २ ३ ४र ५

॥ आतीषादीयम् ॥ सोमःपुना । हो । नऊर्म्मिणा

५ १ र २ २ २ २ ३ २ १

ई ए । अव्यंवारंविधा१वा३तो । अग्रेवा२३४५ । वा २

१ १ १ २ १ २ १ ३ ५र र २

३४५ः । पवमा२३ना३ः । कारेना२३४औहोवा । क्रद

३ १ १ १ १ ३र ४ ५ र २ ३ ४र ५ ५

दे२३४५ ॥(१) धीभिर्मृजा । हो । तिवाजिनाईमे ।

१ र र २ २ २ ३ ३ १

वनेक्रीडन्तमा१त्या३वायिम् । अभिवा२३४५यि । पार

१ १ १ २ १ २ १ ३ ५र र २

३४५ । इभ्मता२३या३ः । सारेमा२३४औहोवा । स्वर

३ १ १ १ १ ३ ४ ५ र २ ३ ४र ५ ५

ने२३४५ ॥(२) असर्जिका । हो । लशाऽअभीईए ।

१र र २ २ २ ३ ३ १ १ १ १ २

मीढ्वान्सप्तिर्न्नवा१जा३यूः । पुनानो२३४५वा२३४५ । च

१ २ १ ३ ५र र २ ३ १ १

ञ्जना२३या३न् । आरेसा २ ३ ४ औहोवा । ध्यद्दे २ ३

१ १

४ ५ (३)॥ १७ * ॥ [१]

---

* ऊ० गा० ३प्र० १अ० १७सा० ।

२र र १ २ १
॥ सुज्ञानम् ॥ सोमःपुना। नऊर्म्मिणा। अव्यवा
र १ २ र १ १
रा२म्। विधावतायि। अग्रेवाचा२ः। पव। मा२
२ ५र र १ २ १र
ना२३४औहोवा। कनिक्रदद३॥(१) धीभिर्मृजा। अि.
र १ २र १ १ २
वाजिनाम्। वनेक्रायिडा२। तमत्यवायिम्। अभि.
१ १ २ ५र र १ २
त्रायिपा२। ष्टम्म। ता२या२३४औहोवा। समस्वरं
२ र १ २र र १
३॥(२) असर्ज्जिका। लशा᳚अभायि। मीढान्त्साप्ता२
र १ २ र १ १ २
यिः। नवाजयूः। पुनानोवा२। चञ्च। ना२या२३
५र र १ २ १ ११ ११
४औहोवा। असिष्यदद३उपा२३४५ (३)॥ ८ * ॥ [२]

१र र १ र १
॥ शुध्यम् ॥ सोमःपुना२नः। ऊर्म्मिणोवा। अव्यं
२र १ २ २र २ १ र २र १ २र १
वाराम्। विधावतायि। अग्रेवाचःपवमानःक। ना२
२ १र १र
३यि। क्रदाउवा। ऊधिया२॥(१) धीभिर्मृजा२न्ति।
र १ २ १र २र १ २ ३ २ १ २ १ २ १
वाजिनोवा। वनेक्रोडा। तमत्यवायिम्। अभित्रिपृष्ठ

* ऊ० गा० ७प्र० २ख० ९सा० ।

२ १ १ १ २ १र
म्मतयःसम् । आ२३ । स्वराउवा । अृधिया२ ॥(२)
१ र १ २र१र १ १
असर्ज्जिका२ल । म्राऽ्अभोवा । मीठात्मप्नायिः । न
१र२ १ २ र १र र र १ २ १ १
वाजयूः । पुनानोवाचञ्जनयन्न । सा २ ३यि । ष्यदाउ
१र १ २ १
वा । अृधिया२ । ए२३हियाउ३ । ओ २ ३ ४ ५ ई ।
डा (३)॥ ४ * ॥ [३]

२र १ र र २र १
॥ ओम् ॥ सोमाः । पुनानानऊर्म्मि । णा । हो
१ २र १ र र २ १
ई२ । हो । वाहोयि । अव्यंवारंविधावतायि । अग्रा
२ २ १ २ १ १ २
यिवा१चा२३ः । पा३वामा३नाः । क्रना२३धिक्रदा३४३
२र १ र २ १
त् ॥(१) धीभीः । मृजन्तिवाजि । नम् । होई२ ।
१ २र १ र र २ १ २
हो । वाहोयि । वनेक्रीडन्तमत्यायिम् । अभायित्रा१
२ १ १ १ २ २
यिपा२३ । ष्टा३म्मातायाः । समार३स्वरा३४३न् ॥(२)
२ १ र २ १ १ २र
असा । जिकलशाऽ्अ । भि । चोई२ । हो । वा

* ऊ० गा० १प्र० २ख० ४गा० ।

१ २ २ २ २ १ २ २
चोयि। मीढ्वान्सप्निर्नवाजयुः। पुनानोश्वार३। चा३
१ २ २ १ १
ज्ञानाश्यान्। असार३यिष्यदा३४३त्। ओ२३४५ई।
डा (३)॥ ११ *॥ [४] १८

अथ चतुर्थतृचे†—प्रथमा।

१ २ ३ १ २ ३ १
सोमःपवतेजनितामतीना
२ ३२ ३१ २ ३ २२ ३ २
ञ्जनितादिवोजनितापृथिव्याः।
३ १ २र ३ २र
जनिताग्नेर्जनितासूर्यस्य
३ १ २ ३ १ २र
जनितेन्द्रस्यजनितोतविष्णोः॥ १ ‡॥

"सोमः" अभिषूयमाणः "पवते" पात्रेषु चरति। कीदृशः? "मतीनां" बुद्धीनां [ यद्वा, मननीयानां ] "जनिता" जनयिता, [ "जनिता मन्त्रे ( ६, ४, ५३ )"—इति निपातनाण्णिलोपः ] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता, तथा

---

* ऊ० गा० १५प्र० २ख० ११सा०।

† 'वात्सप्रं' साम सोमस्यायं स्तुतिः'—इति वि०।

‡ ऋ० आ० ६, १, ४, ५ ( २ भा० ११७४० ) = ऋ० वे० ७, ४, ६, ५।

"पृथिव्याः" "जनिता", "अग्नेः" 'जनिता" प्रकाशयिता, "सूर्य्यस्य" सर्वस्य प्रेरकस्यादित्यस्य "जनिता", "इन्द्रस्य" "जनिता" तेन महस्य जनयिता "उत" अपिच "विष्णोः" व्यापकस्य "जनिता" जनयिता ;—एतत्सर्वं सोमेऽभि षूयमाणे भवतीति ॥ १ ॥

अथ द्वितीया।

२ १ २ १ १ २ १ २ २
ब्रह्मादेवानाम्पदवीःकवीना*

२ १ २ २ २ २ १ २
मृषिर्विप्राणाम्महिषोमृगाणाम्।

२ १ २१ ३ १ २ ३ १ २
श्येनोगृध्राणाᳬस्वधितिर्वनानाᳬ

१ २ ३ २ ३ १ २ ३ १ २
सोमःपवित्रमत्येतिरेभन्॥ २ † ॥

"सोमः" एवंरूपो भवति—"देवानां" स्तोत्रकारिणा-मृत्विजां "ब्रह्मा" ब्रह्माख्यर्त्विक्स्थानीयो भवति [यद्वा, "देवानां" द्योतमानानामिन्द्रादीनां "ब्रह्मा" राजा भवति] तथा "कवीनां" कान्त-प्रज्ञानां "पदवीः" [स्खलन्ति पदानि साधुत्वेन यो योजयति स पदवीः, वी गत्यादिषु ( अदा०, उभ० )—इत्येतस्मात् क्विपि

---

* "दवीष्कवीना"—इति क० पु० पाठः। † ऋ० वे० ७, ४, ०, १

रूपम्], तथा "विप्राणां" मेधाविनां मध्ये "ऋषिः" भवति [यः परोक्षं पश्यति स ऋषिः "ऋषिर्दर्शनात् (निरु० २, १-१)"—इति,] "मृगाणां" "महिषो" भवति महिषाख्यो बलवान् राजा भवति तथा "गृध्राणां" पक्षिविशेषाणां "श्येनः" शंसनीयः पक्षिराजो भवति, "वनानां" [वनतिर्हिंसाकर्मा] हिंसकानां छेदकानां मध्ये "स्वधितिः"—एतन्नामकश्छेदकोऽसि। एवम्प्रभावः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन कृतम् "अत्येति" अतिगच्छति * ॥ २ ॥

---

* तत्राह यास्कः—"ब्रह्मा देवानामित्येष हि ब्रह्मा भवति देवानां देवनकर्मणामादित्यरश्मीनां पदवीः कवीनामित्येष हि पदं वेत्ति कवीनां कवीयमानानामादित्यरश्मीनामृषिर्विप्राणामित्येष हि ऋषणो भवति विप्राणां व्यापनकर्मणामादित्यरश्मीनां महिषो मृगाणामित्येष हि महान् भवति मृगाणां मार्गणकर्मणामादित्यरश्मीनां श्येनो गृध्राणामिति श्येन आदित्यो भवति श्यायतेर्गतिकर्मणो गृध्र आदित्यो भवति गृध्यतेः स्थानकर्मणो यत एतस्मिंस्तिष्ठति स्वधितिर्वनानामित्येष हि स्वयं कर्माण्यादित्यो धत्ते वनानां वननकर्मणामादित्यरश्मीनां सोमः पवित्रमत्येति रेभन्नित्येष हि पवित्रं रश्मीनामत्येति स्तूयमान एष एवैतत्सर्वमक्षरमित्यधिदैवतमथाऽध्यात्मं ब्रह्मा देवानामित्ययमपि ब्रह्मा भवति देवानां देवनकर्मणामिन्द्रियाणां पदवीः कवीनामित्ययमपि पदं वेत्ति कवीनां कवीयमानानामिन्द्रियाणामृषिर्विप्राणामित्ययमप्यृषणो भवति विप्राणां व्यापनकर्मणामिन्द्रियाणां महिषो मृगाणामित्ययमपि महान् भवति मृगाणां मार्गणकर्मणामिन्द्रियाणां श्येनो गृध्राणामिति श्येन आत्मा भवति श्यायतेर्ज्ञान-कर्मणो गृध्राणीन्द्रियाणि गृध्यतेर्ज्ञान-कर्मणो यत एतस्मिंस्तिष्ठन्ति स्वधितिर्वनानामित्ययमपि स्वयं कर्माण्यात्मनि धत्ते वनानां वननकर्मणामिन्द्रियाणां सोमः पवित्रमत्येति रेभन्नित्ययमपि पवित्रमिन्द्रियाण्यत्येति स्तूयमानोऽयमेवैतत्सर्वमनुभवत्यात्मगतिमाचष्टे ॥"—इति निरु० प० २, १३।

अथ तृतीया।

१ २ ३ १ ३ २ २
प्रावीविपद्वाचऊर्म्मिन्नसिन्धु

२ ३ २ ९ १ २ ३ ३ २
र्गिरस्तोमान्पवमानोमनीषाः।

३ १ २र ३२३१ २३ १
अन्तःपश्यन्वृजनेमावराण्या

२ ३ १ २र ३ २
तिष्ठतिवृषभोगोषुजानन्॥ ३ * ॥ १९

"पवमानः" सोमः "मनीषाः" मनस ईशिता हृदयङ्गमान् "प्रावीविपत्" प्रकर्षेण विपयति † प्रेरयति "सिन्धुन्" स्यन्दमान-नदीव "वाचः" शब्दस्य "ऊर्मिं न" सङ्घं यथा प्रेरयति तद्वत्। किञ्च "वृषभः" कामानामुदकानां वा वर्षकः सोमः "अन्तः" अन्तर्हितं वस्तुजातं ‡ "पश्यन्" "अवराणि" दूर्बलैः वारयितुमशक्यानि "इमा वृजना" ¶ इमानि बलानि "आ तिष्ठति" आसीदति। किं कुर्वन्? "गोषु जानन्" § गोषु जयाय जानानः सन् परबलानि प्रविशति॥

"स्तोमान्"-"स्तोमः"—इति पाठौ॥ ३॥ १९

* ऋ० वे० ७, ४, ७, २।  † 'वेपयति'—इति वि०।

‡ 'अन्तः हृदये'—इति वि०।

¶ 'वृजना वृजनानि छिद्राणि शरीरावस्थितानि'—इति वि०।

§ 'गोषु जानन्—गोशब्देन रश्मयः ता एव नाड्यो गृह्यन्ते ; वृषभो वर्षिता ; गोषु अप्सु नाडीषु जानन्'—इति वि०।

२र र
॥ महावात्सप्रम्॥ हाउहाउहाउ। औ। होहो
२ २ २ र १ २ १ र
वा। औ। होहोवा। सोमःपवा। तेऽजनि। ताऽ
र र र र र र १र
मतीनाम्। मतीनाम्। मतीनाम्। जनितादायि।
२ १ १ र र र
वोऽजनि। ताऽपृथिव्याः। पृथिव्याः। पृथिव्याः। ज
१र २ १ र २ र र
नितामायिः। जनिता। सूऽरियस्या। रियस्या। २।
१र २ १ २ र र
जनितेद्रा। स्याऽजनि। तोऽतविष्णोः। तविष्णोः। २।
१र र २ १ २ र र र र
ब्रह्मादेवा। नाम्पद। वीःकवीनाम्। कवीनाम्।
र र १ २ १ २ र र
कवीनाम्। ऋषिर्विप्रा। णाम्महि। षोऽमृगाणाम्।
र र र १र २ १ २ र
मृगाणाम्। २। श्येनोगृध्रा। णाꣳस्वधि। तिर्वना
र र र र १ २ १ १र
नाम्। वनानाम्। २। सोमःपवायि। त्याऽमति। एऽ
र र र १र २ १ र
तिरेभन्। तिरेभन्। २। प्रावीविपात्। वाऽचऊ।
२ १ र
मिन्नसिधुः। नसिन्धुः। नसिन्धः। गिरःस्तोमान्।

२ १ र २ र र १
पवमा। नोऽमनीषाः। मनीषाः। २। अन्तःपश्यान्।
२ १ र २ र र र १
वृजने। माऽवराणी। वराणी। २। आतिष्ठतायि।
२ १ १ र र १र
वृषभः। गोऽघुजानन्। घुजानन्। २। हाउ। ३।
१र २ १ ३
औ। होहोवा। २। औ। हो। होर। वा२३४
५र र ३ १ १ १ १
औहोवा। ई२३४५ (३)॥ १९ * ॥ [१]

१र १ २र १ १
॥ जनित्राद्यम्॥ हाउजनत्। सोमःपवा। ते३
१ २ ३ र ५ २ १र २ १ १
जेनि। तामतीनाम्। जनितादायि। वो३जनि। ता
३ ४ ५ २ १र २ १ र २ ३ ४ ५
पृथिव्याः। जनिताग्नायिः। जनिता। सूरियस्या।
२ १ र २ १ २ २ ४
जनितेन्द्रा। स्या३जनि। तो३४३। ता३वा५यिष्णो६५
२ १र र २ १ २ ३ ४ ५ २
ई: ॥(१) ब्रह्मादेवा। ना३पद। वीःकवीनाम्। ऋ
१ २ १ २ ३ ४ ५ २र १र २
षिर्विप्रा। णा३म्महि। षोमृगाणाम्। श्येनोगृध्रा। णा
१ २ ३ ४ ५ २र १ २ १
३ऽस्वधि। तिर्वनानाम्। सोमःपवायि। त्वा३मति।

* ऊ० गा० २प्र० २अ० १९सा० ।

२ २ २र १र
आ३४३यि । तो३रा५यिभाई५६न् ॥(२) प्रावोविपात् ।
२ १र २३४५ २१र २१र
वा ३ चक्र । मिन्नसिधूः । गिरस्तोमान् । पवमा ।
२३४५ २१ २१र २३४५ २र
नोमनोषाः । अन्तःपश्यान् । वृजने । मावराणी । आ
१ २र १ २१ २ २
उजनत् । आतिष्टतायि । वृषभः । गो ३४३ । वू३
४
जा५नाई५६न्(३) ॥ १ * ॥ [२]

४र ३ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ सोमा५ः प । वा३तारयिजनि
५ १ र र र र २ १ २
ता । मन्तोनाञ्जनितादिवोजनायि । ता३पार्था ३ यि
२ १ १र र र २ १
व्याः । जना२यिताग्नेर्जनि । तासू२३री । ऊम्मायि ।
२ २ १ र र २ २ १
या३स्या । जानितेन्द्रस्यजनितोतारविष्णाउ ॥(१) ब्रो
२ १र र र र र र र र र २
र्मा । ह्यादेवानांपदवीःकवीनामृषिर्विप्राणाम्महायि । घो
१ २ २ १र १ र र र
३माम्मा३णाम् । श्येनो२गृध्राणा७स्वधिविवोनाना२३७
२ १ २ २ १ र २र २
सो । ऊम्मायि । मा३ःपा । वायिचमत्येता२ यिरेभा

* ऊ० गा० ८प्र० २ख० १सा० ।

१ २ १र र र र र
भाग्प्रा। वीविपद्दाचऊर्म्मिंञसिन्धुर्गिरस्तोमान्यबमा।
२ १ २ र १ १ र र र
नो३माना३यिषाः। अन्ता२:पश्यन्वृजनेमाव। राणा
२ १ २ २ १ र र
२३षा। ऊम्मायि। ता३यिष्ठा। तायिवृषभोगोषू२
३र २ १ १ १
जानाउ। वा३४५(३)॥ १० *॥ [३]

१र २ १ २र १ र
॥ श्यावाश्वम्॥ सोमःपवा। तेजनितामता२यि
१ १ र र र १
नाउया२। जनितादिवोजनिताष्टथा२यिव्याउवा२३४।
३ २ ३र २ १ र र २ १ १ २र १
जना३४यिताग्ने:। जनितासूरियास्या२। जानितेन्द्रा।
२ १ ४ ५ ४ ५ १ २र
स्याजनिता२३। तोवा। वा५यिष्णो६हायि॥(१) ब्रह्मा
र १ २र १ र १ १ र र
दवा। नाम्पदवी:कवा२यिनाउवा२। ऋषिर्विप्राणां
र १ ३र २ ३ १ १र
महिषोमृगा२णाउवा२३४। श्येनो३४गृध्रा। णा१(ं)स्व
२ १ १ २ १ २ १
धितिर्वनाना२म्। सोमःपवायि। त्रामतिया२३यि।
४ ५ ४ ५ १र २र १ २र १
तोवा। रा५यिभो६हायि॥(२) प्रावोविपात्। वाच

---

* ऊ० गा० २१प्र० १ख० १०सा०।

२ १ १ २ २ २ २
ऊम्मि नसा २यिम्भाउवा २। गिरस्स्तोमान्यवमानोमना

१ १ २ ३ २ १ २ २ २ १ १
२यिषाउवा२३४। अन्ता३४:पश्यान्। वृजनेमावराणा

१ १ १ २२ १ ४ ५ ४
२यि। आतिष्ठतायि। वार्षभोगोर२३। पोवा। जा५

५
नो६हायि (३)॥ १६ *॥ [४] १८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य

षष्ठः खण्डः† ॥ ६ ॥

---

अथ तृचत्रयात्मके सप्तमे खण्डे‡,

प्रथमतृचेषु¶—प्रथमा ।

३ १२ ३ १ २ २ ३ १ २ ३ १ २
अग्निं वो वृधन्तमध्वराणाम्पुरूतमम् ।

२ ३ २ ३ १ २
अच्छा नप्त्रे सहस्वते ॥ १§ ॥

---

* ऊ० गा० २३प्र० १ख० १६सा० ।

† 'यज्ञायज्ञीयमग्निष्टोमीयं साम'—इति वि० ।

‡ 'इदानीमुक्थानि'—इति वि० ।

¶ 'सौरभं ब्रह्मसाम वसिष्ठस्य प्रियतम मच्छावाकसाम'—इति वि० ।

§ ऋ० आ० १, १, ३, १ ( भा० १२७४० ) = ऋ० वे० ७, ७, १०, ३ ।

"अध्वराणाम्" अहिंसानां बलिनां "नप्तं" बन्धुं "सहस्वते" बलवन्तं [ विभक्तिव्यत्ययः ( ३, १, ८५ ) ] "वृधन्तं" ज्वालाभिर्वर्द्धमानं "पुरुतमम्" अतिशयेन बहुमग्निं हे ऋत्विजः ! "वः" यूयम् "अच्छ" अभिगच्छत । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥१॥

अथ द्वितीया ।

३ १र २र ३ २ ३ १ २ ३ २ ३ १ २
अयंयथानआभुवत्त्वष्टारूपेवतक्ष्या ।
३ २उ ३ १ २
अस्यक्रत्वायशस्वतः ॥ २* ॥

"अयम्" अग्निः "नः" अस्मान् "तक्ष्या" विकर्त्तव्यानि "रूपेव त्वष्टा" रूपाणि वर्द्धकिरिव "यथा" येन प्रकारेण "आ भुवत्" आ भवति प्राप्नोति, तथैनमग्निमभिगच्छतेत्यर्थः । किञ्च वयम् "अस्य" अग्नेः "क्रत्वा" † प्रज्ञानेन युक्ताः "यशस्वतः" यशस्वन्तो ‡ भवामेति शेषः ॥ २ ॥

अथ तृतीया ।

३ १ २र ३ २उ ३ २ ३ १ २
अयंविश्वाअभिश्रियोग्निर्देवेषुपत्यते ।
२उ ३ १ २
आवाजैरुपनोगमत् ॥ ३¶ ॥ २०

* ऋ० वे० ७, ७, १०, १ ।

† 'क्रत्वा—तृतीयैषा षष्ठी-स्थाने द्रष्टव्या क्रतोः'—इति वि० ।

‡ 'यशस्वतो यशसा सम्पन्नस्य'—इति वि० ।

¶ ऋ० वे० ७, ७, १०, ४ ।

मनुष्याणां "विश्वाः" सर्वाः "श्रियः" सम्पदः * "देवेषु" देवानां मध्ये यः "अयम् अग्निः"† "अभिगच्छति, सः अग्निः "नः" अस्मानपि "वाजैः" अन्नैः "उपागमत्" उपागच्छतु॥३॥२०

॥ स्वारसैन्धुक्षितम्॥ अग्निर्वो वृधान्ताम्। अध्व राणाम्। पुरूतमौ। होवा३हायि। आक्षा२नाम्न २३। सहो२३४वा। स्वा५तो६हायि॥(१) अयंयथानआभूवात् त्वाष्टारूपे। वताहायौ। हौवा३हायि। आस्या२क्ता त्वा२३। यशो२३४वा। स्वा५तो६हायि॥(२) अयंविश्वाअभिश्रायाः। आग्निर्देवे। षुपात्याती। होवा३हा यि। आवा२जायिहू२३। पनो२३४वा। गा५मो६हा यि (३)॥ २० ॥ [१]

---

* 'अभिश्रियः—अभिश्रयणमालम्बनं सर्वाण्यालम्बनानि'—इति वि०।

† 'अग्निः देवेषु भवति यदा अरणिभ्यां पत्यते। पत्यत इति छान्दसः प्रयोगो न दोषः'—इति वि०।

‡ ऊ० गा० २प्र० २ख० २०सा०।

३ २ र

॥ सत्रासाहियम् ॥ अग्ना ३ ४ यिम्। वोवृधन्तम्।

५ ५ १ र र र १ १

ओ६वा। अध्वराणाम्पुरुहूता २माम्। आ २च्छा। ना

२ १ ऽ २र ३र २ १ ५ ५

२३म्रे। सहौ२हो। वा३हा३४३यि। स्वा२३४तो६हा

३ २ र र ५ ५

यि ॥(१) अया ३ ४ म्। यथानआभुवत्। ओ६वा।

१ र र र १ १ २ १ ऽ

त्वष्टारूपेवतक्षा२या। आ २स्या। क्रा२३त्वा। यशौ३

२र ३र २ १ ५ ५ ३ २

३हो। वा३हा३४३यि। स्वा२३४तो६हायि ॥(२) अया

र ५ ५ १ र र

३ ४म्। विश्वाअभिश्रियः। ओ६वा। अग्निर्देवेषुपत्या

१ २ १ ऽ २र ३र

२तायि। आ २वा। जा२३यिरू। पनौ ३ हो। वा

२ १ ५ ५

हा३४३यि। गा२३४मो६हायि(३) ॥ ११ * ॥ [२] २०

---

* ऊ० गा० ६प्र० २ख० ११सा०।

अथ द्वितीयतृचे—प्रथमा ।

१२ २ १ १ २ ३ ३ १ २ ३ १ २
इममिन्द्रसुतम्पिबज्येष्ठममर्त्त्यम्मदम् ।

३ १ २ ३क २र १ २ ३ १ २ १ २
शुक्रस्यत्वाभ्यक्षरन्धाराऋतस्यसादने ॥ १ * ॥

हे "इन्द्र ।" "सुतम्" अभिषुतम् "इमं" सोमं "पिब" कीदृशम् ? "ज्येष्ठम्" अतिशयेन प्रशस्यं "मदं" मदकरम् "अमर्त्त्यम्" अमारकम् [सोमपान-जन्यो मदो मदान्तरवत् मारको न भवतीत्यर्थः] तथा "ऋतस्य" यज्ञस्य सम्बन्धिनि "सादने" गृहे वर्त्तमानाः "शुक्रस्य" दीप्तस्यास्य सोमस्य "धाराः" "त्वाम्" "अक्षरन्" आभिमुख्येन सञ्चलन्ति त्वां प्राप्तुं स्वयमेवा—गच्छन्तीत्यर्थः [ज्येष्ठ—प्रशस्य-शब्दादियसुनि "ज्य च (५,३,६१)"—इति ज्यादेशः । अक्षरन्—क्षर सञ्चलने (भ्वा०, प० ) छान्दसो लङ् (३ ४, ६ ) ॥ १ ॥

अथ द्वितीया ।

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
नकिष्टद्रथीतरोहरीयदिन्द्रयच्छसे ।

३ १ १ २ ३ २ ३ २ ३ १ २
नकिष्टानुमज्मनानकिःस्वश्वआनशे ॥ २ † ॥

---

* ऋ० आ० ४, २, १, २ ( १ आ० ७०२ ख० )=ऋ० वे० १, ६, ४, ४ ।

† ऋ० वे० १, ६,६, १ ।

हे "इन्द्र!" "यद्" यस्मात् त्वं "हरी"—एतन्नामकावश्वौ* "यच्छसे" रथे योजयसि, तस्मात् "त्वत्" त्वत्तोऽन्यः कश्चित् "रथीतरः" अतिशयेन रथवान् "नकिः" नास्ति [अन्येषामीदृगश्वयुक्तरथाभावात्]"त्वा" त्वाम् "अनु" लक्ष्य "मज्मना" [बलनामैतत् (निघ० २, ९, २१)] बलेन सदृशोऽपि "न किः" नह्यस्ति "स्वश्वः" शोभनाश्वो "न किः आनशे" न प्राप [इन्द्रस्य बलाश्वयोरसाधारणत्वात् इन्द्रसदृशो बलवान् अश्ववान्] लोके कश्चिदपि नास्तीत्यर्थः [न किष्टत्—"युष्मत्ततक्षुष्वन्तः पादम् (८, ३, १०३)"—इति षत्वम्। रथीतरः—अतिशयेन रथी; तरपि "ईद्रथिनः"—इति ईकारान्तादेशः। यच्छसे—यमेर्व्यत्ययेनात्मनेपदम्। स्वश्वः—बहुव्रीहावाद्युदात्तत्वे प्राप्ते "नञ्सुभ्याम्"—इत्युत्तर-पदान्तोदात्तत्वम्।] आनशे—"अश्नोतेश्च (७,४,७२)"—इति अभ्यासादुत्तरस्य नुट्॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ ५ २
इन्द्रायनूनमर्चतोक्थानिचब्रवीतन।

३ १ २ ३ १ २ ३ १ २ ३ १ २
सुताअमत्सुरिन्दवोज्येष्ठंनमस्यतासहः॥ ३ †॥२१

* "हरी इन्द्रस्य"—इति नैघण्टुकम् १,१५,१।

† ऋ० वे० १,६,४,५।

हे ऋत्विजः! "इन्द्राय"* "नूनं" चिप्रम्† "अर्चत" पूजनं कुरुत। एतदेव स्पष्टीक्रियते—"उक्थानि" अप्रगीत-मन्त्र-साध्यानि शस्त्राणि स्तोत्राणि च "ब्रवीतन" ब्रूत। "सुताः" अभिषुताः "इन्दवः" सोमाः त्वाम् "अमत्सु" आगत मिन्द्रं मत्तं कुर्वन्तु, अनन्तरं "ज्येष्ठ" प्रशस्यतमं "सहः" सहस्विनं बलवन्तम् तमिन्द्रं नमस्यत नमस्कुरुत [ब्रवीतन—ब्रवीते र्लोटि "तप्तनप्तनथनाश्च (७,१,४५)"—इति तनबादेशः। अमत्सु—मदी हर्षे( भ्वा०,प० )छान्दसः प्रार्थनायां लुङ्, आगमानुशासनस्या-नित्यत्वादिड्भावः। नमस्यत—"नमोवरिवश्चित्रङः (३,१,१९)" —इति क्यच्। सहः—"युगकारेकाररेफाश्च वक्तव्याः—इति मत्वर्थीयस्य लुक्॥ ३ ॥ २१

२ १ ४ ५ ४ ५ ४ ५
॥ वसिष्ठप्रियम्॥ इममीर२३। द्रसुतम्पिब। ज्येष्ठा

• १ ७ १ २ १
म्। अमा३र्त्यम्मादा२म्। शुक्रास्यत्वा३। भिया२

१ ५ १ २ २ ५ १ २ २ ५
क्षा२३४रान्। धाराओ२३४वा। आर्त्ताओ२३४वा।

• २ १ ४ ५ ४र ५ ४ ५
स्यसा५दनायि॥१) नकिष्टू२३। वद्रथीतरः। ह्वारो।

२ १ ७ १ १ १ २
यदीइन्द्रायच्छासा२यि। नकायिष्ट्वा३। नुमा२ज्मा२३४

---

* 'इन्द्रायेति चतुर्थी द्वितीयार्थे द्रष्टव्या, इन्द्रम्'—इति वि०।

† 'नूनं निश्चितम्'—इति वि०।

५ १ २ १ ५ १ २ २ ५ ४
ना। नाकाओ२३४वा। सूवाओ२३४वा। स्वआ५नआ

१ १र ४र ५ ४ ५ २ १२
यि॥(२) इन्द्राया२३। नूनमर्चं। तोक्था। निचा३आवी१

१ २ १ २ ५ १
तामा२। सुताअमा३। त्सुरी२न्दा२३४वाः। ज्यायि

२ २ ५ १ २ २ ५ ४ ४
ष्ठाओ२३४वा। नामाओ२३४वा। स्यता५सद्धाः। वो

५ई। डा(३)॥ १ *॥ [१]

१ २ १ र
॥ आसितायम्॥ इममिन्द्रसुताम्। पिबा। ज्येष्ठम

२ १ १ १
मर्त्तियम्मा२३दाम्। शुक्रा २स्याल्वा २। भियचरान्।

१ १ २ १ ५ ४ ५
धारा २आर्त्ता २। स्यमोवा३ओ२३४वा। दा५नोई्हा

१ २ १ १ र २
यि॥(२) नकिष्ठ्वाद्रथायि। तरो। हरीयदिद्रयच्छा२३सा

१ १ १ १
यि। नाका२यिष्टूवा२। सुमजमना। नाका२यिसूवा

१ २ १ ५ ४ ५ १ र
२। स्वओवा३ओ२३४वा। ना५शोई्हायि॥ इन्द्रा

२ र १ र र २ १
यनूनमा। चता। उक्थानिचब्रवीतार३ना। सूता२

---

* ऊ० ग्रा० २प्र० १ख० १सा०।

१ १ १ १
आमा२ । त्सुरिन्दवाः । ज्यायिष्ठा२म्नामा२ । स्यतो
२ १ ५ ४ ५
वा३ओ२३४वा । सा५स्रोई३हायि(३) ॥ १७ * ॥ [२]

५ २ १ ४ ५
॥ गौरीवितम् ॥ इमम् । इन्द्रा३ । सुतम्पिबा ।
१र १ २ ४
ज्येष्ठममर्त्त्यम्मदा२३म् । शुक्रस्यत्वा३१२३ । भियापुक्षं
१ र २ ४ ५ ४ ५
रान् । धाराऋता३१२३ । स्यसोवा । दा५नोई३हायि ॥(१)
५ २ २ ४र ५ १र
नकिः । तुवा३त् । रथीतराः । हरीयदिन्द्रयच्छसा
१ २ ४ १
२३यि । नाकिष्टुवा३१२३ । नुमा५ज्मना । नाकिस्त्वं
४ ५ ४ ५ ५ र २ २
३१२३ । स्वश्रोवा । ना५श्नोई३हायि ॥(२) इन्द्रा । यनू३ ।
४ ५ १ र १ र २
नमर्चता । उक्थानिब्रवीतना२३ । सूताश्रमा३१२३ ।
४ १ २ ४ ५ ४
त्सुरीपूदवाः । ज्यायिष्ठन्नमा३१२३ । स्यतोवा । सा५
५
होई३हायि(३) ॥ २ † ॥ [३] २१

---

* क० गा० ११प्र० १ख० १७गा० ।

† ऊ० गा० ११प्र० १ख० ३गा० ।

अथ तृतीयतृचे*—प्रथमा ।

१ २ ३ १ ३ २ ३ १ २ ३ १ २

इन्द्रजुषस्वप्रवहायाहिशूरहरिह ।

१ २ ३१ २३११ २र ३ २उ ३१२

पिबासुतस्यमतिर्नमधोश्चकानश्चारुर्मदाय ॥ १ ॥

यानि मया हवींषि दत्तानि तानि "प्र वह" "आ याहि" आगच्छ "शूर" वीर्यवन् ! उपसर्गाक्षराणि—"हरिह" [अथवा हरितवर्णा हया यस्य स हरिहयः, तस्य सम्बोधनं क्रियते—हे हरिह ! छान्दसो यकारलोपः] "पिबा"† "सुतस्य" सोमस्य उपसर्गाक्षराणि—"मतिर्नमधोश्चकानः", "चारुः" शोभनः "मदाय" भक्षणाय ॥ १ ॥

---

* 'इदानीं चतुर्थेऽहनि षोडशी भवति। तस्य षोडशिनः महान् विचारः [illegible] समभवतामित्यारभ्य महान् विचारो निदानकृतेत्युक्तः चतुस्त्रिंशदक्षराणि स्तुता भवन्ति। तमनुपसृत्य प्रवहादीनि उपसर्गाक्षराणि निरूप्यन्ते। तथा सति चातुर्विध्यानां पादानां त्रीणि त्रीणि उपसर्गाक्षराणि पादान्तेषु भवन्ति'—इति वि० एवञ्च—

प्रथमर्चि—"प्रवह","हरिह","मतिर्न"—इति नव,

द्वितीयर्चि—"नव्यम","दिवोन" "स्वर्ण" इति नव,

तृतीयर्चि—"मियोन","यतिर्न","भृगुर्न"—इति नव,

किञ्च प्रथमर्चि चतुर्थपदादौ च "मधोश्चकान"—इति सप्त, तदित्थं सङ्कलनया चतुस्त्रिंशदुपसर्गाक्षराणि सम्पद्यन्ते। अत्र च "स्वर्ण","मधोः"—इत्युभयत्र विभागस्य द्व्यक्षरत्वेन पदत्वं बहुविचारेण सम्पादितम् ॥

† "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति दीर्घः।

अथ द्वितीया।

१ २ ३ १ ३ २ ३ २ ३ १ १ १ २ ३ १

इन्द्रजठरन्नव्यन्नपृणस्वमधोर्दिवोन।

३ १ २ १ ३ १　१ २ ३ १ २ ३ १ २

अस्यसुतस्यस्वाऽ३ऽर्नोपत्वामदाःसुवाचोअस्थुः॥ २॥

हे "इन्द्र!" "जठरम्" उदरं "नव्यं न" नवतरं "पृणस्व" पूरयस्व "मधोः" मधुरस्य "दिवो न" "अस्य" सोमस्य "सुतस्य" अभिषुतस्य "स्वर्न" स्वर्गस्येव "उप त्वा" उप समीपे त्वाम् "मदाः" "सुवाचः" शोभनवाचः "अस्थुः" स्थितवन्तः॥ २॥

अथ तृतीया।

१ २　३ २　१ २उ　३ १ २ ३ २उ ३ २

इन्द्रस्तुराषाण्मित्रोनजघानवृत्रंयतिर्न।

३ १ २ ३ २उ　३ १ २ ३ २उ　३　२ ३ १ २

बिभेदवलम्भृगुर्नससाहेशत्रून्मदेसोमस्य॥ ३॥ २२

"इन्द्रः "तुराषाट्" [तुरि सीदति यः सः तुराषाट्] "मित्रो न" मित्र इव "जघान" "वृत्रं" शत्रुं "यतिर्न"—उपसर्गाचराणि "बिभेद" भिन्दस्व "बलं" बलोनाम दानवस्तं बलं "भृगुर्न" श्रोणि श्रीणि पदान्तेषु उपसर्गाक्षराणि भवन्ति "ससाह" सहितवान् "शत्रून्" "मदे" भक्षणे कृते सोमस्य तथाच निविदापदे विश्रुतस्य षोड़शिनः। अस्य मदे जरित इत्यारभ्य बहूनि वीर्ययुक्तानि कर्माणि* ॥ ३॥ २२

* एतमृचस्य व्याख्यानं विवरणकृत् कृतानुकृतमेवेति वामयोर्विशेषः।

५ ७ १ ४ ५ १र
॥ गौरीवितम्* ॥ इन्द्र । जुषा३ । स्वप्रवहा । आ

र र १ र २ ४
याहिशूरहरिहार२३ । पायिबासुता३१२३ । स्वमतिर्ना

१ र १ ४ ५ ४ ५
धूमधोः । चाकानश्चा३१२३ । रूम्मौवा । दा५योइहा

५ २ १ ४ ५ १ र
यि ॥(१) इन्द्र । जठा३ । रन्नव्यन्ना । पृणस्वमधोर्हि

र १ १ ४ १
वोन्ना२३ । आस्यसुता३१२३ । स्यस्वर्नाप्५उपा । त्वाम

र १ ४र ५ ४ ५ ५
दाःसू३१२३ । वाचोवा । आ५स्थोइहायि ॥(२) इन्द्रः ।

३ १ ४र ५र १ र १
तुरां३ । षाण्मि-ोमा । जघानवृत्रंयतिर्ना२३ । बायि

र १ ४ १ र १ ४र
भेदवा३१२३ । त्वंभूगुर्न्ना५ससा । हेशाचूम्मा३१२३ । दे

५ ४ ५
सोवा । मा५स्थोईहायि(३) ॥ २ † ॥ [१] २२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य

सप्तमः खण्डः ॥ ७ ॥

---

* "गौरीवीतम्"—इति स० पु० पाठः ।

† ऊ० गा० ३प्र० १अ० २खा० ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ५ ॥

॥ इति तृतीयस्यार्द्धः-प्रपाठकः* ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे उत्तराग्रन्थे पञ्चमोऽध्यायः ॥

---

* 'इति तृतीय-प्रपाठकस्य प्रथमार्द्धः । चतुर्थखण्डः परिसमाप्तः'—इति वि० ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ६ ॥

## ॥ अथ षष्ठोऽध्याय आरभ्यते* ॥

तत्र,

गोवित्पवस्वेति प्रथमे खण्डे—

प्रथमा ।

२ १ २    ३ १ २   ३ १
गोवित्पवस्ववसुविद्धिरण्यवि

२ ३ १ २ ३ १ २ ३ १ २
द्रेतोधाइन्दोभुवनेष्वर्पितः ।

२ ३ १ २     ३ २उ
त्वꣳसुवीरोअसिसोमविश्ववित्त-

३ २३ १ २ ३ १र २र
न्त्वानरउपगिरेमआसते ॥ १ † ॥

हे "इन्दो" सोम ! त्वं "पवस्व" क्षर‡ । कीदृशस्त्वं ? "गोवित्"¶ गवां लम्भकः; "वसुवित्"§ धनस्य लम्भकः; "हिरण्य-

---

* 'इदानीं षष्ठमारभ्यते'—इति वि० ।

† ऋ० वे० ७,३, १९, ४ ।

‡ 'पवस्व पूयस्व'—इति वि० ।

¶ 'गोवित्—गावो यस्य विद्यन्ते स गोवित्'—इति वि० ।

§ 'वसुवित्—वसु धनं तेन तद्वान्'—इति वि० ।

वित्”* हिरण्यस्य लम्भकः, “रेतोधाः” रेत उदकं तस्य धातो-यधीनां यद्वा रेतः प्रजनन-सामर्थ्यं तस्य धारयिता “भुवनेषु” उदकेषु “अर्पितः”; भो सोम! कीदृशस्त्वं? “सुवीरोऽसि”† शोभनवीर्योऽसि भवसीति, “विश्ववित्” सर्वस्य वेत्तासि। यस्मादेवं तस्मात् तादृशं “त्वा” त्वाम् “इमे” “नरः”‡ नेतारः “गिरा” स्तुत्या “उपासते”¶॥

“नरः”-विप्राः”—“इति पाठौ॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ १ २
त्वन्नृचक्षाअसिसोमविश्वतः

१ २ ३ १र २र
पवमानवृषभताविधावसि।

१ २ ३ १ २ ३ १ २ ३ १
सनःपवस्ववसुमद्धिरण्यवद्वयं

२ ३ १ २ ३ १ २
स्यामभुवनेषुजीवसे॥ २ §॥

---

* ‘हिरण्यवित्--हिरण्यविशिष्टं वस्तु’—इति वि०।

† ‘सुवीरः—शोभनवीरः’—इति वि०।

‡ ‘नरः—ऋत्विजः’—इति वि०।

¶ ‘उपासते—उप समीपे स्थित्वा आसते, समीपे उपविश्य गिरा स्तुतिलक्षणया वाचा इमे आसते स्तुतिं कुर्वाणाः’--इति वि०।

§ ऋ० वे० ७, १, १९, ४,।

भो "सोम!" त्वं "विश्वतः" सर्वतः सर्वेषु "भुवनेषु"* "नृचक्षाः† असि" नृणां द्रष्टा भवसि। हे "पवमान" पुनान सोम! "वृषभ" अपां वर्षक! "वाः" अपः "वि धावसि" विविधं गच्छसि, स त्वं "नः"‡ अस्माकं "पवस्व" क्षर किञ्च "वसुमत्" बहुभिर्वसुभिर्वासकैर्गवादि-द्रव्यैर्युक्तं, तथा "हिरण्यवत्" बहुभिः हिरण्यैर्युक्तं धनं। वयञ्च वसुभिर्हिरण्यैश्च युक्ताः "भुवनेषु" लोकेषु "जीवसे" जीवितुं प्रभवः "स्याम" भवेम॥ २॥

अथ तृतीया।

३ २ ३ १र २र ३ १ २
ईशानइमाभुवनानिईयस

३ १२ ३ १ २ ३ १ २र
युजानइन्दोहरितःसुपर्ण्यः॥

१ २ ३ १ २ ३ २उ ३
तास्तेक्षरन्तुमधुमद्घृतम्पय

१ २ ३ १ २ ३ १ २
स्तवव्रतेसोमतिष्ठन्तुकृष्टयः॥ ३ ¶॥ १

हे "इन्दो" सोम! "ईशानः" सर्वस्य स्वामी त्वम् "इमा" इमानि "भुवनानि"§ भूतजातानि "ईयसे" गच्छसि [ईङ्

* 'भुवनेषु—भुवनानि चतुर्दश'—इति वि०।

† 'नृचक्षाः—नृणां चक्षुभूतः'—इति वि०।

‡ 'नः—अस्मभ्यम्'—इति वि०।

¶ ऋ० वे० ७, ३, १९, २।

§ 'भुवनानि—चतुर्दश'—इति वि०।

गतौ (दि० आ०), "दिवादिभ्यः श्यन् (३,१,६९)"—इति श्यन्]। किङ्कुर्वन्? "हरितः" हरितवर्णाः "सुपर्णाः" सुपर्ण-नामकाश्वा रथे "युजानः" योजयन्, "ताः" सुपर्णाः "ते" तव सम्ब-न्धिन्यः "मधुमत्" माधुर्योपेतं "घृतं" दीप्तं "पयः" उदकं "क्षरन्तु"। हे सोम! तव "व्रते" कर्मणि तिष्ठन्तु "कृष्टयः"* मनुष्याः सर्वे॥

"ईयसे"-"वीयसे"—इति पाठौ॥ ३॥ १.

॥ द्विरभ्यस्तं चौथ्रोत्तरम॥ गोवित्पवस्ववसुविद्धिर। एयवायित्। एयवा२३४५यित्। रेतो३१२३४। धाइन्दो भुवनेष्व। पिताःपिताः। तुवा३१२३४म्। सुवीरोअसि सोमवि। श्ववायिच्छ्वायित्। तन्वा३१२३४। नरउप गिरे। मआ३सा५ता६५६यि॥(१) त्वन्नृचक्षाअसिसो मवि। श्वताः। श्वता२३४५ः। पवा३१२३४। मानवृष भताविधा। वसायिवसायि। सना३१२३४ः। पवस्वव सुमद्धिर। एयवाएयवात्। वया३१२३४म्। स्यामभुवने। षुजा३यिवा५सा६५६यि॥(२) ईशानइमाभुवनानिई।

* 'कृष्टयः—कवयः पण्डिताः मेधाविनः'—इति वि०।

यसायि। यसा२३४५यि। युजा३१२३४। नइन्दोचरितः सुप। णियाणिया:। तास्ता२१२३४यि। चरन्तु धु मङ्गुतम्। पयाःपयाः। नवा३१२३४। व्रतेसोमतिष्ठ। तुका३र्हा५या६५६:(३) ॥ ७ * ॥ [१]

॥ श्येनम्॥ गोवित्पवस्ववसुवायित्। हा२३यिरा। ण्याविद्रेतो३आउवा२३। धाइया। दोभुवकेषुवार्पायि ता:। त्व९सौ३हो। वायिरोअसा३१उवा२३। सोम घा। विश्वविंत्तन्त्वाना१रा२:। उयौ३हो। गायिरेम आ३१उवा२३। ए३। सतआ३२॥(१) त्वन्नृचक्षाअसि सो। मा२३वायि। आत:पवा३१उवा२३। मानआ। वृषभताविधावासायि। सनौ३हो। पावस्ववा३१उवा २३। सुमदा। हिरण्यवद्या९स्या१मा२। भुवौ३हो।

* ऊ० आ० ८प्र० २ख० ७आ०।

१ २ २ २ २ २र २ १ २ १र
नायिषुजा३१उवा२३। ए३। वसव्या३२॥(२) ईशानइमा

२ १ २ १ २ २ २र २ २
भुवना। ना२३ई। यासेयुजा३१उवा२३। नाइया।

२ १ २ १र ५ ५ १ २
दोहरितःसुपार्णाया:। तास्तौ३हो। व्वारन्तुमा३१उवा

२ ३ १ १ २ १र ५ २
२३। धूमदा। घृतम्पयस्तवाव्रा३१ता२यि। सोमौ३वो।

१ २ १ २ ३ १
तायिष्ठन्तुका३१उवा२३। ए३। ष्टयव्रा३२(३)॥१८*॥ [२]१

अथ द्वितीयतृचे—

प्रथमा।

१२ ३ १ ३ १ २
पवमानस्यविश्वविप्रतेसर्गाअसृक्षत।

१२ ३ २ ३ १ २
सूर्यस्येवनरश्मयः॥ १ †॥

हे "विश्ववित्" विश्वस्य द्रष्टः सोम! "पवमानस्य" क्षरतः "ते" तव "सर्गाः"‡ सृज्यमाना धाराः "सूर्यस्येव रश्मयः" सूर्यस्य किरणा इव प्रकाशमानाः "न"—इति सम्प्रत्यर्थे। इदानीं "प्रासृक्षत" प्रासृज्यन्त॥ १॥

* ऊ० गा० २३प्र० १ख० १८गा०।

† ऋ० वे० ९, १, २७, २।

‡ 'सर्गाः—स्रष्टव्याः उदकसङ्घाताः'—इति वि०।

अथ द्वितीया।

२ १२ १ २१ड ३ १२ ३ १२

केतुं कृण्वन्दिवस्परि विश्वारूपाभ्यर्षसि।

३ १ २

समुद्रः सोम पिन्वसे॥ २ *॥

हे "सोम!" "समुद्रः"† समुद् द्रवन्ति यस्माद्रसाः स समुद्रः स त्वं "केतुं"‡ प्रज्ञानं "कृण्वन्" कुर्वन् अस्माकं "विश्वा रूपा" विश्वानि रूपाणि "दिवः"¶ अन्तरिक्षात् "अभ्यर्षसि"§ अभिपतसि "पिन्वसे" नानाविधानि च धनानि अस्मभ्यं प्रयच्छसि॥२॥

अथ तृतीया।

३ १२ २२ ३१२ ३ १२

जज्ञानो वाचमिष्यसि पवमान विधर्मणि।

१ २ ३ १२ २२

क्रन्दन्देवो न सूर्यः॥ ३॥॥ २

हे "पवमान" सोम! "देवः न सूर्यः" द्योतमानः सूर्य इव "जज्ञानः" प्रादुर्भूतस्त्वं "विधर्मणि" विधारके** दशापवित्रे "क्रन्दन्" ध्वनन् "वाचम्" शब्दम् "इष्यसि" प्रेरयसि॥

---

* ऋ० वे० ७, १, ३७, २।

† 'समुद्रः—समुद्रभूतस्त्वम्'—इति वि०।

‡ 'केतुध्वजः नम्'—इति वि०।

¶ 'दिवस्परि—द्युलोकस्योपरि—इति वि०।

§ 'अभ्यर्षसि—आभिमुख्येन रक्षसि'—इति वि०।

|| ऋ० वे० ७, १, ३७, ४।

** 'विधर्मणि—विविधे कर्मणि'—इति वि०।

"अश्वान:"-"हिन्वान:" —इति पाठौ, "क्रन्दन्" "मक्षान्"—इति च ॥ ३ ॥ २

प्रसोमासइति सप्तर्च्चं तृतीयं सूक्तम् ;

तत्र, प्रथमा ।

१र २र ३ १ २ ३ १ २
प्रसोमासोअधन्विषुःपवमानासइन्दवः ।

२ २ ३ १ २
श्रीणानाअप्सुवृञ्जते ॥ १ * ॥

"पवमानासः" पूयमानाः "इन्दवः" दीप्ताः "सोमासः" सोमाः "प्राधन्विषुः" [धन्वति गतिकर्मा (निघ० २,१४,१४)] प्रगच्छन्ति किञ्च "श्रीणानाः"† गोभिः श्रयमाणाः "अप्सु" वसतीवरीषु‡ "वृजन्ते" गच्छन्ति [व्रज व्रजी गतौ (भ्वा०,प०)] सम्पृक्ता भवन्तीत्यर्थः ॥

"वृजन्ते"-"मृजन्त"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १र २र ३ २ ३ १ ३ १ २ ३ २
अभिगावोअधन्विषुरापोनप्रवतायतीः ।

३ १र २र
पुनानाइन्द्रमाशत ॥ २ ¶ ॥

* ऋ० वे० ६, ८, १४, १ ।

† 'श्रीणानाः—श्रीणनं मिश्रणं, मिश्रयमाणाः'—इति वि० ।

‡ 'अप्सु—सप्तम्या बहुवचनमिदं तृतीया-बहुवचनस्य स्थाने द्रष्टव्यम्, अद्भिः—इति वि० ।

¶ ऋ० वे० ६, ८, १४, २ ।

"गावः" गमनशीलाः* "इन्दवः" सोमाः "अभि अधन्विषुः" दशापवित्रमभिगच्छन्ति । किमिव ? "प्रवता" प्रवणवता देशेन "यतीः" गच्छन्त्यः "आपः नः" आपइव †, पश्चात् "पुनानाः" "इन्द्रं" प्रणीयितुम् आशत व्याप्नुवन् ॥२॥

अथ तृतीया ।

१ २         ३ १र    २र ३ १   १

प्रपवमानधन्वसिसोमेन्द्रायमादनः ।

१   २३ १र    २र

नृभिर्यतोविनीयसे ॥ ३‡ ॥

हे "पवमान" सोम ! "इन्द्राय" इन्द्रस्य "मादनः" मादयिता त्वं "प्रधन्वसि" प्रगच्छसि पवित्रम् । तदेवाह—"नृभिः" नेतृभि र्ऋत्विग्भिः "यतः" गृहीतः¶ "विनीयसे"§ दशविद्धानात्‖ ॥

"मादनः--"पातवे"—इति पाठौ ॥३ ॥

* 'गावः—आदित्यरश्मयः उदकानि सोमरसा गावश्च'—इति वि० ।

† 'आपोन—न-शब्द उपमार्थीयः आपइव "प्रवता यतीः" यथा प्रवणेन आपो गच्छन्ति तद्वत् सोमेन अभिषूयमाणेन गावो धन-धान्य-देवताश्च प्रवणा भवन्ति, अतउक्तं पुनाना इन्द्रमाशत'—इति वि० ।

‡ ऋ० वे० ६, ८, १४, ३ ।

¶ 'यतः—नियतः संयत इति यावत्, अथवा यमु बन्धने ऋत्विग्भिर्बद्धः सोमवहनेन'—इति वि० ।

§ 'विनीयसे—विविधं नीयसे'—इति वि० ।

‖ 'अथवा पवमान प्रधन्वसि पात्रं प्रतीन्द्रपानाय तदर्थं दशविधानात् विनीयसे' —इति ऋग्वेदीयका व्याख्या ।

अथ चतुर्थी ।

१ २　१२ १२　१२ ३१२　३१२
इन्दोयदद्रिभिःसुतःपवित्रम्परिदीयसे ।
१२ १ २ ३१ २
अरमिन्द्रस्यधाम्ने ॥ ४ * ॥

हे "इन्दो" त्वं "यद्" यदा "अद्रिभिः" ग्रावभिः "सुतः" अभिषुतः "पवित्रं" दशापवित्रं † "परिदीयसे" परिगच्छसीत्यर्थः । तदा "इन्द्रस्य" "धाम्ने" स्थानाय धारकायोदराय वा "अरं" पर्याप्तोऽसि ॥

"परिदीयसे"--"परिधावसि"—इति पाठौ ॥ ४ ॥

अथ पञ्चमी ।

१　२　३१ २३ १२　३१२
त्वꣳसोमनृमादनःपवस्वचर्षणीधृतिः ।
२ ३ १ २ ३ १ २
सस्निर्योअनुमाद्यः ॥ ५ ‡ ॥

हे "सोम !" "नृमादनः नृणां मादयिता "चर्षणीधृतिः" चर्षणीभिः ऋत्विग्भिः प्रजाभिः धृतस्त्वं "पवस्व" । "यः" त्वं "सस्निः" शुद्धः "अनुमाद्यः" स्तुत्यः ¶ स पवस्वेति समन्वयः ॥

"चर्षणीधृतिः"-"चर्षणीमहे"—इति पाठौ ॥ ५ ॥

---

* ऋ० वे० ६, ८, १४, ४ ।

† 'पवित्रं परिदीयसे—द्वितीयैकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् पवित्रस्योपरि दीयसे'—इति वि० ।

‡ ऋ० वे० ६, ८, १४, ५ ।

¶ 'अनुमाद्यः—यस्य पश्चात् देवता माद्यन्ति स अनुमाद्यः'—इति वि० ।

अथ षष्ठी ।

१ २ ३ १ २ ३ १ २ ३ १ २
पवस्ववृत्रहन्तमउक्थेभिरनुमाद्यः ।
१ २ ३ १ २ ३ २
शुचिःपावकोअद्भुतः ॥ ६* ॥

हे सोम! "वृत्रहन्तमः" शत्रूणामतिशयेन हन्ता त्वं "पवस्व" क्षर । कीदृशस्त्वम्? "उक्थेभिः" शस्त्रैः "अनुमाद्यः" स्तुत्यः "शुचिः" शुद्धः† "पावकः" अन्यस्य शोधकः‡ "अद्भुतः" महान्¶, एवं महानुभावः पवस्व ॥

"वृत्रहन्तमः"—"वृत्रहन्तम"—इति पाठौ ॥ ६ ॥

अथ सप्तमी ।

१ २ ३ १ २ ३ १ २ ३ १ २ २
शुचिःपावकउच्यतेसोमःसुतःसमधुमान् ।
२ १ २ ३ २
देवावीरघशंसहा ॥ ७ § ॥ ३

"सुतः" अभिषुतः "मधुमान्" माधुर्योपेतः "सः" सोमः "शुचिः" स्वयं शुद्धः "पावकः" शोधकश्च उच्यते तथा "देवावीः" देवाना-

---

* ऋ० वे० ६, ८, १४, ६ ।

† 'शुचिः—दीप्तः'—इति वि० ।

‡ 'पावकः—पावन स्वभावः'—इति वि० ।

¶ 'अद्भुतः—अपूर्वः नान्यो द्वितीयः'—इति वि० ।

§ ऋ० वे० ६ ८, १४, ७ ।

भविता तर्पयिता* "अघसंसहा" अघं पापं शंसतीत्यघशंसा असुरास्तेषां हन्तेति चोच्यते ॥

"सुतःसमधुमान्"-"सुतस्यमध्वः"—इति पाठौ ॥ ७ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य

प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीय-खण्डे—

प्रकविरिति सप्तर्चं प्रथमं सूक्तम्;

तत्र, प्रथमा ।

२ १ २ ३ १ २ १ २ ३ १ २
प्रकविर्देववीतयेऽव्यावारेभिरव्यत ।

३ १ २र ३ १र २र
साह्वान्विश्वाअभिस्पृधः ॥ १† ॥

*"कविः" मेधावी सोमः "देववीतये" देवानां पानाय "अव्यावारेभिः" अविसम्बन्धिभिः वालैः दशापवित्रेण "अव्यत" अव्यते प्राप्यते, "साह्वान्" शत्रूणां साढा‡ सोमः "विश्वाः स्पृधः" सर्वान् सङ्ग्रामान् हिंसकान् वा अभिभवतीति शेषः ॥

"अव्यावारेभिरव्यत"-"अव्योवारेभिरर्षति"—इति पाठौ ॥ १ ॥

---

* 'देवावीः—देवानां भक्षणभूतः'—इति वि० ।

† ऋ० वं० ६, ८, १०,२।

‡ 'साह्वान्—साधन-स्वभावः'—इति वि० ।

अथ द्वितीया ।

१२ १२ ३ २ ३ २उ ३ १ २ ३ १ २

स हि ष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति ।

१ २ ३ १ २

पवमानः सहस्रिणम् ॥ २ * ॥

"स हि ष्मा" स खलु "पवमानः" सोमः "जरितृभ्यः" स्तोतृभ्यः "गोमन्तं" "बहुभिर्गोभिर्युक्तं" "सहस्रिणं" सहस्र-सङ्ख्याकं† "वाजम्" अन्नम् "आ" आभिमुख्येन "इन्वति" व्याप्नोति प्रयच्छतीत्यर्थः ॥ २ ॥

अथ तृतीया ।

२३ १ २ ३ १ २ ३ २ ३ १ २ ३ २

परि विश्वानि चेतसा मृज्यसे पवसे मती ।

१ २ ३ १ २

स नः सोम श्रवो विदः ॥ ३ ‡ ॥

हे "सोम!" त्वं "चेतसा" स्वीयेनास्मदनुकूलेन चित्तेन "विश्वानि" सर्वाणि धनानि "मती" मत्या अस्मत्स्तुत्या "मृज्यसे" दशापवित्रेण शोध्यसे । ततः "पवसे" रसं क्षरसि ।

---

* ऋ० वे० ६, ८, १०, २ ।

† 'सहस्रिणं—सहस्र-पोषण-समर्थम्'—इति वि० ।

‡ ऋ० वे० ६, ८, १०, ३ ।

एवम्भूतः "सः" त्वं "नः" अस्मभ्य "अवः" अन्नं* "विदः"† देहीति शेषः ॥

"मृज्यसे"-मृशसे"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी ।

३क २र ३ १ १ २र ३ १ १ ३ १ ३ २
अभ्यर्षबृहद्यशोमघवद्भ्योध्रुवꣳरयिम् ।
१ २ ३ २ ३ १ २
इषꣳस्तोतृभ्यआभर ॥ ४ ‡ ॥

हे "सोम !" त्वं "बृहद् यशः" महतीं कीर्त्तिम् "अभ्यर्ष" अभिगमय, "मघवद्भ्यः" हविष्मद्भ्यः¶ अस्मभ्यं "ध्रुवं"§ रयिं "धनं" च अभ्यर्ष । किञ्च "इषम्" अन्नं‖ "स्तोतृभ्यः" अस्मभ्यम्** "आभर" आहर ॥ ४ ॥

अथ पञ्चमी ।

१ ३र ३ १र २र २ १ २
त्वꣳराजेवसुव्रतोगिरःसोमाविवेशिथ ।
३ १ २
पुनानोवह्नेअद्भुत ॥ ५ †† ॥

---

* 'अवः—अन्नं यशो वा'—इति वि० ।

† 'विदः—विद ज्ञाने, विद्लृ लाभे, विद सत्तायाम् । अन्नलाभकरः'-इति वि० ।

‡ ऋ० वे० ६, ८, १०, ४ ।

¶ 'मघवद्भ्यो यजमानेभ्यः—इति वि० ।

§ 'ध्रुवं स्थिरं'—इति वि० ।

‖ 'इषम् अन्नं इष्टिं वा'—इति वि० ।

** 'स्तोतृभ्यः यजमानेभ्यः'—इति वि० । †† ऋ० वे० ६, ८, १०, ५ ।

हे "वह्ने" यज्ञादेर्वोढः ! "अद्भुत !"* "सोम!" "सुव्रतः" सुकर्मा "पुनानः" त्वं "राजा इव" "गिरः" अस्मदीयाः "स्तुतीः "आविवेशिथ" आविशसि ॥ ५ ॥

अथ षष्ठी ।

१र २र १ २ ३१२ ३ १ २ ३ १ २
स वह्निरप्सुदुष्टरोमृज्यमानोगभस्त्योः ।

१ २ ३१२
सोमश्चमूषुसीदति ॥ ६ † ॥

"सः" सोमः "वह्निः" यज्ञादेर्वोढा "अप्सु" अन्तरिक्षे वर्त्तमानः "दुष्टरः" दुःखेन अन्यैस्तरणीयः "मृज्यमानः" शोध्यमानः "गभस्त्योः" हस्तयोः‡ एवम्भूतः सन् "चमूषु" पात्रेषु "सीदति"¶ ॥ ६ ॥

अथ सप्तमी ।

३ २ ३१र २र ३२ ३ १ २
क्रीडुर्मखोनमꣳहयुःपवित्रꣳसोमगच्छसि ।

१ २ ३ २ ३ १ २
दधत्स्तोत्रे सुवीर्य्यम् ॥ ७ § ॥ ४

* 'अद्भुतमभूतपूर्वं'—इति वि० ।

† ऋ० वे० ६, ८, १०, ६ ।

‡ 'गभस्त्योः—बाह्वोः'—इति वि० ।

¶ 'चमूषु सीदति—भक्षणीयेषु तिष्ठति'—इति वि० ।

§ ऋ० वे० ६, ८, १०, ७ ।

हे "सोम!" "ओकु ओकन-शीलत्वं "मंहयुः"* [मंहति-दानकर्मा (निघ० ३,२०,१०) दानेच्छुः "मघो न" दानमिव "पवित्र" "गच्छसि"। किं कुर्वन्? "स्तोत्रे" स्तुतिकर्त्रे "सुवीर्यं" शोभन-वीर्यं "दधत्" प्रयच्छन् ॥ ७॥ ४

अथ यवंयवमिति चतुर्ऋचं द्वितीयं सूक्तं;

तत्र, प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २

यवंयवन्नोअन्धसापुष्टम्पुष्टम्परिस्रव।

१ २ ३ १ २

विश्वाचसोमसौभगा ॥ १† ॥

हे "सोम"। त्वं "नः" अस्मभ्यम् "पुष्टंपुष्टम्"‡ अत्यन्तं बहुलं "यवंयवं"¶ पुनःपुनर्युतं रसम् "अन्धसा" अन्नरूपया धारया "परिस्रव" क्षर [तत्र प्रार्थयितुस्तृष्णयात्यन्तं पीड़ितत्वात् "आबाधे च (८,१,१०)"—इति द्विर्भावः। आबाधनमाबाधः पीड़ा प्रयोक्तृधर्मो नाभिधेयधर्म इत्युक्तम्]। अपिच "विश्वा" विश्वानि "सौभगा"§ सौभगानि धनानि परिस्रव अस्मभ्यं प्रयच्छेत्यर्थः॥ १॥

---

* 'मंहयु —पूजेयुः अथवा मंहयुः पूजाकारः—इति वि०।

† ऋ० वे० ७ १, १२, १।

‡ 'परिस्रवसामान्या पुष्टिः धनधान्यादिना वर्धयिको पुष्टिः यशनिष्पादिका'—इति वि०।

¶ 'यव—अभ्यासे भूयानर्थं प्रतीयते। यवं धान्यविशेषं चरुपुरोडाशभूतो वेत्युभूतम्'—इति वि०

§ "सुपांसुलुक् (७, १, ३९)"—इत्याकारूपम।

अथ द्वितीया ।

१ ३ २ ३ २३ १ २ ३ १ २ ३ १र २र

इन्दोयथातवस्तवोयथातेजातमन्धसः ।

२ ३ १ २ ३ १ २

निबर्हिषिप्रियेसदः ॥ २* ॥

हे "इन्दो" सोम ! "अन्धसः" अन्नरूपस्य "तव" सम्बन्धी "स्तवः" स्तवनं स्तोत्रं† तथा "ते" तव "यथा जातं" यथा प्रादुर्भूतमस्ति, तथा त्वं "प्रिये" प्रीतिवर्धितरि "बर्हिषि" अस्मद्यज्ञे "नि सदः"‡ निषण्णो भव ॥ २ ॥

अथ तृतीया ।

२ १ २ ३ १ २ ३ १र २र ३ १ २

उतनोगोविदश्ववित्पवस्वसोमान्धसा ।

३ १ २ ३ १ २

मक्षूतमेभिरहभिः ॥ ३¶ ॥

"उत" अपि च हे "सोम !" "नः"§ अस्माकं "गोवित्" गोप्रदः‖ "अश्ववित्" अश्वप्रदश्च त्वं** "मक्षुतमेभिः" मक्षुतमैः अतिशयेन शीघ्रैः "अहभिः" अहोभिर्हेतुभिः "अन्धसा पवस्व" अन्नरूपया धारया क्षर ॥ ३ ॥

---

* 'तव स्तवः क्रियते स्तोत्र-शस्त्रात्मकः' —इति वि० ।

† ऋ० वे० ७, १, ११, १ ।

‡ 'नि—नितराम्'—इति वि० ।

¶ 'नः—अस्मभ्यम्'—इति वि०

§ ऋ० वे० ७, १, ११, २ ।

‖ 'गोविद्—गवाम्'—इति वि०

** 'अश्वविद्—अश्वानाम्'—इति वि० ।

अथ चतुर्थी।

१ २ ३ २ ३१र २र३१ १ २ ३ १ २

योजिनातिनजीयतेहन्तिशत्रुमभीत्य।

१ २

सपवस्वसहस्रजित्॥ ४ *॥ ५

हे "सहस्रजित्" असङ्ख्यात-शत्रूणां जेतः! † सोम! "यः" भवान् "जिनाति" शत्रून् जयति स्वयं शत्रुभिः "न जीयते"। प्रकारान्तरेण तदेवाह—"शत्रुमभीत्य" स्वयमेव शत्रुमागत्य "हन्ति" किन्तु तेन न हन्यते इति शेषः। एवम्भूतः स त्वं धारया क्षर॥ ४॥ ५

अथ तृचात्मके तृतीयसूक्ते—

प्रथमा।

२ ३ १ २ ३ १र २र ३ १ २

यास्तेधारामधुश्चुतोऽसृग्रमिन्द ऊतये।

१ २ ३ २ ३ १ २

ताभिःपवित्रमासदः॥ १ ‡॥

भो "इन्दो" सोम! "ते" तव "मधुश्चुतः" मधुर-रसस्य स्रावयित्र्यः "याः" "धाराः" "ऊतये" रक्षणाय "असृग्रं" सृज्यन्ते "ताभिः" धाराभिः त्वं "पवित्रम्"¶ "आसदः" आसीद॥ १॥

---

* ऋ० वे० ७, १, १२, ४।

† 'स पवस्व सहस्रजित् सहस्राणां जेता'—इति वि०।

‡ ऋ० वे० ७, १, २५, २।

¶ 'पवित्रं'—दशापवित्रम्'—इति वि०।

अथ द्वितीया।

२ ३१२ ३१२३१र २र३ १ २
सोअर्षेन्द्रायपीतयेतिरोवाराण्यव्यया।

१२३१ ३१ ३२
सीदन्नृतस्ययोनिमा॥ २ *॥

हे सोम! "सः" अभिषुतः त्वम् "अव्यया" अविमयानि "वाराणि" वालानि "तिरः" तिरस्कुर्वन् "ऋतस्य" यज्ञस्य "योनिं" कारणभूतं दशापवित्रम् "आसीदन्" आभिमुख्येन उपविशन् "इन्द्राय" इन्द्रस्य "पीतये" पानाय "अर्ष" चर॥

"ऋतस्ययोनिमासीदन्"-"योमावनेषु"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३१२ ३१ २ ३ १ २
त्वꣳसोमपरिस्रवस्वादिष्ठोअङ्गिरोभ्यः।

३ २१ १र २र
वरिवोविद्घृतम्पयः॥ ३ †॥ ६

हे "सोम!" "स्वादिष्ठः" स्वादुतमः "वरिवोवित्"‡ अस्मदभिलषितस्य धनस्य लम्भकश्च त्वम् "अङ्गिरोभ्यः" अङ्गिरसा-

---

* ऋ० वे० ७, १, २५, २।

† ऋ० व० ७, १, २५, ४।

‡ 'वरिवोवित्—वरिव:=वरिष्ठः; वित्=भक्ष.'—इति वि०।

मथीय* "घृतं" दीप्तं "पयः" चीरवत् सारभूतं रसं "परिस्रव" परिचर ॥

"त्वं सोम"-"त्वमिन्दो" —इति पाठौ ॥ ३ ॥ ६ ॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य
द्वितीयः खण्डः‡ ॥ २ ॥

---

अथ तृतीय-खण्डे¶—

प्रथम-तृचे, प्रथमा ।

१ २ १ १ ३क २र २ १ २
तवश्रियोवर्ष्यस्येवविद्युतो

१र २ २ १ १ ३ १ २
ग्नेश्चिकित्रउषसामिवेतयः ।

१र २र ३ १ १ ३ १ १ २
यदोषधीरभिसृष्टोवनानिच

१ १ ३१ २ ३ १र ३र ३ १ २
परिस्वयश्चिनुषेअन्नमासनि ॥ १ §॥

"अग्नेः" अङ्गनादि-गुण-युक्तस्य "तव" "श्रियः" रश्मि-लक्षणा विभूतयः "चिकित्रे" प्रज्ञायन्ते । तत्र दृष्टान्तः—"वर्षस्येव‖

* 'अङ्गिरोभ्यः—अङ्गिरो नाम देवास्तेभ्योऽर्थे'—इति वि० ।

† "घृतमाज्यम्"—इति कस्य दीयव्याख्या ।

‡ 'उक्तं वक्ष्यिष्यमाणं । त्रिपर्वं सौमिकञ्च तत् । पञ्चममन्त्र:'—इति वि० ।

¶ 'इदानीमाज्यानि; आग्नेयम्प्रथममाज्यम्'—इति वि० ।

§ ऋ० वे० ८, ४, २०, ५ ।

‖ मूले तु "वर्षस्येव „ —इति स-वकारः श्रूयते ।

विद्युतः" यथा वर्षितुर्मेघस्य सम्बन्धिन्यो विद्युतः, "उषसामिवेतयः" यथा चोषसाम् 'एतयः' गमनशीलाः व्याप्ताः प्रकाशाः प्रजायन्ते, तद्वदित्यर्थः। कदेत्यत्राह—"यद्" "यदा" त्वम् "ओषधीः" व्रीहियवाद्याः "वनानि" अरण्यानि च अभिसृष्टो सृष्टः इन्धुं विसृष्टः सन् "स्वयम्" आत्मना "आसन्" आस्ये मुखे "अन्नम्" अदनीयं स्थावर-लक्षणं "परि चिनुषे" परिक्षिपसीत्यर्थः॥

"विद्युतोऽग्ने:"-"विद्युतश्चित्रा"—इति, "उषसामकेतवः"-"उषसामिवेतयः"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ २ ३उ ३ १ २
वातोपजूतइषितोवशाꣳअनु
३ २उ ३ १ २ ३ १ २
तृषुयदन्नावेविषद्वितिष्ठसे।
१ २ ३ २ ३२ १२
आतेयतन्तेरथ्योऽ३ऽयथापृथक्
१ २ ३ १ २ १ १ २
शर्द्धाꣳस्यग्ने अजरस्यधक्षतः॥ २*॥

हे "अग्ने!" त्वं "यद्"यदा "वातोपजूतः" वायुना कम्पितः† "वशान्" कान्तान् वनस्पतीन् 'अनु' प्रति "तृषु" क्षिप्रम्

---

* ऋ० मे० ८, ४, ११, १।

† 'वातोपजूतः—वातयुतः'—इति वि०।

"इषितः" प्रेषितः* सन् "वना" वनानि अदनीयानि वनस्थानादीनि स्थावराणि "वेविषत्" व्याप्नुवन् "वितिष्ठते" इतस्ततो गच्छति; तदानीम् "अजरस्य" जरा-रहितस्य "धक्षतः" दहतः "ते" तव "शर्धांसि"† तेजांसि "यथा" "रथ्यः" रथिनः तद्वत् "आ पृथक्" पृथगायन्त गच्छन्ति ॥

"अजरस्य"-"अजराणि"—इति पाठौ ॥ २ ॥

अथ तृतीया।

मेधाकारंविदथस्यप्रसाधन

मग्निंहोतारम्परिभूतरम्मतिम्।

त्वामर्भस्यहविषःसमानमित्त्वा

महोवृणतेनान्यन्त्वत्॥ ३‡ ॥ ७

"मेधाकारं" प्रज्ञायाः कर्त्तारं "विदथस्य" यज्ञस्य "प्रसाधनम्" प्रकर्षेण साधकं "होतारं" देवानामाह्वातारं "परिभूतरम्" अतिशयेन शत्रूणा मभिभवितारं "मतिं" मन्तारं "यं" "त्वाम्" "अग्निम्" वयमृत्विजः वृणीमहे—इति शेषः। हे अग्ने! "त्वामित्" त्वामेव "अर्भस्य" अल्पस्यास्य "हविषः"

* 'इषितः—इषु इच्छायाम्, इच्छासंयुक्तः'—इति वि०।

† 'शर्धांसि—बलानि'—इति वि०।

‡ ऋ० वे० ८, ७, १९, १।

पुरोडाशादिकस्य भक्षणार्थमिति शेषः । "समानमित्" सर्वेव ऋत्विजः "वृणते" प्रार्थयन्ते "मह:" महतः सोमात्मकस्य हविषः भक्षणार्थं त्वामेव वृणते "त्वत्" त्वत्तः "अन्यम्" अतिरिक्तं देवं "न" वृणते ॥

"परिभूतरं"-"परिभूततमम्"—इति छन्दोगबह्वृचानां पाठौ, "त्वामभ्यस्य हविषः"-"तमिदर्मस्य हविषि"—इति, "इत्वाभ्यहो"-"तमिभ्यहो"—इति च ॥ ३ ॥ ७

अथ द्वितीय-तृचे—प्रथमा ।

३ १ २ ३ १र १र २ १ २
पुरूरुणाचिध्यस्त्यवोनूनंवांवरुण ।

२ ३१ २ ३ १
मित्रवꣳसिवाꣳसुमतिम् ॥ १ * ॥

हे मित्रावरुणौ ! "वां" युवयोः "पुरूरुणा" [प्रथमार्थे तृतीया (३,१,८५)† पुरोरपि बहु उरु बहुतरम् अथवा पुरु च तदुरु च पुरूरु] अत्यन्तं बहुतरमित्यर्थः, तादृक् "अवः" रक्षणं "नूनं" निश्चयेन "अस्ति हि" [हि प्रसिद्धौ; चिदिति पूरणः] हे "वरुण!" हे "मित्र !" "वां" युवयोः "सुमतिम्" अनुग्रह-बुद्धिम् "वंसि"‡ सम्भजेयम् ॥ १ ॥

---

* ऋ० वे० ४, ४, ८, १ ।

† "अत्र सोः सुपांसुलुगित्याकारः"—इति ऋ०-व्याख्या ।

‡ 'वंसि—वासयसि'—इति वि० ।

अथ द्वितीया।

१ २ २ १ २ २ १ २ १ २
ताबा॑सम्यगद्रुह्वाणेषमश्यामधामच।

२ १ २
वयंवाम्मित्रास्याम॥ २* ॥

हे "अद्रुह्वाणा" हे अद्रोग्धारौ! "ता" तौ प्रसिद्धौ "वां" युवां सम्यक् स्तुमइति शेषः। स्तोतारः "वयम्" "इषम्" अन्न- "धाम च" आधारम् "अश्याम" प्राप्नुयाम। हे "मित्रा" मित्रावरुणौ! "वां" स्तोतारौ वयं "स्याम" भवेम समृद्धा इति शेषः, युवाभ्यां स्वभूता वा स्याम॥

"धामच"-"धायसे"—इति पाठौ, "मित्रा"-"रुद्रा"—इति च॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ १ २ ३ २
पा॑तन्नोमित्रापायुभिरुतत्रायेथासुत्रात्रा।

३ २ ३ १ २ ३ १ २
साह्यामदस्यून्तनूभिः॥ ३† ॥८

हे "मित्रा" मित्रावरुणौ देवौ! युवां "नः" अस्मान् "पायुभिः" रक्षणैः "पातं" रक्षतम्। "उत" अपिच "सुत्रात्रा" शोभनेन

* ऋ० सं० ४, ४, ८, २।

† ऋ० सं० ४, ४, ८, ३।

त्राणेन "त्रायेथां" पालयेथाम् [इष्टप्रापणानिष्ट-परिहार-भेदेन भेदः —स्तोत्रादि-वैकल्याच्छत्रोर्वा त्रायेथाम् अभिमत-प्रापणेन रक्षत-मित्यर्थः ]। वयञ्च "तनूभिः" * पुत्रादिभिः सहिताः स्वीयै-रङ्गैर्वा "दस्यून्" शत्रून् "सह्याम" अभिभवेम ॥

"मित्रा"-"रुद्रा"—इति पाठौ, "त्रायेथां"-"त्रायेताम्"—इति, "सह्याम"-"तुर्याम"—इति च ॥ ३ ॥ ८

अथ तृतीय-तृचे †—

प्रथमा ।

३ २ ३ १ २ ३ २ ३ १र २र
उत्तिष्ठन्नोजसासहपीत्वाशिप्रे अवेपयः ।
१ १ २ १ ३ २
सोममिन्द्रचमूसुतम् ॥ १‡ ॥

हे "इन्द्र !" त्वं "पीत्वा" "ओजसा" बलेन "सह" "उत्तिष्ठन्"¶ "शिप्रे" हनू "अवेपयः" अकम्पयः मदावेशादिति भावः । किं पीत्वा ? "चमू" चम्वोरधिषवण-फलकयोः "सुतम्" अभिषुतम् "सोमम्" ॥

"पीत्वा"-"पीत्वी"—इति पाठौ ॥ १ ॥

---

* 'तनूभिः—त्रिभिः युष्माभिः शरीरैरभिष्टुतैरिति वाक्यशेषः'—इति वि० ।

† 'ऐन्द्रसाम्यम्'—इति वि० ।

‡ उ० वे० ८, ३९ = ऋ० वे० ६, ४, २८, ४ ।

¶ 'उत्तिष्ठन्—ओजसा सह वीर्येण उत्थानं कुरु । सोमं पिब । पीत्वा शिप्रे हनूनासिके च मत्तः सन् अवेपयः'—इति वि० ।

अथ द्वितीया ।

१ २ ३ १ २ ३ १र २र
अनुत्वारोदसीउभेस्पर्द्धमानमददेताम् ।
१ २ १ २ ३ १ २
इन्द्रयद्दस्युहाभवः ॥ २* ॥

हे "स्पर्द्धमान" शत्रुभिः सह स्पर्द्धाङ्कुर्वाण इन्द्र ! "त्वा" त्वाम् "अनु" लक्ष्य "उभे रोदसी" उभे अपि द्यावापृथिव्यौ "मदेतां" हृष्येताम् "यद्" यदा "दस्युहा भवः" शत्रूणां हन्ता भवसि, तदा मदेतामिति सम्बन्धः ॥

"स्पर्द्धमानमदेतां"-"क्षयमाणमकपेताम्"—इति पाठौ ॥२ ॥

अथ तृतीया ।

१ १ २ १ २ ३ १र २र ३ १ १
वाचमष्टापदीमहन्नवस्रक्तिमृतावृधम् ।
२ ३ १ २ ३क २र
इन्द्रात्परितन्वम्ममे ॥ ३† ॥ ९

"अष्टापदीम्" अष्टाभिर्दिग्भिर्विदिग्भिश्चाष्टापदीं,‡ "नवस्रक्तिम्" उपरिस्थितेनादित्येन नवस्रक्तिम् आसु दिक्षु व्याप्तामि-

---

* ऋ० वे० ६, ५, २८, ५ ।

† ऋ० वे० ६, ५, २९, ३ ।

‡ 'अष्टापदीम्—चत्वारो वेदाः स्राक्षाणि च अष्टापदानि'—इति वि०

त्यर्थः*, "ऋतावृधं" यज्ञस्य वृद्धिं कुर्वन्तीं,† "वाचं" स्तुतिमयीं, परिपूर्णात्‡ "तन्व तनू न्यूनां सतीम्¶ "अहम्" "परि ममे" न्यूनियसां करोमीत्यर्थः§। कार्त्स्न्येन स्वरूपं स्तुत्या विषयीकर्तुमशक्यत्वादितिभावः॥

"ऋतावृधम्"-"ऋतास्पृशम्"—इति पाठौ॥३॥९

अथ चतुर्थ-तृचे॥—

प्रथमा।

१ २    ३ २ ३ २    १र    २र
इन्द्राग्नीयुवामिमेऽ३भिस्तोमाअनूषत।
१ २    ३ २
पिबतꣳशम्भुवासुतम्॥१**॥

हे "इन्द्राग्नी!" "युवाम्" "इमे" "स्तोमाः" स्तोतारः†† "अभ्यनूषत" अभिष्टुवन्ति। हे "शम्भुवा" सुखस्य भावयितारा विन्द्राग्नी "सुतम्" अभिषुतम् अस्मदीयं सोमं "पिबतम्"॥१॥

---

* 'नवस्रक्ति'—नव स्रक्तयः कोणाः ताः कल्पिद्यमानाः ऋचो नव अथवा नवस्रक्ति त्रिवृत्स्तौमिकम्'—इति वि०।

† 'ऋतावृधम्—ऋतो यज्ञः अथवा ऋत सत्यं तं वर्द्धयतीति ऋतावृधम्'-इति वि०।

‡ 'इन्द्रान् परि—उपरि'—इति वि०।

¶ 'तनु'—शरीरम्'—इति वि०।

§ 'ममे—मिनोति'—इति वि०।

|| 'ऐन्द्राग्नमाज्यम्'—इति वि०।

** ऋ० वे० ४, ८, २४, १।

†† 'स्तोमास्त्रिवृत्पञ्चदशादयः'—इति वि०।

अथ द्वितीया ।

१ २  १ २  ३ १ २  ३ १ २ ३ १ २
याबाꣳसन्तिपुरुस्पृहोनियुतोदाशुषेनरा ।
१ २ ३ २  ३ १ २
इन्द्राग्नीताभिरागतम् ॥२* ॥

हे "नरा" नेतारौ ! "इन्द्राग्नी !" "वां" युवयोः स्वभूताः "पुरुस्पृहा" पुरुभिर्बहुभिः स्पृहणीया† "दाशुषे" हवींषि दत्तवते यजमानार्थम् उत्पन्नाः "नियुतः" अश्वाः "सन्ति"‡ हे इन्द्राग्नी ! "ताभिः" "नियुद्भिः" सह "आगतम्" आगच्छतम् ॥ २ ॥

अथ तृतीया ।

२ ३ १ २  ३ २ ३ १२  ३१  ३ २
ताभिरागच्छतन्नरोपेदꣳसवनꣳसुतम ।
१ २ ३ १ २
इन्द्राग्नीसोमपीतये ॥ ३¶ ॥ १०

हे "नरा" नेताराविन्द्राग्नी ! [ सूयतेऽभिसूयतइति सवनः सोमः] "इदं सवनम्"§ इमं सोमं "सुतम्" अभिषुतम् "उप"

---

* ऋ० वे० ४, ८, २४, २ ।

† 'पुरुस्पृहा—पुरुस्पृहौ बहुभिः स्पृहणीयौ'—इति वि० ।

‡ 'सन्ति—बहुवचनमिदं द्विवचनस्य स्थाने द्रष्टव्यम्, सतः'—इति वि० ।

¶ ऋ० वे० ४, ८, २४, ४ ।

§ 'इदं प्रातःसवनं सुतं सोमम्'—इति वि० ।

प्रति* [यद्वा, इदं प्रातःसवनम् उप अस्मिन् सवने सुतमभिषुतं सोमं प्रति] "ताभिः" नियुद्भिः† आगच्छतम् । किमर्थम् ? "सोमपीतये" अस्य सोमस्य पानार्थम् ॥ ३ ॥ १०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य

तृतीयः खण्डः‡ ॥ ३ ॥

अथ चतुर्थ-खण्डे¶, प्रथम-तृचे—

प्रथमा ।

१ २ ३ १ २ ३ १र २र ३ १ २

अर्षा सोम द्युमत्तमोभि द्रोणानि रोरुवत् ।

२ ३ १ ३ १ ३ २

सीदन्योनौ वनेष्वा ॥ १§ ॥

हे "सोम" पवमान ! "द्युमत्तमः" अतिशयेन दीप्तिमान् "वनेषु" अरण्येषु मध्ये|| "योनौ" स्वकारण-भूते पर्वतादि-

---

* 'उप—समीपे'—इति वि० ।

† 'ताभिः—तृतीया-बहुवचनमिदं, लौकिकं व्यत्ययेन तैः पालनैः'—इति वि० । "नियुतो वायोः"—इति च निघ० १, १५, १० ।

‡ 'उक्तं प्रातःसवनम्'—इति वि० ।

¶ 'इदानीं माध्यन्दिनं सवन मभिधीयते'—इति वि० ।

§ ऋ० आ० ६, १, २, ७ ( २भा० ६२ पृ० ) = ऋ० वे० ७, २, ४, ४ ।

|| 'वपु—उदकेषु'—इति वि० ।

स्थाने * "आसीदन्" सर्वतो गच्छंस्त्वं "द्रोणानि" [प्रयोग-बाहुल्यापेक्षमेतत् बहुवचनम्] द्रोणकलशान्† "अभि" लक्ष्य "रोरुवत्" पुनः पुनः भृशं वा शब्दं कुर्वन् "अर्षा" ‡ आगच्छ दशापवित्रमध्यान्निर्गतः सोमः अविच्छिन्न-धारया द्रोणकलशे पतन् शब्दं करोति खलु ॥

"योनौवनेष्वा' -"श्येनोमयोनिम।"—इति पाठो ॥ १ ॥

अथ द्वितीया ।

३ १र　२र　१ २३१२　११२
अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः ।
१ २　३ १ २
सोमा अर्षन्तु विष्णवे ॥ २¶ ॥

"अप्सा" वसतीवरी-नामधेयानामपां सम्भक्तारः [वनषण सम्भक्तौ (भ्वा, प०); "जनसनेति (३,२,६७,) विट्, आत्वं विड्-वनोरिति (६,४,४१,) तादृशाः] "सोमाः" "अर्षन्तु" द्रोण-कलशमागच्छन्तु । किमर्थम्? "इन्द्राय" सर्वदेवानां प्रथमत एव इन्द्रः सोमान् पिबति, तस्मात् तदनु वायुरतः तस्मै च "वायवे", तदनन्तरं वरुणः सोमान् पिबति तस्मै च "वरुणाय", ततो "मरुद्भ्यः" एतन्नामकेभ्यो देवेभ्यः, "विष्णवे" सर्वजगद्-

---

* 'योनौ—द्रोणकलशे'—इति वि० ।

† 'द्रोणानि—द्रोणकलशसम्बन्धानि पात्राणि'—इति वि०

‡ "द्व्यचोऽतस्तिङः (६,३,१३५)"—इति दीर्घः ।

¶ऋ० वे० ७, १, ५, १ ।

व्यपिने एतन्नामकाय देवाय च,—एतेभ्यः सर्वेभ्यः सोमा आगच्छन्त्वित्यर्थः॥

"सोमा अर्षन्तु"-"सोमो अर्षति"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १ १ ३ १ २३ १ २ ३ १ २
इषन्तोकायनोदधदस्मभ्यꣳसोमविश्वतः।

१ २ ३ १ २
आपवस्वसहस्रिणम्॥ ३*॥ ११

हे "सोम!" त्वं "नः" अस्माकं "तोकाय"† पुत्राय "इषम्" अन्नं "दधद्" विदधत् प्रयच्छन् "सहस्रिणं" सहस्रसङ्ख्याकं धनं "विश्वतः" सर्वतः "अस्मभ्य" च "आपवस्व" आप्रापय अस्मभ्यं पुत्राय च अन्न-धनादिकं प्रयच्छेत्यर्थः॥ ३॥ ११

१ र र १ २ १ र र
॥शाकलम्॥ अर्षासोमा२द्युमत्तमाः। अभिद्रोणा

२ १र २ १ १ र २ १
निरोरू२३वात्। सायिदा२न्। योनौवना २ ३ यि।

१ २ ५ १ र २ १
ऊम्। षू३४५वो६हायि॥(१) अषाइन्द्रा२यवायवायि।

र २ १ २ १ १ २ १
वरुणायमरुद्भ्या२३याः। सोमा२ः। आर्षन्तुवा२३यि।

---

* ऋ० वे० ७,१,५,१,।

† 'पुत्राय पौत्राय'—इति वि०।

१ २ ५ १ र र १
ऊम्। ष्णा ३ ४ ५ वो६हायि ॥(२) इषन्तोका २यनोद

२ १ र २ १ २ १ १
धात्। अस्मभ्य२सोमविश्वा२३ताः। आपा२। वास्व

२ १ १ २ ५
सहा२३। ऊम्। स्वा३४५यिणो६हायि(३) ॥ ३* ॥ [१]

२ र र १ २ १ २
॥ वार्शम् ॥ अर्षासोमा। द्युमात्ता३माः। अभि

र १ ३ ५ १ र २
द्रो। णा। निरो२ह्व२३४वात्। सायिदन्योना३उ।

२ १र १ २ ५र र २ र
इ३या। वने। षू२वा२३४औहोवा ॥(१) अप्साइन्द्रा।

१ २ १ १ २ र १ ३ ५
यवाया३वायि। वरुणा। या। मरु२ड्भा२३४याः। सो

२ २ १ ३ ५र र
माअर्षा३। इ३या। तुवि। ष्णा२वा२३४औहोवा ॥(२)

२ र १ २ २ १ १
इषन्तोका। यनोदा३धात्। अस्मभ्यम्। सो। मवा

३ ५ १ २ २ १
२यिश्वा२३४ताः। आपवस्वा३। इ३या। सह। स्वा

३ ५र र २ ४
२यिणा२३४औहोवा। ऊ३२३४पा(३) ॥ ४† ॥ [२]

१ २ १ २
॥ सन्तनि ॥ अर्षाहाउ। सोमद्युमा ३ १ उवा २ ३।

* ऊ० गा० ३प्र० १ख० ३सा०।

† ऊ० गा० ३प्र० १ख० ४सा०।

५ १ २ २२ १२ ३ ११११ १ २ १
ता२३४मा: । अभिद्रोणानिरोरुवा२३४५त् । सीदान्हा

१ २ १ ५ १ १२
उ । योनौवना३१उवा२३यि । पू२३४वा ॥(१) अस्मा

२ १ २ १२२ १ २२ १ १ ३ १ १ १ १ १२ १
इन्द्रायवायवेवरुणायमरुद्भिया२ ३ ४ ५: । सोमाद्दाउ ।

१ १ ५ १ १२ १२
आर्षन्तुवा३१उवा२३यि । ष्णा२३४वे ॥(२) इषन्तोका

२२ १ १ १ २२ १ ३ १ १ १ १ १२ १ १
यनोदधदस्मभ्यꣳसोमविश्वता२३४५: । आपाद्दाउ । वा

१ ५
स्वसद्दा३१उवा२३ । सो२३४णाम्(३) ॥ १३* ॥ [३]

१ १ २ १२ २ २ १
॥ आकारवर्णम् ॥ आयिषाम् । तोकायनोदधात् ।

१ १ २ १ १ २
अस्मभ्यम् । सोमवा२यि । श्वता३१उवा२३ । ऊ ३ ४

५ २२ १ १ १ १ १ १
पा । आपवा२३स्वा । सद्दक्षिणा३माउवा२३ । ऊ३२

५
३४पा(३) ॥ १८ ॥ [४]

२ २ १ २ १ २ २ १ २ १
॥ जराबोधीयोत्तरम् ॥ इषन्तोकोवा । यानोदधात् । अस्मा

---

* ऊ० गा० ७प्र० २अ० १२सा० ।

† ऊ० गा० १ ०प्र० १अ० १८सा० ।

२ १ २ १ ४ ५
भ्या२३४सो । मविश्वाताः । आपाघा१स्ता२३सा । च ।

२ १
स्विणो३४५ई । डा(३) ॥ १५* ॥ [५]

१ २ १ १ १
॥ मार्गीयवम् ॥ अप्सौहोवा । आयिन्द्रा२ । य

१ ३ ५ १ २२ १ २ १२ २
वाया२३४वायि । वरुणाय । मरुद्भ्या१या २: । सोमाः ।

१ १ २ ५ १ ३ ५२ २
चा । औ३चोयि । आ२३४र्षा । तूरवा२३४औहोवा ।

२ १ १ १ १ १
ए३ । ष्पवा२३४५यि(२) ॥ २† ॥ [६] ११

अथ प्रमाथकल्पे द्वितीयसूक्ते—

प्रथमा ।

१ २ ३ १ ३ २ ३ १ ३ २ ३ १ २
सोम उष्वाणः सोतृभिरधिष्णुभिरवीनाम् ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ १‡ ॥

---

* अ० गा० ११प्र० १अ० १५खा० ।

† ऊ० गा० १९प्र० २अ० २खा० ।

‡ ऋ० मा० ६, १, २, ५ ( २भा० ८८पृ० ) = ऋ० वे० ७, ५, १३, ६ ।

"सोतृभिः" अभिषुण्वद्भिः ऋत्विग्भिः "स्वानः"* अभिषूय-माणः "सोमः" "अवीनां" "स्नुभिः"† ["मांस्पृत्स्नूनामुपसंख्या-नम् (६,१,६३)"—इति सानु-शब्दस्य स्नु-भावः] समुच्छ्रितै-र्वालैः पवित्रैः "अधि याति" अधिकं गच्छति। "उ"—इति प्रसिद्धौ। "अश्वया इव" वड़वया इव "हरिता" हरित-वर्णया धारया "याति" "मन्द्रया" मदकारिण्या द्रोणकलशमधि-गच्छति॥

"उष्वाणः"-उपवाणः"—इति पाठौ॥ १॥

अथ द्वितीया।

३ २उ ३ १ २ ३ १ २ ३ १ २
अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः।

३ २उ ३ १ २ २ १र २र
समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते॥ २‡॥ १२

"गोमान्" गोयुक्तः सोमः "अनूपे" निम्ने देशे‡ कलशे "गोभिः" गोर्विकारैः क्षीरादिभिः§ सह "अक्षाः" क्षरन्ति।

---

* क्वचि तु "ष्वाणः"—इति मूर्द्धण्य-षकार-णकारोपेतः श्रूयते। तत्र "पूर्व-पदात् (८, ३, १०६)"—इति षत्वम् सुतरां णत्वञ्च।

† "ष्णुभिः"—इति मूर्द्धण्यपाठो क्वचि, "पूर्वपदात् (८, ३, १०६)"—इति च तत्र दीर्घः।

‡ 'अनूपे—उच्चैः प्रदेशे'—इति वि०।

§ 'गोभिः—उदक-मज्जानि गोभिर्वा'—इति वि०।

तदेवोच्यते—"सः" सोमः आत्मनोमिश्रणार्थं "दुग्धाभिः गोभिः" सह "अश्वाः" चरति [ चरतेर्लुङि रूपम् ]। किञ्च "समुद्रं न" यथा समुद्रमुदकानि गच्छन्ति तद्वत् "संवरणानि" सम्भजनीयानि रसरूपाणि अन्नानि* द्रोणकलशम् "अग्मन्" गच्छन्ति [ गमेर्लुङि च्लेर्लुकि रूपम् ] किञ्च "मन्द्री" मदकरः सोमः "मदाय" मदार्थं "तोशते"† हन्यते अभिषूयते [ तोशतिर्वधकर्मा ( निघ० २,१९,२९) ] ॥ २ ॥१२

॥ मानवोत्तरम् ॥ द्दोवायि। सोमउष्वाणःसोतृभिः। द्दोवायि। आधिष्णुभिरवीनाम्। आश्वयेव। द्दारिता या३१। तिधा२रा२३४या। मन्द्राया२३४या३। ता२ यिधा२३४औहोवा। रा२३४या। द्दोवायि। मन्द्रया यातिधारया। द्दोवायि। मन्द्रयायातिधारया। आ नूपे। गोमान्गो३१। भा२यिरा२३४त्वाः। सोमोदू२३ग्धा३। भा२यिरा२३४औहोवा। आ २ ३ ४ स्वाः ॥(२)

---

* 'संवरणानि—उदकानि'—इति वि०।

† 'तोशते—तुशि व्याप्तौ व्यापयति'—इति वि०।

होवायि। सोमोदुग्धाभिरक्षाः। होवायि। सोमोदु
ग्धाभिरक्षाः। सामुद्रन्न। सांवरणा३१। नियार्श्रा२३
४ग्मान्। मन्दायिमा२३दा३। या२तो२३४औहोवा।
ग्रा२३४ते(३)॥ ५* ॥[१]

॥ आनूपन्ध्यूश्वम्॥ सोमाःसोमाः। उष्वाणा३ःसोतृ
१भी२ः। आधिष्णुभिः। आवा१यिना२म्। आश्वा
२येवा२। हरितायातिधारा२३या। मन्द्राया३या३।
ता२३इधा३। रा३४५योई२हायि॥(१) मन्द्रामन्द्रा। या
याती३धारा१या२। मान्द्रयाया। तिधारा१या२।
आनू२पेगो२। मान्गोभिरा२३क्षाः। सोमोदूइग्धा३।
भा२३यि३। राआ२३४५क्षोई२हायि॥(२) सोमाःसोमाः।
दुग्धा३भायिरा१क्षा२ः। सोमोदुग्धा। भायिरा१क्षा

* ऊ० गा० ३ प्र० १ अ० ५ सा०

१ १ १ र २१ २ १
रः । साम्रद्रान्ना२ । संवरणानियार३म्मान् । मन्द्रा

१ २ १ ४ २ ५
ग्रिमा३दा३ । यार२३तो३ । म्रा २ ३ ४ ५ तो ६ हायि(३)

॥ ६* ॥ [२]

२र १ र ५र २ १
॥ वाभ्रम् ॥ सोमउष्वाणःसो । हा३हा३यि । तर

४ ५ १ १
३४ । भिस्तुभीवा । अधाहो२यि । ष्णुभायिर्वो२ ।

१ २ १ २र १ २ ३ १
आवा१यिना२म् । आश्वथेव । हरायितायां । तिधां

२ ४ १ १ १
उवा३ । ऊ२३४पा । रया२ । मान्द्रा२याया२ ।

१र २ ५र र ४ ३ ४र ५र र
तिधा । रा२या२३४ औहोवा ॥(१) मन्द्रयायातिधा ।

२ २ १ र ५ १
हा३हा३यि । रा२३४ । यारयोवा । मान्द्राहो२यि ।

१र १ २ १ र२रर १ १
यायाहो१ । तायिधा१राया२ । आनूपेगो । मानगों ।

२ २ २ ५ १ १ १
भिराउवा३ । ऊ३४पा । अश्वा२ः । सोमो२दुग्धा२भि

१ ३ ५र र ३र ४र २र ४ ५र २
रा२ । हा२३४ औहोवा ॥(२) सोमोदुग्धाभिरा । हा३

---

ऊ०गा० ३प्र० १ख० ६सा० ।

हाउयि। आ२३४। त्वाःचोवा। सोमोहो२यि।
दुग्धाहो२। भायिरा१त्वा२ः। सामुद्रम्। संवारा
णा। नियाउवा३। ऊ३४पा। अग्मा२न्। मान्दी
२मादा२। यतो। आ२ता२३४औहोवा। *ऊ२३४
पा(३)॥ ७*॥ [३]

॥ अग्नेस्त्रिणिधनम्॥ सोमउष्वा। णःसोतृ२३४भीः।
अधायिष्णुभिरा३१उवा२३। वी२३४नाम्। आश्वाये२
३४वा। हरितायातिधा३१उवा२३। रा२३४या। मा
न्द्राया२३४या। तिधा३१उवा२३। रा२३४या॥(१)
मन्द्रयाया। तायिधारा२३४या। मन्द्रयायातिधा३१उ
वा२३। रा२३४या। आनूपे२३४गो। माग्गोभिरा३१
उवा२३। आ२३४त्वाः। सोमोदू२३४ग्धा। भिरा३१

* ऊ० गा० ३प्र० १अ० ७सा०।

उवा२३ । आ२३४ता: ॥ (२) सोमोदुग्धा । भायिरा२
३ ५ त्वा: । सोमोदुग्धाभिरा३१उवा२३ । आ२३४त्वा: ।
साम्रूद्रा२३४न्ना । संवरणानिया३१उवा२३ । आ२३४
ग्मान् । मान्दीमा२३४दा । यतो३आउवा२३ । आ
२३४ते (३) ॥ ८* ॥ [४]

॥ अभीवर्त्तः ॥ मन्द्रा३या३या५तिधारयोवा । मान्द्र
याया । तिधारा१या२ । आनूपेगो३१२३४ । मान्गो ।
भायिरा१त्वा२: । सोमोदू१ग्धा२ । भिरा३ । आ२३४
५ । आ२३४५: (२) ॥ ३† ॥ [५]

॥ कालेयम्‡ ॥ सोमोदू३ग्धाभिरत्वा: । सोमोदुग्धा ।
भिरत्वा२३: । समुद्रन्ना३ । सा२३४म् । वरणानि ।

---

* ऊ० गा० ३प्र० १ख० ८सा० ।

† ऊ० गा० ८प्र० २ख० ३सा० ।

‡ "महाकालेयम्"—इति ख० पु० पाठः

आ३गमान् । मन्दायिमदौ । वा३४३ओ३४वा । यतो५

शतायि । द्वो५ई । डा(२) ॥ ४* ॥ [६]

॥ मानवाद्यम् ॥ मन्द्रयाया । तिधारा२३४या ।

तायिधारा २ ३ ४ या । मान्द्रयाया । तिधारा१या २ ।

अ । नू । पे । गोमान्गो३ । भा२यिरा२३४त्ताः । सोमो

दुग्धा२३ । भा२यिरा२३४औहोवा । आ२३४स्ताः(२) ।

॥ १३† ॥ [७]

॥ आग्नेस्त्रिणिधनम् ॥ अनूपेगो । मान्गोभायिरा

२३४त्ताः । सोमोदुग्धाभिरा३१उवा२३ । आ२३४त्ताः ।

सामूद्रा२३४न्ना । संवरणानिया३१उवा२३ । आ २ ३ ४

गमान् । मान्दीमा२३४दा । यतो३आउवा२३ । शा२

३४ते(२) ॥ ३‡ ॥ [८]

---

* ऊ० गा० ८प्र० २ अ० ४सा० ।

† ऊ० गा० ६प्र० २ अ० १३सा० ।

‡ ऊ० गा० १८प्र० २ अ० ३सा० ।

२र १
॥ वैष्णवाद्यम् ॥ सोमउक्षा। ऽऽःमो२तृभायिः। तृ
र १ र ४ र
भिः। अधिष्णुभिरा२वीनाम्। वीनाम्। अश्वयेवह
र र १ र र र १
रितायातिधा२रया। रया। मन्द्रयायातिधा२रया२३।
१ ३ ५र र २ र
रा२। या२३४। औहोवा ॥(१) मन्द्रयाया। तिधा२ः
१ र र र १ र र र
रया। रया। मन्द्रयायातिधा२रया। रया। अनूपे
र र र १ र र र १
गोमान्गोभिरा२क्षाः। क्षाः। सोमोदुग्धाभिरा२क्षा२३ः।
१ ३ ५र र २र र
क्षा२। क्षा२३४। औहोवा। सोमोदुग्धा। भि
१ र र र १
रा२क्षाः। क्षाः। सोमोदुग्धाभिरा२क्षा२३ः। क्षा२।
३ ५र र २र र १
क्षा२३४। औहोवा ॥(२) सोमोदुग्धा। भिरा२क्षाः।
र र र १
क्षाः। सोमोदुग्धाभिरा२क्षाः। क्षाः। समुद्रन्नसंवर
र १ र र १
णान्यग्मान्। ग्मान्। मन्दीमदायतो२शाता२३यि।
१ ३ ५र र २ ५
शा२। ता२४३। औहोवा। ऊ२३४पा(३) ॥१८*॥९]

---

* ऊ० गा० २०प्र० १ख० १८ सा०।

॥ वैष्णवोत्तरम् ॥. सोमः। सोमाः। उष्वाणःसोतृभिः। अधायिष्णू३भायिः। आश्रौ३हो। वायिना२म्। अश्वयेवहरितायातिधा१रा३या। मन्द्राश्रौ३हो। यायातिधो२३४वा। रा५योई्हायि(१) ॥ २०* ॥ [१०]

॥ यौक्तस्रुचम् ॥ सोमउष्वाणःसो। तृभायिः। अधिष्णुभिरवा२३यिनाम्। आश्वा२। येवहरितायातिधारा२३या। मान्द्रा२। यायातिधो२३४वा। रा२३४या ॥(१) मन्द्रयायातिधा। रया। मन्द्रयायातिधारा२३या। आनू२। पेगोमान्गोभिरा२३क्षाः। सोमा२ः। दुग्धाभिरो२३४वा। आ२३४क्षाः ॥(२) सोमोदुग्धाभिरा। क्षाः। सोमोदुग्धाभिरा२३क्षाः। सामू२। द्रन्नसंवरणानिया२३ग्मान्। मान्दी२। मादायतो२३४वा। शा२३४ते(३) ॥ १† ॥ [११] १२

* ऊ० गा० २०प्र० १ख० २०सा०।

† ऊ० गा० २०प्र० २ख० १सा०।

अथ तृतीय-तृचे—

प्रथमा ।

१ २   ३ १ २ ३१ २ ३ १२   १२ ३ १ २
यत्सोमचित्रमुक्थ्यन्दिव्यम्पार्थिवंवसु ।
१ २   ३ १२   १२
तन्नःपुनानआभर ॥ १* ॥

हे "सोम !" "यत्" "चित्र" चायनीयम् "उक्थ्यम्"†स्तुत्यं "दिव्यं" दिवि भवं "पार्थिवं" पृथिवी-सम्बन्धञ्च यत् "वसु" धनमस्ति "तत्" "नः" अस्मभ्यम् "पुनानः" पूयमानः सन् "आभर" आहर ॥ १ ॥

अथ द्वितीया ।

१ २   ३ १२   १२   ३ २ ३ १ २ ३ १ २
वृषापुनानआयूंषिस्तनयन्नधिवर्हिंषि ।
२ ३ २उ   ३ १ २
हरिःसन्योनिमासदः ॥ २‡ ॥

हे सोम ! "आयूंषि" यजमानादीनामृत्विजां जीवितकालान् "पुनानः" शुद्धान् कुर्वन् "वृषा" कामानां वर्षकस्त्वं "स्तनयन्" शब्दं कुर्वन् "अधि बर्हिषि" [अधीति सप्तम्यर्थानुवादी] आस्तीर्णे दर्भे "हरिः सन्" हरितवर्णः सन् "योनिं" स्वकीयं स्थानम्¶ "आसदः" आसीद ॥

---

* ऋ० वे० ६, ८, ९, १ ।   † 'उक्थ्यं—नामरूपम्'—इति वि० ।

‡ ऋ० वे० ६, ८, ९, ३ ।   ¶ 'योनिं—द्रोणकलशम्'—इति वि० ।

"आयूंषि"-"आयुःषु"—इति पाठौ, "आसदः"-"आसदत्"—इति च ॥ २ ॥

अथ तृतीया ।

१ १र २र ३ १ २ ३ १ २
युवꣳहिस्थःस्वःपतीइन्द्रश्चसोमगोपती ।
३ १ २ ३ १ २
ईशानापिप्यतन्धियः ॥ ३* ॥ १३

हे "सोम !" त्वम् "इन्द्रश्च" युवं हि" युवां खलु "स्वःपती" सर्वस्य स्वामिनौ "स्थः" भवथः । तथा "गोपती" गवां पालकौ† "ईशाना" ईश्वरौ सन्तौ "धियः" अस्मदीयानि कर्माणि‡ "पिप्यतम्" प्याययतम्¶ ॥

"युवंहिस्थःस्वःपती"-"युवंहिस्वःस्वर्पती"-इति पाठौ ॥ ३ ॥ १३

२ र १ १ १ र
॥ श्रैशवम् ॥ यत्सोमचित्रमुक्थायाम् । दिव्यम्पार्थिवंवसू । तन्नःपू२३४ना । नआ३भा५रा६५६ ॥(१) वृषा पुनानआयूꣳषी । स्तनयन्नधिबर्हिषायि । हरिःसा२३४न्यो । निमा३सा५दा६५६ः ॥(२) युवꣳहिस्थःसुवःपा

* ऋ० वे० ९, ८, ९, २ ।

† 'गोपती—गवां पती, उदकानामादित्यरश्मीनां वा'—इति वि० ।

‡ 'धियः—बुद्धयः'—इति वि० ।

¶ 'पिप्यतं—पालयतम्'—इति वि० ।

१　-१　२　२　　१२१२　५　३२
तौ। इन्द्रस्यसोमगोपतायि। ईशानार२३४पौ। प्यता
४
इन्धाप्रयाई५६ः(३) ॥ ८* ॥ [१] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य
चतुर्थः खण्डः† ॥ ४ ॥

---

अथ पञ्चम-खण्डे‡ प्रथम-तृचे—

प्रथमा ।

१ ३　१ २　३ १ २　३ १र　२र
इन्द्रोमदायवावृधेशवसेवृत्रहानृभिः।
२उ　३ १　३　१ ३ १र　२र　३
तमिन्महत्स्वाजिषूतिमर्भेहवामहे
१र　२र३ १ १
सवाजेषुप्रनोविषत् ॥ १¶ ॥

---

* ऊ० गा० ३प्र० १अ० ९सा० ।

† 'उक्तो माध्यन्दिनः पवमानः'—इति वि० ।

अतोऽनन्तरं विवरणकृता इहैव शक्वरीः प्रस्तुत्य ता एव व्याख्याताः। तथाहि— 'इदानीं पृष्ठानि भवन्ति, तत्र पञ्चमेऽहनि शक्वर्यः पृष्ठं भवति ता उच्यन्ते ;—छन्दो-दैवत-ब्राह्मणानि परिभाषासिद्धानि "विदा मघवन्" सर्वत्रः त्वं मघवन्'—इत्यादि। एवञ्चैतन्मते उत्तराग्रन्थीयएव महानाम्न्यार्च्चिकः न तु ग्रन्थान्तरच्छन्दआर्च्चिकपरिशिष्ट-भूतः, परमेतदतीव चित्रं मूलपुस्तकदर्शनेन तथात्वं व्याघातात् ।

‡ 'आर्षभ्दिरं ब्रह्मसाम'—इति वि० ।

¶ छ० आ० ५, १, ३, २ (१भा० ८३६पृ०) = ऋ० वे० १, ७, १, १ ।

"वृत्रहा" वृत्रस्यावरकस्य वृष्टि-निरोधकस्य मेघस्यासुरस्य वा हन्ता । यद्वा, आवरकाणां शत्रूणां हन्ता, "इन्द्रः" "मदाय" हर्षार्थं "शवसे" [बलनामैतत् (निघ० २,९,३) बलार्थञ्च "नृभिः" यज्ञस्य नेतृभिः ऋत्विग्भिः "वृधे" स्तोत्र-शस्त्र-रूपाभिः स्तुतिभिः प्रवर्द्धितो बभूव । स्तुत्या हि देवता प्राप्त-बला सती प्रवर्द्धते । "तम् इत्" तमेवेन्द्रम् "महत्सु" प्रभूतेषु "आजिषु" सङ्ग्रामेषु "ऊति" रक्षां कुर्वन्तमितिशेषः "हवामहे" अस्माकं रक्षणाय आह्वयामहे । [ "उत" अपिच "ईम्" एनम् एवम्भूतमिन्द्रम्*] "अर्भे" अल्पे सङ्ग्रामे हवामहे अस्माभिराहुतः सचेन्द्रः "वाजेषु" सङ्ग्रामेषु "नः" अस्मान् "प्राविषत्" प्रावतु प्रकर्षेण रक्षतु ॥ [ "ऊतिमर्भे"-"उतेमर्भे"—इति पाठौ ॥ वावृधे—वृधेः कर्मणि लिट् तुजादित्वादभ्यासस्य दीर्घत्वम्† । नृभिः—"सावेकाच (६,१,१६८)"—इति प्राप्तस्य विभक्त्युदात्तत्वस्य "नृचान्यतरस्यां (६,१,१८४)"—इति प्रतिषेधः । हवामहे—ह्वयतेर्लटि "ह्वः (६,१,३३)"—इत्यनुवृत्तौ "बहुलञ्छन्दसि (६, १, ३४ )"—इति सम्प्रसारणम् , अपि गुणावादेशौ । अविषत्—अवरक्षणे (भ्वा०,प०) लेटयडागमः, "इतश्च लोपः ( ३, ४, ९ )—इति इकारलोपः, "सिब्बहुलं लेटि ( ३,१,३४ )—इति सिप् , तस्यार्द्धधातुकत्वात् वलादिलक्षण इट् ] ॥ १ ॥

---

* ऋग्वेदीय-पाठमनुसृत्येदं व्याख्यानम् ।

† परं चिन्त्यमेतत्—"संहितायामभ्यासस्य अन्येषामपिदृश्यतइति दीर्घत्वम् । तुजादित्वेहि तूतुजान इति वत् पदकाले दीर्घः श्रूयेत"—इति ऋग्वेद-व्याख्यावसरेऽयमेव सायणः ।

अथ द्वितीया ।

२ ३ १ २ ३ १ ३ ३ १ २ ३ २
असिद्धिवीरमेन्योसिभूरिपराददिः ।
१ २ ३ १ २ ३ १२ २२
असिदभ्रस्यचिद्वृधोयजमानाय
३ १२ १२ ३ १ २
शिक्षसिसुन्वतेभूरितेवसु ॥ २* ॥

हे "वीर !" शत्रु-क्षपण-कुशलेन्द्र ! त्वं "सेन्यः असि" सेनार्हो भवसि†, त्वमेकोऽपि सेना सदृशो भवसीत्यर्थः । "हि"‡ यस्मादेवं तस्मात् प्रभूतं शत्रूणां धनं "पराददिः" परादाता शत्रूणां पराङ्मुखं यथा भवति तथा आदाता "असि" भवसि "दभ्रस्य चित्" अल्पस्य नामैतत्¶ अल्पस्यापि तव स्तोतुः§ "वृधः" वर्द्धयितासि, तथा "यजमानाय" यागं कुर्वते "सुन्वते" सोमाभिषवं कुर्वते पुरुषाय "शिक्षसि" अपेक्षितं धनं ददासि [ शिक्षतिर्दानकर्मा (निघ० ३,२०,८) ] यस्मात् "ते" तव वसु"

* ऋ० वे० १, ६, १, २ ।

† विवरणकारस्तु 'वीरसेन्य'—इत्येकं पदम्, अतएवैवं व्याख्यातम्— वीरसेन्यः— वीराः सेन्या यस्य असौ वीरसेन्यः'—इति । परन्तु तत् पदपाठविरुद्धम्, तत्र "वीर १२२ ३ सेन्यः"—इति छेद-स्वरयोर्दर्शनात् ।

‡ 'हीति पदपूरणः'—इति वि० ।

¶ "दभ्रम्"—इति निघण्टौ तृतीयस्य तृतीये ह्रस्वनामसु पाठदर्शनात् ।

§ 'दभ्रस्य—ध्वंसकस्य'—इति वि० ।

धनं "भूरि" बहुलं अक्षयं धनं विद्यते तस्मात् ददासीति भावः॥ [पराददिः—डु दाञ् दाने (जुहो० उ०) "आदृगमहन जन (३,२,१७१)"—इति कि-प्रत्ययः; लिड्वद्भावाद् द्विर्वचने ह्रस्वत्वम्, "आतो लोप इटि च (६,४,६४)"—इत्याकारलोपः। वृधः—वृधेरन्तर्भावितण्यर्थादिगुपध-लक्षणः कः। सुन्वते— "शतुरनुमः (६,१,१७३)"—इति विभक्तेरुदात्तत्वम्॥ २॥

अथ तृतीया।

२ ३१ २ ३ १२ ३ १ २ ३ १ २
यदुदीरतआजयोधृष्णवेधीयतेधनम्।
३ १ १ ३ २ ३ २ ३ २उ ३ १ २र
युङ्क्ष्वामदच्युताहरीकंहनःकंवसौ
३ १ २ ३ १ २
दधोऽस्माँइन्द्रवसौदधः॥ ३*॥ १४

[अत्रेदमाख्यानम्—'रहूगण-पुत्रो गोतमः कुरु-सृञ्जयानां† राज्ञां पुरोहित आसीत्, तेषां राज्ञां परैः सह युद्धे सति स ऋषिः अनेन सूक्तेन इन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामास'— इति। तस्य च तत्पुरोहितत्वं वाजसनेयिभिराम्नातम्—"गोतमोह वै राहूगण उभयेषां कुरु-सृञ्जयानां‡ पुरोहित आसीत्"— इति।] "यत्" यदा "आजयः" सङ्ग्रामाः "उदीरते" उद्गच्छन्ति उत्पद्यन्ते तदानीं "धना" धनं "धृष्णवे" यो धृष्णुः धर्षयिता

* ऋ० सा० ५, १, ३, ९ (१भा० ८४४पृ०) = ऋ० २० १, ६, १, ३।

†, ‡ "सञ्जयानां"—इति रा० सा० पु० पाठः।

शत्रूणां जेता भवति तस्मै "धीयते" निधीयते, जयतो धनं भवतीत्यर्थः। हे इन्द्र! त्वं तादृशेषु युद्धेषु प्रवृत्तेषु "मदच्युता" शत्रूणां मदस्य गर्वस्य च्यावयितारौ "हरी" त्वदीयावश्वौ "युङ्क्ष्व" स्व-रथे योजय, योजयित्वा च कञ्चिद्राजानं तव परिचरणम-कुर्वन्तं "हनः" हन्याः कञ्चन त्वां परिचरन्तं "वसौ" वसुनि धने "दध." स्थापय॥ [ उदीरते—ईरगतौ (आ॰) आदा-दिकः, "अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे (६,१,१८६) धातु-स्वरएव शिष्यते, "यद्वृत्तान्नित्यम् ( ८,१,६६ )"—इति निघात-प्रतिषेधः। धना—"सुपां सुलुक् ( ७,१,३९ )"—इति डादेशः। युङ्क्ष्वा—युजिर् योगे (रु॰ उभ॰), अन्तर्भावित-ण्यर्थाल्लोटि "बहुलञ्छन्दसि (२,४,७३)—इति विकरणस्य लुक्, "द्व्यचो-ऽतस्तिङः (६,३,१३५)"—इति संहितायां दीर्घत्वम्। हनः—हन्तेर्लेटि सिप्यडागमः, हनश्च दधश्च चार्थप्रतीतेः "चादिलोपे विभाषा (८,१,६३)"—इति प्रथमायास्तिङ्विभक्तेर्निघात-प्रतिषेधः। वसौ—लिङ्ग-व्यत्ययः। दधः—दध धारणे (भ्वा॰आ॰) लेटि व्यत्ययेन परस्मैपदम्॥ ३ ॥ १४

१ २ १ र २
॥ सन्तनि॥ इन्द्रोहाउ। मादायवा३१उवा२३।
५ १ २र १र २ १ ११ २र १२र१ र १
वा२३४ऊ। शवसेवृत्रहानृभिस्तमिन्महत्स्वाजिषूतिमर्भेह
र २ ११११ १ २ १ २ १
वामहा२३४यि। सत्राहाउ। जायिषुपनो३आउवा२३।

५ १ २ १ २ १ २ २ १ २ २ २ १ २ २ २ १ २ १
वा२३४यिषात् ॥(१) असिह्विवीरसेन्योसिभूरिपरादद्दिर

२ १ २ १२ २२ २ ३ १ १ १ १ १ २
सिदभ्रस्यचिद्वृधोयजमानायशिक्षसा२३४५यि। सुन्वाद्दा

१ २ २ ५
उ। तायिभूरिता३१उवा२३यि। वा२३४मू॥(२) यदु

१२ २२ १ २ २ १ २१२ १२ २ १२ २ १ २२ १ २२ १
दीरतआजयोधृष्णवेधीयतेधनंयुङ्क्ष्वामदच्युताहरीकᳩ

२ १ २ ३ १ १ १ १ १ २ १ २
नःकंवसौदधा२३४५ः। अस्मान्हाउ। आयिन्द्रवसा३१उ

५
वा२३। दा२३४धाः(३) ॥ ४* ॥ [१] १४

अथ द्वितीय-तृचे†—

प्रथमा।

२ १ ३ १ २ ३ १ २
स्वादोरित्थाविषूवतो

१ २ ३क २र
मध्वःपिबन्तिगौर्यः।

१ २र ३ १ २ ३
याइन्द्रेणसयावरी

२ ३ १ २ ३ २ ३
र्वृष्णामदन्तिशोभथा

२ ३ १ २ ३ १ २
वस्वीरनुस्वराज्यम् ॥ १‡ ॥

---

* ऊ० गा० १९प्र० २ख० ४गा०।

† 'रायोवाजीयमच्छावाकसाम',—इति वि०।

‡ छ० आ० ५, १, २, ३( १भा० ८३२पृ० ) = ऋ० वे० १, ६, ६, ५

"स्वादोः" स्वादुभूतस्य रसयुक्तस्य "इत्था विषूवतः" इत्थ मनेन प्रकारेण सर्वयज्ञेषु व्याप्तियुक्तस्य "मध्वः" मधोः मधुर-रसस्य सोमस्य "क्रियाग्रहणं कर्त्तव्यम् (१,४,३२ वा०)"—इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । एवंविधं सोमं "गौर्यः" गौरवर्णा गावः पिबन्ति । या गावः "शोभथाः" [वचन-व्यत्ययः] इन्द्रेण सह शोभन्ते "वृष्णा" कामाभिवर्षकेन्द्रेण "सयावरीः" सह यान्त्यो गच्छन्त्यः सत्यः "मदन्ति" हृष्टा भवन्ति। ता इन्द्रपीतस्य सोमस्य शेषं पिबन्तीत्यर्थः । "वस्वीः" पयः-प्रदानेन निवासकारिण्यः ता गावः "स्वराज्य" स्वस्येन्द्रस्य यत् "राज्यं" राजत्वं तदनु लक्ष्यावस्थिताइति शेषः ॥ [ विषूवतः—विष्लृ व्याप्तौ (जु०उभ०) अस्मादौणादिकः कुप्रत्ययः ततो मतुप् "ह्रस्वनुड्भ्यां मतुप् (६,१,१७६)"—इति मतुप उदात्तत्वम्, "अन्येषामपि दृश्यते ( ६,३,१३७ )"—इति संहितायां दीर्घः, व्यत्ययेन मतोर्वत्वम् । मध्वः—"जसादिषु छन्दसि वा वचनम् ( १,४,७ )"—इति "घेर्ङिति (७,३,१११ )"—इति गुणा-भावे यणादेशः । गौर्यः—"षिद्गौरादिभ्यश्च ( ४,१,४१ )"—इति ङीष्, जसि यणादेशे "उदात्तस्वरितयोर्यणः ( ८,२,४ )"—इति परस्यानुदात्तस्य स्वरितत्वम्। सयावरीः—या प्रापणे (अदा०प०) "आतोमनिन् (३,२,७४)"—इति वनिप्, "वनोरच ( ४,१,७ )"—इति ङीब्रेफौ। मदन्ति—मदी हर्षे (दि०प०), श्यनि प्राप्ते व्यत्ययेन ( ३,१,८५ ) शप् । वस्वीः—"वस निवासे (भ्वा०प०)शृस्वृस्निहि ( उ०,१,१० )"—इत्यादिना वसे रुप्रत्ययः, "धान्ये नित् ( उ०१,९ )"—इत्यनुवृत्ते राद्युदात्तत्वम, "वोतो

गुणवचनात् (४४,४,१)"—इत्यत्र "गुणवचनात् ङीबाद्युदात्तार्थम्( ४, १, ४४ भा० )"—इतिवचनात् वसुशब्दात् ङोपि यणादेशः, जसि "वाच्छन्दसि (६,१,१०६)"—इति पूर्वसवर्णदीर्घत्वम्। स्वराज्यं—"अकर्मधारये राज्यम् (६,२,३०)" —इत्युत्तरपदाद्युदात्तत्वम्]॥१॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २
ता अस्य पृशनायुवः सोमꣳ श्रीणन्ति पृश्नयः।

३ १र २र ३ २ ३ १ २ ३ १ २ ३
प्रिया इन्द्रस्य धेनवो वज्रꣳ हिन्वन्ति सायकं

२ ३ १ २ ३ १ २
वस्वीरनु स्वराज्यम्॥२*॥

"ताः" पूर्वोक्ताः† "अस्य" इन्द्रस्य "पृशनायुवः" स्पर्शनकामाः पृश्नयः नानावर्णाः‡ गावः इन्द्रेण पातव्यं "सोमं" पयसा "श्रीणन्ति" मिश्रीकुर्वन्ति, "इन्द्रस्य" "प्रियाः" प्रीतिहेतुभूताः "ताः" "धेनवः" "सायकं" शत्रूणामन्तकारकं¶ "वज्रं" आयुधं "हिन्वन्ति" शत्रुषु प्रेरयन्ति इन्द्रो यथा शत्रुषु वज्रं प्रेरयति तथेन्द्रस्य मदमुत्पादयन्तीत्यर्थः। अन्यत् पूर्ववत्॥[ हिन्वन्ति

---

* ऋ० वे० १, ६, ७, १।

† 'ताः—धेनवः'—इति वि०।

‡ 'पृश्नयः—गावः' - इति वि०।

¶ 'सायकं—शरणभूतं क्षेपणीयम्' - इति वि०।

छिवि प्रीणनार्थः (भ्वा० प०), इदित्त्वान्नुम् । सायकं—षो अन्तकर्मणि (दि० प०), ण्वुल्यात्वे युगागमः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १ २  ३ २ ३ १ २
ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः ।
३ २ १  ३ १ २ ३ १
व्रतान्यस्य सश्चिरे पुरूणि पूर्व
२ ३ २ ३ १ २ ३ १ २
चित्तये वस्वीरनु स्वराज्यम् ॥ ३ * ॥ १५

"प्रचेतसः" प्रकृष्टज्ञानाः "ताः" गावः "अस्य" इन्द्रस्य "सहः" बलं "नमसा" स्वकीयेन पयोरूपेणान्नेन "सपर्यन्ति" परिचरन्ति "पुरूणि" बहूनि "अस्य" इन्द्रस्य "व्रतानि" शत्रुवधादि-रूपाणि वीर्य-कर्माणि "सश्चिरे" सेविरे ज्ञातव्यतया इत्यर्थः । किमर्थम्? "पूर्वचित्तये" युयुत्सूनां शत्रूणां पूर्वमेव प्रज्ञापनाय† [ अनेन युध्यमाना वृत्रादयः सर्वे मरणं प्राप्ताः किमर्थं भवद्भिः प्राणास्त्यजन्त इति तेषां बोधनायेत्यर्थः । अन्यत्पूर्ववत् ॥ पूर्वचित्तये—चिती सञ्ज्ञाने ( भ्वा० प० ), भावे क्तिन्, मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥ ३ ॥ १५

---

* ऋ० वे० १, ६, ७, २ ।

† 'पूर्व-चित्तये—पूर्व-प्रसादनाय'—इति वि० ।

४र ३र ४ ३र ४ ५र २ २ १र ४र ४

॥ श्यैतम् ॥ स्वादोरित्थाविषू । वता३४औहोवा ।

१ र २ १ ७ ५ ५ १र र २

माधोःपिब । तिगौरियार३४ः । ओ६हा । याइन्द्रेण

१र २र१ २ १ ३ ५

सयावरीर्। षाोमार३दा । तिशोर । भार३४था ॥(१)

३र ४ २ ४.५र ३ २ ३र ४र ५ १ २र

ताअस्यपृशना । युवा३४औहोवा । सोमꣳश्रीण । ति

१ ७ ५ ५ ०१र २ र १ २र १

पार्श्वयार३४ः । ओ६हा । प्रियाइन्द्रस्यधेनवोव । आꣳ

२ १ ३ ५ ३र ४ २

हार३यिन्वा । तिसार । यार३४काम् ॥(२) ताअस्यन

४ ५र २ २ ३र ५र ५ १ १ १ ७

मसा । सहा३४औहोवा । सापर्य्यन्ति । प्रचायितसा

५ ५ २१र २ र १ २

र३४ः । ओ६हा । व्रतान्यस्यसश्चिरेपू । रूणार३यिपू ।

३ ५ १ र २ २ १

वर्चार्यि । तार३४यायि । वस्वोरनुस्वा३रा । ऊम्मायि ।

३ ५र र ३ ५

जारयार३४औहोवा । वा२३४सू(३) ॥ ४ * ॥ [१] १५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य

पञ्चमः खण्डः† ॥ ५ ॥

---

* ऊ० गा० १०प्र० १ख० ४सा० ।

† 'उक्तं माध्यन्दिनं सवनम्'—इति वि० ।

अथ षष्ठे खण्डे,* प्रथमतृचे—

प्रथमा ।

१ २ ३ १र २र२ १र २र ३ १
असाव्यꣳशुर्मदायाप्सुदक्षोगिरिष्ठाः ।

३ २उ ३ १ २
श्येनोनयोनिमासदत् ॥ १ † ॥

"गिरिष्ठाः" पर्वत-जातः "अंशुः" सोमः "मदाय" मदार्थम् "असावि" अभिषुतः "अप्सु" वसतीवरीषु "दक्षः" प्रवृद्धश्च भवति । किञ्च "श्येनो न" यथा श्येनः पक्षी वेगेनागत्य स्थानमासीदति तद्वदयं सोमः "योनिं" स्वकीयं स्थानम् "आसदत्" आसीदति ॥ १ ॥

अथ द्वितीया ।

१ १र २र ३ १ २ ३ २ ३ १र २र १ २
शुभ्रमन्धोदेववातमप्सुधौतन्नृभिःसुतम् ।

१ २ ३ १ ३ १ २
स्वदन्तिगावःपयोभिः ॥ २ ‡ ॥

यत् "देववातं" देवैः प्रार्थितं¶ "शुभ्रं" शोभनम् "अन्धः" अन्नस्वरूपं "नृभिः" नेतृभिः "सुतम्" अभिषुतम् "अप्सु"

* 'इदानीं तृतीय-सवनमुच्यते'—इति वि० ।

† ऋ० आ० ५, २, ४, ७ (साम० ११५०)=ऋ० वे० ७, १, २४, ४ ।

‡ ऋ० वे० ७, १, २४, ५ ।

¶ 'देववातं—देवानां भक्षणीयम्'—इति वि० ।

वसतीवरीषु "धौतं" शोधितं सोमं "गावः" पशवः "पयोभिः" आशिरैः "स्वदन्ति" स्वादयन्ति ॥

"धौतंसुतं"-"धूतःसुतः"—इति पाठौ ॥ १ ॥

अथ तृतीया।

२ ३ २ ३१र २र ३ १ २ २ १ २
आदीमश्वन्नहेतारमशूशुभन्नमृताय।
२ ३ १ २ ३ १ ३
मधोरसꣳसधमादे ॥ ३ * ॥ १६

"आत्"† अनन्तरं "हेतारं" प्रेरकम्‡ "ईम्"¶ एनं "मधोः" मधुरस्य सोमस्य "रसं" "सधमादे" यज्ञे "अमृताय" अमरणाय "अशूशुभन् ऋत्विजः शोभयन्ति। तत्र दृष्टान्तः— "अश्वं न" यथा प्रेरका अश्वं सङ्ग्रामे शोभयन्ति तद्वत् ॥

"हेतारं"-"हेतारः"—इति पाठौ, "मधोः"-"मध्वः"— इति च ॥ ३ ॥ १६

१ २
॥ सन्तनि ॥ अमाहाउ। वायाꣳशुर्मा३१उवा२३।
५ २ १ र १ ३ १ र २ १
दा२३४या। अप्सुदक्षोगिरिष्ठा१ः। श्येनोहाउ। ना
र १ ५ २ १
योनिमा ३ १ उवा २ ३। सा २ ३ ४ दात् ॥(१) शुभ्रम

---

* ऋ० वे० ७, १, २४, १।

†, ¶ "आत्"—"ईम्"—इत्येतावुपसर्गौ—इति वि०।

‡ 'हेतारं—शीघ्रगामिनम्'—इति वि०।

मन्धोदेववातमप्सुधौतन्नृभोः सुता१म्। स्वदाहाउ। ता
यिगावःपा३१उवा२३। यो२३४भोः॥(२) आदीमश्वन्न
द्धेतारमष्टृष्णुभन्नमृतायार२३४५। मधोहाउ। रासꣳ
मदाधा३१उवा२३। मा२३४दे३)॥ १०*॥ [१]

॥ गौषूक्तम्॥ असाव्यꣳशुर्मदौ। हौहोवाहायि।
दाया। अप्सुदक्षोगिरो२। ऊवायि। ऊवा२यि। ष्ठा२ः।
श्येनोनयोनिमौ२। ऊवायि। ऊवा२यि। सादा२३त्।
होरे२वा२३४औहोवा॥(१) शुभ्रमन्धोदेवौ। हौहोवाहा
यि। वाताम्। अप्सुधौतन्नृभौ२। ऊवायि। ऊवा
२यि। सूता२म्। स्वदन्तिगावःपौ२। ऊवायि। ऊ
वा२यि। योभा२३यिः। होरे२वा२३४औहोवा॥(२)
आदीमश्वन्नहौ। हौहोवाहायि। ताराम्। अष्टृष्णु

* ऊ० गा० ३प्र० १ख० १० सा०

भवमौ२। ऊवायि। ऊवा२यि। ताया२। मधोर
सऽसचौ२। ऊवायि। ऊवा२यि। मादा२३यि।
होऽ२वा२३४औहोवा। अग्निराऊता२३४५:(३)॥ १८* ॥[२]

॥ ऐड न्अचितम॥ असाव्यऽशो। हायि। मदा
२३या। अप्सु२ष्वोगा१यिरा३यिष्ठा:। श्येनोनयो२३४
५हायि। नायिमा३हायि। सदात्। औ२३होवा॥(१)
प्रऽभ्रमन्ओ। हायि। देववा२३ताम्। अप्सुधौतन्नृभा
१यि:सू३ताम्। स्वदन्तिगो२३४हायि। वा:पा३हायि।
योभायि:। औ२३होवा॥ (२) आदोमश्वो। हायि। न
हेता२३राम्। अघ्नप्रभन्नमा१र्त्ता३या। मधोरसो२३
४हायि। साधा३हायि। मादा। औ३होवा।
ह्रो५ई। डा(३)॥ ४ † ॥ [३]

---

* ऊ० गा० ७प्र० २अ० १९सा०।

† ऊ० गा० १६प्र० १अ० ४सा०।

१ र  र २
॥ अध्वर्य्योर्ड्डसोमसाम ॥ अमाव्यंशुर्म्मदाया ३ए ।
१ र  २र १र  २5  १
अप्सुदक्षोगिरिष्ठाः । श्येनोनयार२३ । हा।यि । नायि
२  १ २  २ र र १  २
माउवा । सादाउवा३ ॥(१) शुभ्रमन्धोदेववाता३मे ।
१ र  २ १  २  १
अप्सुधौतन्नृभिःसुताम् । स्वदन्तिगार२३ । हायि । वा:
२  १ २  २र र  र र  २
पाउवा । योभाउवा३ ॥(२) आदीमश्वन्नचेतारा३मे ।
१ र  र  २ १र  २  १ २
अशूशुभन्नमृताया । मधोरसार२३म् । हायि । साधा
१ २  १
उवा । मादाउवा३ । ऊ३२३४पा(३) ॥ २ * ॥ [४].१६

अथ प्रगाथरूपे द्वितीय-सूक्ते† —

प्रथमा ।

३ २ ३ २ ३ २उ ३ १ २  ३ १ २  ३ २
अभिद्युम्नम्बृहद्यशइषस्पतेदिदीहिदेवदेवयम् ।
१र २र ३ १ २
विकोशम्मध्यमंयुव ॥ १ ‡ ॥

हे "इषस्पते" अन्नस्य पते ! "देव !" स्तोतव्य सोम ! "द्युम्नं" द्योतमानं "बृहत्" प्रभूतं "यशः" अन्नरूपं "देवयु"

* ऊ० गा० २०प्र० २ख० २सा० ।

† 'श्यावश्वं साम'—इति वि० ।

‡ ऊ० आ० ६, २, ४, १ (२भा० १२६पृ०)=ऋ० वे० ७, ५, १८, ४ ।

देवान् कामयमानं हविर्लक्षणं त्वदीयं रसम् "अभि दीदिहि" अस्मभ्य माभिमुख्येन प्रकाशय प्रयच्छेत्यर्थः । [यद्वा, हे सोम! यशोऽन्न देवयु देवानिच्छन्तं यजमानमभिलक्ष्य प्रकाशय । आमन्त्रितस्याविद्यमानवत्त्वेन (८,१,१८) पादादित्वादनिघातः । किञ्च "मध्यमम्" अन्तरिक्ष-स्थितं "कोशं" मेघं "वियुव" वृष्ट्यर्थं विगमय विश्लेषय ॥

"देवयु"-"देवयुः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ ३ २र २ ३ २उ ३ २ ३ १ २
आवच्यस्व सुदक्षचम्वोःसुतोविशांवह्निर्नविश्पतिः ।

३ २ ३ १ २ २ ३ २उ ३ १ ३ ३ १ २
वृष्टिन्दिवःपवस्वरीतिमपोजिन्वन्गविष्टयेधियः ॥ २ * ॥ १७

हे "सुदक्ष" शोभन-बल ! "चम्वोः" अधिषवण-फलकयोः "सुतः" अभिषुतः त्वं "वह्निः न विश्पतिः" सर्वासां प्रजानां वोढा राजेव "विशां" प्रजानां वोढा सन् "आ वच्यस्व" आगच्छ कलशमापवस्व [वचेर्गत्यर्थस्य व्यत्ययेन श्यनि रूपम्! किञ्च त्वम् "अपः" अपाम् उदकादीनां "रीतिं" व्याप्तां गतिं वृष्टिं "दिवः" द्युलोकात् "पवस्व" कुरु । किं कुर्वन्? "गविष्टये" गामात्मन इच्छते यजमानाय "धियः" कर्माणि "जिन्वन्" प्रेरयन् ॥

"अपोजिन्वन्"-अपाञ्जिन्व"—इति पाठौ ॥ २ ॥ १७

* ऋ० वे० ७, ५, १८, ५ ।

२ ५ ३

॥ च्यावनम् ॥ अभा२३४यि । द्युम्नम् । बृहा२३४

५ ५ ३ ३ ५ २ र २

द्यशा६: । हाउ । आयिपत्या२३४तायि । दिदीहिदेव

र ५ २ २ १

देवायू२३४ऽहायि । वायिकोशा३म्मा३ । ध्यामा२३ऽ

२ १ ५ ६ ३ ५

हा३४३यि । यू२३४वो६हायि ॥ १ ॥ विकोर३४ । भ्रम्म ।

२ ५ ५ २ ३ ५ ३

ध्यमा२३४युवा६ । हाउ । आवच्या२३४स्वा । मुदन्त

२ १ ५ १ २ २ १

चमुवो मतो२३४हायि । वायिशांवा३क्का३यिः । नावा२३

२ १ ५ ५ २

हा३४३यि । ध्या २ ३ ४ तो६हायि ॥ २ ॥ विश्वा२३४म् ।

५ ४ ५ ५ २ ३

वक्तिः नवा३४यिश्पती६: । हाउ । वाष्टिन्दा२३४यि

५ २ र १ ५ १ १ २

वा: । पवस्वरीतिमापो२३४हायि । जायिन्वान्गा३वा३यि ।

२ १ ५ ५

ष्टाया२३हा३४३यि । धा२३४यो६हायि ॥ ३ ॥ ११ * ॥ [१]

२ २ १ २

॥ ऐषिरम् ॥ अभिद्युम्नम्बृहद्या३शाः । आयिपस्प

र १ २ १ २ १

ते । दायिदी१हायिदे२ । वादा१यिवायू२म् । वायि

---

* ऊ॰ गा॰ ६प्र॰ १अ॰ ११सा॰ ।

१ ४ ५ ४ ५ २ १
को१श्राम्मा२३। ध्यमोवा । यू५वो६हायि ॥(१) विको

२ १ २ १ ७ १ २
श्रम्मध्यमंयू३वा। आवच्यस्व। सूदहाचा२। मूवो१:

१ २ ४ ५ ४ १
सुता२:। वायिश्रा१वाक्का२३यि:। नवोवा। श्या५तो

५ १ २ २ १ २
६हायि ॥(२) विश्वांवक्किर्न्नविश्पा३ती:। वाष्टिन्दिव:।

१ ७ १ १ १ २
पावस्वारी२। नायिमा१पा२:। जायिन्वा१न्गावा२३

४ ५ ४ ५
यि। ष्टयोवा। धा५योर्६हायि(३) ॥ १ * ॥ [२]

१ १ २ ४ ५ २ ३ ५ २ १
॥ सफम् ॥ अभिद्यू३म्नम्बृ। हद्या२३४शा:। इष

१ १ २१ १ २ १ २ १
स्पतायिदी२। दीदिहिदायिवा३दा३यि। वा३२३४यूम्।

१ १ १ २ २ ५
विको। श्रम्माध्या३मा३म्। यू३४५वोर्६हायि(१)॥ १२ †॥[३]

३ ४ ५ १ ३ ४ ५
॥ वाचःसाम ॥ अभिद्युम्नाम्। हायि। बृहद्यशा

५ १ २ १ १ २ १ १ २
इष। आयिषस्पते। दायिदी१हायिदे२। वादेवयुम्।

---

* ऊ० गा० ५प्र० १अ० १सा० ।

† ऊ० गा० ६प्र० १अ० १३सा० ।

१ २　　१ ४　　२　　५
वायिकोऽ१ग्राम्मा२३ । ध्या२३मा३म् । यू३ ४ ५ वो ६ हा

३ ४र ५　　　३ ४　५　५　१　२
यि ॥(१) विकोग्राम्मा । हौं । ध्यमंयुवा६ए । आवच्य

१ ०　　१ र २　　१　२ ०
स्व । ह्वदत्वाचा२ । मूवोःसुतः । वायिग्रा१वाक्रा २ ३

१　४　　२　　५　　३ ४र
यिः । ना२३वा३यि । ध्या३४५ुतो६हायि ॥(२) विशौ

५　२　३ ४　५ ५　१　२　　१ ०
वक्रीः । हौयि । नविश्पता६ए । वार्ह्दिन्दिवः । पाव

१ २　१ २
स्वारी२ । तायिमपः । जायिन्वा१न्गावा२३यि । ष्टा२

४　६　५
३या३ । धा३४५योऽ६हायि(३) ॥ १४ *॥ [४] १७

अथ तृतीय-तृचे*—

प्रथमा ।

३ १र　२र ३ १ २　३ २ ३ १ ३ १ २
प्राणाशिशुर्म्महीनाꣳहिन्वन्नृतस्यदीधितिम् ।

२ ३ १ २ ३ १　२ ३ १ २ ३ २
विश्वापरिप्रियाभुवदधद्विता ॥ १ †॥

---

● ऊ० गा० १४प्र० २ख० १४सा० ।

* 'आौग्रं साम—इति वि० ।

† ऋ० आ० ६, २, ३, ५ ( २भा० ११२पृ० ) = ऋ० वे० ७, ५, ४, १ ।

"प्राणा" ते [अनिते: शानचि "बहुलञ्छन्दसि (२,४,७३)" —इति विकरणस्य लुक्, "सुपां सुलुग् (७,१,३९)"—इति सुप आकारादेशः] यज्ञस्य प्रापयिता चेष्टयिता "महीनां" महतीनां मंहनीयानां वा अपां "शिशुः" पुत्र-स्थानीयः सोमः "ऋतस्य" यज्ञस्य "दीधितिं" प्रकाशकं धारकं वा स्वीयं रसं "हिन्वन्" प्रेरयन् "विश्वा" सर्वाणि "प्रिया" प्रियाणि हवींषि "परिभुवत्" परिभवति व्याप्नोति। "अध" अपिच "द्विता" द्विधा भवति दिवि च पृथिव्याञ्च वर्त्ततइत्यर्थः॥

"प्राणा"-"क्राणा"--इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३१ २ ३ १ १ २ ३ १र २र ३ २
उपत्रितस्यपाष्योऽ२ऽरभक्तयद्गुहापदम्।

३ १ १ २ १र २र ३ १ २ ३ २
यज्ञस्यसप्तधामभिरधप्रियम्॥ २*॥

"त्रितस्य एतन्नामकस्य ऋषेस्तोतुर्मम यज्ञे "गुहा" गुहायां हविर्धाने वर्त्तमानयोः "पाष्योः" पोषणवद्दृढयोः अधिषवणफलकयोः "पदं" स्थानं सोमः "यत्" यदा "उप अभक्त" समभजत। "अध" अनन्तरं "यज्ञस्य" "धामभिः" च धारकैः "सप्त" सप्तभिश्छन्दोभिः गायत्र्यादिभिः "प्रियम्" प्रीणयितारं सोमम् "अभि" ष्टुवन्ति ऋत्विजः [अपि वा सप्त सर्पणशीलैर्वसतीवर्यादिभिरुदकैः सोममभिषुण्वन्ति॥ २॥

---

* ऋ० वे० ७, ५, ४, ५।

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १र २र ३ २
त्रीणि त्रितस्य धारया पृष्ठेष्वैरयद्रयिम्।
२ ३ ३ १ २ ३ २ ३ १ २
मिमीते अस्य योजना वि सुक्रतुः॥ ३* ॥ १८

सोमः "त्रितस्य" मम यज्ञस्य सम्भूतानि "त्रीणि" सवनानि धारया आत्मीयया "वि धारया"। किञ्च पृष्ठेषु" सामसु "रयिं" दातारमिन्द्रम् "ऐरयत्" आयमतु "सुक्रतुः" शोभनयज्ञः स्तोता "अस्य" इन्द्रस्य "योजना" संयोजनादीनि स्तोत्राणि "वि मिमीते" करोति† यस्मादेवं तस्मादिन्द्रं सामसु प्रेरयत्वित्यर्थः॥

"ऐरयत्"—"एरया"—इति पाठौ॥ ३ ॥ १८

२र १ र २र २
॥ ओम्॥ प्राणा। शिशुर्महो। नाम्। हो
१ २र १ र
इ २। हो। वाचोयि। हिन्वन्नृतस्य दीधितायिम्।
२ १ २ २ १ २ १ १ २
विश्वापा१रा२३यि। प्रो३याभू३वात्। अधा २ ३ द्विता
२ १ र १र १ १
३४३॥(१) उपा। त्रितस्यपा। ष्योः। चोई२। हो।

* ऋ० वे० ७, ५, ४, ३।

† 'विमिमीते--मा माने, मानं करोति'—इति वि०

२र १ र २१ २
वाद्दोयि । अभक्तयङ्ग्हापदाम् । यज्ञास्या१सा २ ३ ।

२ १ २ २ १ २ २र१
:प्ना३धामा३भायि । अधा२३प्रिया३४३म् ॥(२) त्रीणी ।

र २र १ १ २र २ र
त्रितस्यधार । या । धोई२ । द्दो । वाद्दोयि । पृष्ठे

२ १ २ २ १ २ २
षैरयद्रयायिम् । मिमायिते१आ२३ । स्या३योजा३ना ।

१ २ १
विसू२३क्रतू३४३: । ओ२३४५ई । डा(३) ॥ १२*॥ [१]

२र र १ १ १
॥ त्रैतम् ॥ प्राणाशिशुर्मद्दायिनाम् । द्दिन्वन्नृतस्य

र २ र र ५१ ५ १
दीधितायिम् । विश्वापरिप्रिया३भूवो२३४हायि । आ२

३ ५र र २ १ २ १ १ १ १ २
धा२३४औहोवा । ए३ । द्विता२३४५ ॥(१) उपत्रितस्य

र१ २ १ र २ २ ५ १
पाषायो: अभक्तयङ्ग्हापदाम् । यज्ञस्यसप्ताधा३माभो

५ १ २ ५र र २ १ २ १ १ १ १
२३४हायि । आ२धा२३४औहोवा । ए३ । प्रिया२३४५

२र र १ २ १ र र
म् ॥(२) त्रीणित्रितस्यधाराया । पृष्ठेषैरयद्रयायिम् ।

---

* ऊ० गा० ३प्र० १अ० १२सा० ।

२ र र र ऽ १ ५ १ ३ ५र र
मिमीतेअस्ययोड्जानो२३४हायि। वा२यिस्२३४औहो

२ १ ३ १ १ १ १
वा। ए३। क्रतू२३४५ः (३) ॥ २* ॥ [२]

२र र १र २
॥ सुज्ञानम् ॥ प्राणाशिशूः। महीनाम्। हिन्व

१ र २ र १ १र
न्नार्ता२। स्वदीधितायिम्। विश्वापारा२यि। प्रिया२।

३ ५र र १ १ २
भू२वा२३४औहोवा। अधद्वितए३ ॥ (१) उपत्रिता। स्व

१ १ २ १ र १ २ १
पाषियोः। अभक्तायार२त्। गुहापदाम्। यज्ञस्यामा

१र ३ ५र र १ १
२। प्रधा। मा२भा२३४औहोवा। अधप्रियमे३ ॥ २)

२र र १ २ र १ १
त्रीणित्रिता। स्वधारया। पृष्ठेषूवा२यि। रयद्रया

२ र १ १र ३ ५र र
यिम्। मिमीतेआ२। स्ययो। जा२ना२३४औहो

१ २ १ १ १ १ १
वा। विसुक्रतुरे३उपा२३४५(३) ॥ २०† ॥ ३]

२र २ २ १ ५
॥ दैवोदासम् ॥ प्राणा३१। शिशू३१२३४ः। म।

१ १ २ १ २ १ ५र
हा३यिनाम्। हिन्वा३१न्। ऋता३१२३४। स्वदी।

---

* ऊ० गा० ४प्र० १ख० २सा०।

† ऊ० गा० ७प्र० १ख० २०सा०।

धा३यितायिम्। विश्वा३१। परा३१२३४यि। प्रिया। भू३वात्। अधा३१। द्विता३। ओ२३४वा॥(१) उपा३१। चिता३१२३४। स्यपा। षा३योः। अभा३१। क्रया३१२३४त्। गुहा। पा३दाम्। यज्ञा३१। स्य सा३१२३४। प्रधा। मा३भायिः। अधा३१। प्रिया३म्। ओ२३४वा॥(२) चीणी३१। चिता३१२३४। स्य धा। रा३या। पृष्ठा३१यि। ध्रुवा३१२३४यि। रयत्। रा३यायिम्। मिमा३१यि। तेश्रा३१२३४। स्ययो। जा३ना। विमू३१। क्रतू३ः। ओ२३४वा। ऊ२३४पा(३)॥ २१*॥ [४]

॥अध्यम्॥ प्राणाशिशू२र्म। चौनोवा। द्विन्वन्ता। स्यदोधितायिम्। विश्वापरिप्रियाभुवद। धार

* ऊ० गा० ७प्र० २अ० २१सा०।

२ १र १ १ १
३। हिताउवा। अूधिया२। ए२३हिया३४३। ओ२३४५ई। डा(१) ॥ १४* ॥ [५]

२र १र २ ५ २ ३ ५
॥ पौष्कलम् ॥ प्राणाम्राइयिषुः। माहा२३४यिनाम्। ह्विन्वानृता। स्वादायिधी२३४तोम। विश्वापरायि। प्रिया२भ२३४५वा६५६त्। अधद्विता२३४५ ॥(१)· उपत्रीं३तस्य। पाषा२३४योः। अभाक्तयात्। गूह्वापा२३४दाम्। यज्ञास्यमा। प्रधा२मा२३४५भा६५६यिः। अधप्रिया२३४५म् ॥(२) त्रीणित्री३तस्य। धारा२३४या। पृष्ठायिषुवायि। रायद्रा२३४यायिम्। मिमायितेआ। स्ययो२जा२३४५ना६५६। विमुक्तू२३४५ः(३) ॥ २* ॥ [६]

॥ श्रुध्यम् ॥ प्राणाशिशू२र्म्म। ह्वीनोवा। हिन्वन्नृता। स्वदीधितायिम्। विश्वापरिप्रियाभुवद। धा२३।

* ऊ० गा० ६प्र० १ख० १४सा०।

† ऊ० गा० ६प्र० ३ख० २सा०।

२ १र १ र १
द्विताउवा। अूधिया२ ॥(१) उपच्चिता२स्य। पाषियो

२१ २१ २१र२१ २१ २१र २
वा। अभक्तयात्। गुहापदाम्। यज्ञस्य सप्तधामभि

१ २ १र १र
र। धा२३। प्रियाउवा। अूधिया२ ॥(२) त्रीणित्रि

र १ २१र२१ २२२१
ता२स्य। धारयोवा। पृष्ठेषुवायि। रयद्रयायिम्।

र २र र १२र १ २ १र
मिमीतेअस्ययोजनावि। मू२३। क्रताउवा। अूधि

१ २ १
या२। ए२३हिया३४३। ओ२३४५ई। डा(३)॥ ५*॥ [७]

२रर र र १ २
॥ वारवन्तीयोत्तरम् ॥ प्राणाम्शिशूनौहोहायि। मा

३ ५ २ १ ५ १ र र
हा२३४यिनाम्। हिन्वाना२३४हा। तस्यदीधितिंविश्वा

२ ३र४र ५ १ ३ ५ २ ३ ५
पा३४। औहोवा। इहा२३४हायि। उरुवा२३४रायि।

२१र२ १ ७ २ ३र ४र ५ १ ३ ५
प्रियाभु। वाद्धदा३४। औहोवा। इहा२३४हायि।

३र२ ५र ५ २ र प
औहो३१२३४। ता। एहियाहा६हा ॥(१) उपच्चितौ

१ २ ३ ३ ५ २ १ ५ १ र
होहायि। स्थापाषा२३४योः। अभाक्ता२३४हा। यद्गुहा

* ऊ० गा० १२प्र० १अ० ५सा० ।

पदंयश्वस्या३४ । औहोवा । इहा२३४हायि । उद्भवा२

३४सा । प्रधाम । भायिरधप्रा३४ । औहोवा । इहा

२३४हायि । औहो३१२३४ । याम् । एहियाऽहा ॥(२)

त्रीणित्रितौहोहायि । स्याधारा२३४या । पृष्ठायिषू

२३४हायि । ऐरयद्रयिम्मिमीता३४ । औहोवा । इहा

२३४हायि । उद्भवा२३४आ । स्ययोज । नाविसुक्रा३

४ । औहोवा । इहा२३४हायि । औहो३१२३४ । तूः ।

एहियायाऽहा । होऽइ । डा(३) ॥ ८* ॥ [८]

॥ वार्शम् ॥ प्राणाशिशूः । माहा ३ यिनाम् । चि

क्नूतस्यदीधि । तायिम् । विश्वा२पा२३४रायि । प्रि

याभुवा३त् । ई३या । अध । द्वा२यिता२३४औहोवा ॥(१)

उपत्रिता । स्यपाषा३यो: । अभक्तयङ्हाप । दाम् ।

---

* ऊ० गा० १५प्र० २ ख० ८सा० ।

१ ३ ५ १ २ २ ५ २ १
यज्ञा२स्या२३४सा । प्राधामभा३यि: । ई३या । अध ।
३ ५र र २र १ २ १
प्रा२या२३४औहोवा ॥(२) त्रीणित्रिता । स्वधारा३या ।
१ र र ७ ३ ५ १ र
पृष्ठेषैरयद्र । यायिम् । मिमा२यिते२३४आ । स्वायो
२ ३ २ १ ३ ५र र २
जनार । ई३या । विसु । क्रा२तू२३४औहोवा । ऊ
५
२३४पा(३) ॥ ८* ॥ [८] १८

अथ चतुर्थ-तृचे†—

प्रथमा ।

१ २ ३ १ २ ३ १ ३ १ २ ३ १
पवस्ववाजसातयेपवित्रेधारयासुतः ।
१ २ ३ १ २ ३ २ ३ १ २
इन्द्रायसोमविष्णवेदेवेभ्योमधुमत्तरः ॥ १‡ ॥

हे "सोम !" "सुतः" अभिषुतः त्वम् "इन्द्राय" "विष्णवे" च अन्येभ्यो मित्रादिभ्यः "देवेभ्यः" "मधुमत्तरः" अतिशयेन माधुर्य्योपेतः सन् "वाजसातये" अन्न-लाभाय "पवित्रे" "धारया" "पवस्व" क्षर ॥

---

* ऊ० गा० १६प्र० २खं० ८सा० ।

† "गौरीवितं साम"—इति वि०

‡ ऋ० वे० ७, ४, २८, १ ।

"वाजसातये"-"वाजसातमः"—इति पाठौ, "मधुमत्तरः"-"मधुमत्तमः"—इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ ३ १ १ ३ १ २ ३ १ २
त्वाꣳरिहन्तिधीतयोहरिम्पवित्रे अद्रुहः।
१ २ ३ २उ ३ १ ३ १ २ ३ १ २
वत्सञ्जातन्नमातरःपवमानविधर्मणि ॥ २* ॥

हे "पवमान" पूयमान सोम! "वि धर्मणि" विविधं हविषां धारके† यज्ञे "अद्रुहः" द्रोह-वर्जिताः "धीतयः" अङ्गुलयः [धीतय इति अङ्गुलिनाम (निघ० २,५,७)] "हरिं" हरित-वर्णं "पवित्रे" स्थितं "त्वां" "रिहन्ति" लिहन्ति निष्पीड़नार्थं स्पृशन्तीत्यर्थः। तत्र दृष्टान्तः—"वत्सं जातं न मातरः"; 'मातरः' मातृ-भूता गावः उत्पन्नं 'वत्सं' यथा 'लिहन्ति' तद्वत् ॥

"धीतयः"-"मातरः"—इति पाठौ, "मातरः"-"धेनवः"—इति च ॥ २ ॥

अथ तृतीया।

१र २र ३ १र २र
त्वन्द्याञ्चमहिव्रतपृथिवीञ्चातिजभ्रिषे।
१ २ ३ १ २ ३ १ २ ३ १
प्रतिद्रापिममुञ्चथाःपवमानमहित्वना ॥ ३‡ ॥ १९

---

* ऋ० वे० ७, ४, २८, २।

† 'विविधे कर्मणि'—इति वि०।

‡ ऋ० वे० ७, ४, २८, ४।

हे "महिव्रत" महाकर्मन् सोम! "त्वं" "द्यां" द्युलकं "पृथिवीं च" "अति जभ्रिषे" अत्यन्तं बिभर्षि [ डुभृञ् धारण पोषणयोः (त० उ०), तस्य छान्दसे लिटि ( ३,४,६ ) सर्वविधीनां छन्दसि वैकल्पिकत्वात् अत्र इडागमः। अन्तरिक्षे सोमात्मना,-पृथिव्यां लता-रूपेणेति एवं लोकद्वयवर्त्तिनम् ]। हे "पवमान' क्षरन्! त्वं "महित्वना" महत्त्वेन युक्तः सन् "द्रापिं" कवचं "प्रति अमुञ्चथाः" प्रतिमुञ्चसि संवृणोसि ॥ ३ ॥ १९

॥ गौरीवितम् ॥ पव। स्ववा३। जसातयायि।
पवित्रे धारयासुता२३ः। आयिन्द्रायसो३१२३। मत्रा
पूयिष्णवायि। दायिवेभ्योमा३१२३। धुमोवा। ता५
रो६हायि ॥(१) तुवाम्। रिहा३। तिधीतयाः। हृ
रिम्पवित्रेअद्रुहाः। वात्सञ्जाता३१२३म्। नमा५तराः।
पावमाना३१२३। विधोवा। मा५णो६हायि ॥(२) तु
वम्। द्याञ्चा३। महिव्रता। पृथिवीञ्चातिजभ्रिषा२३

* 'द्रापिं'—द्रातव्यम् *** केषां? यजमानानाम्'—इति वि०।

यि। प्रातिद्रापा३१२३यिम्। अमूपुचथाः। पावमाना
३१२३। मह्रोवा। त्वा५नो६ह्रायि(३)॥ १३ ॥ [१]

॥ पार्थम् ॥ ओ३ह्रो३ह्रोयि। पव। स्ववार२। ज
साता२३४यायि। पवि। च धार२। रयासू२३४ताः।
इन्द्रा। थसो२। मवायिष्णा२३४वायि। देव। भ्यो
मा२३। धुमा३न्ता५रा६५६ः ॥(१) तुवाम्। रिहा२।
तिधायिता२३४याः। हरिम्। पवा२यि। च अद्र२३
४ह्राः। वत्सम्। जाता२म्। नमाता२३४राः। पव।
माना२३। विधा३र्म्मा५णा६५६यि ॥(२) तुवम्। द्या
म्वा२। महिव्रा२३४ता। पृथि। वीच्चा२। तिजभ्रो
२३४षायि। प्रति। द्रापा२यिम्। अमुचा२३४थाः।
ओ३ह्रो३ह्रोयि। पव। माना२३। महा३यित्वा५ना
६५६(३)॥ १४† ॥ [२]

* ज० गा० ६प्र० १ख० १३सा०।

† ज० गा० ६प्र० १ख० १४सा०।

२ १ १ २ ५ २
॥ रयिष्ठम् ॥ पवस्ववा । जसाता३यायि । औ३हो

२ १ २१२ १ २ १ १ १ १ २ २
३वा । इन्द्रायसोमविष्णवा२ ३ ४ ५ यि । इन्द्रायसो ।

१ २ २ ५ २ २ २ १२ १२ १ २ ३ १
मवायिष्णा३वायि । औ३हो३वा । देवेभ्योमधुमत्तरा२

१ १ १ २२ २ २ १ २ २ ७ २ २
३४५: । देवेभ्योमा । धुमात्ता३रा: । औ३हो३वा ॥(१)

२ २ १ २ २ ५ २ २ १
तुवा॰रिहा । तिधायिता३या: । औ३हो३वा । हरि

२ २ १ ३ १ १ १ १ २ २ १ २ २
म्पविन्ने अद्र॒हा२३४५: । हरिम्पवायि । न्ने आद्र॒३हा: ।

७ २ २ १ २२ १ २२ ३ १ १ १ १ २ २
औ३हो३वा । वत्सञ्जातन्नमातरा २ ३ ४ ५: । वत्सञ्जा

१ २ २ ५ २ २ १ १२ १ २
ताम् । नमाता३रा: । औ३हो३वा । पवमानविधर्म्म

३ १ १ १ १ २ २ १ २ २ ५ २ २
णो२३४५ । पवमाना । विधर्म्मा३णायि । औ ३ हो ३

२ २ १ २ २ ७ २
वा ॥(२) तुवन्द्याञ्चा । महायिव्रा३ता । औ ३ हो ३

२ १२ २ २ ३ १ १ १ १ २ २
वा । पृथिवीञ्चातिजभ्रिषा२३४५यि । पृथिवीञ्चा । ति

१ २ २ ५ २ २ १ २२ १ २ ३ १ १
जाभ्री३षायि । औ३हो३वा । प्रतिद्रायिममुञ्चथा२ ३

१ १ २ २ १ २ २ ५ २ २
४५: । प्रतिद्रापायिम् । अमू॒ञ्चा३था: । औ३हो३वा ।

१ २र १ २ ३ ११११ १ २र ३ २ २ १
पवमानमह्यिलना२३४५ । पवमानमह्यिलना१ । पवमाना ।

१ २ २ ५ २ २ ५ २ २ ५ ३
महायित्वा३ना । औ३हो३वा । औ३हो३वा । ई३या ।

५ २ ४ २ २ ५
ई३या ३ ४ । हा । हाउवा३ । ऊ३२३४पा(४) ॥१*॥ [३]

५ ३ २ २ २
॥ द्विरभ्यस्तत्वाष्ट्रीसाम ॥ पव । स्ववा३ । हा३हा ।

३ २र १ ५ २र २ २ २ १ २र
जसाताया२३४यि । पवि । त्रधा३ । हा३हा । रया

१ ५र ३ २ २ २ ३ २ १
सूता२३४ः । इन्द्रा । यसो३ । हा३हा । मविष्णा२

र ४र ३र २ २ २ ३ २ १
३४यि । देवे । भ्योमा३ । हा३हा । धुमा३हो२३

५ ४ ५ ५र ३ २
४ । वा । ता ५ रो ६ हायि ॥(१) तुवाम् । रिहा ३ ।

२ २ ३ २र १ ५ ३ २ २
हा३हा । निधीताया२३४ः । हरिम् । यवा३यि । हा

२ ३र २ १ ५ ३र २ २
३हायि । त्रग्रद्रुहा२३४ः । वत्सम् । जाता३म् । हा

२ ३ २र १ ५ ३र २ २ २
३हायि । नमातारा२३४ः । पव । माना३ । हा३हा

३ २ १ ५ ४ ५ ५
यि । विधा३हो२३४ । वा । मा५णो६यायि ॥(२) तुव

* ऊ० गा० ८प्र० १ख० १सा० ।

म्। द्याऽ३चाऽ३। हाऽ३हा। महित्वाताऽ२३४। पृथि।
वीऽ३चाऽ३। हाऽ३हा। निजभ्रोषाऽ२३४यि। प्रति। द्रा
पाऽ३यिम्। हाऽ३हायि। अमुञ्चाथाऽ२३४ः। पव। मा
नाऽ३। हाऽ३हायि। मह्याऽ३होऽ२३४। वा। त्वाऽ५नोऽ६
हायि(३) ॥ ६* ॥ [४]

॥ श्यावाश्वम् ॥ पवा ३१। स्वाऽ३वा। जसा। ता
ऽ३ये। एहिया। पा। विचेधारा। या। सुताऽ२ः।
एहियाऽ२। इन्द्रायसोमाऽ३वाऽ३यि। चाऽ२३४वायि। ऐ
हाऽ२यि। एहियाऽ२। देवेभ्योमाधूऽ३माऽ३। ताऽ३४४रो
ईऽहायि ॥(१) तुवाऽ३१म्। राऽ३यिद्व। निधी। ताऽ२३ः।
एहिया। हा। रिम्पवित्रे। अ। द्रुहाऽ२ः। एहि
याऽ२। वत्सञ्जातान्नोऽ३माऽ३। ताऽ२३४राः। ऐहाऽ२

* ऊ० गा० ८प्र० २ख० ६मा०

१र १र २ ४ २
यि । एहिया२ । पवमानावा३यिधा३ । मा३४५णो६

५ ३ १ १ ४ ५ २ ४
हायि ॥(२) तुवा३१म् । द्या३च्च । महि । ब्रा३त ।

५ १ र र २ १
एहिया । पा । थिवीच्चातायि । ज । भ्रिषा२यि ।

१र १र २ ४ ५ २र
एहिया२ । प्रतिद्रापायिमा३सू३ । चा२३४था: । ऐ

२र १र २ ४ १
हा२यि । एहिया२ । पवमानामा३हा३यि । त्वा३४५

५
नो६हायि(३) ॥ १८* ॥ [५]

२ र १ १
॥ आन्धीगवम् ॥ पवस्ववाजसा१तायायि । पवित्रे ।

र २ १ १ र २ र १ ३ १
धारा२३या । ऊम्मा२१ऽ२ । सुतइन्द्रायसोमविष्णवा२

१ १ १ १ २ २ २ २
३४५यि । दायिवा३उवा । भ्यो२मा । धू२३मा । त

१ २ ४ ५ २र २ १
रा । औ३होवा ॥(१) त्वांरिहन्तिधा१यितायाः । ह

२ १ १ र २ १ १र १
रिम्प । विच२३आ । ऊस्मा२१ऽ२ । द्रुहोवत्सञ्जातन्न

२र १ ३ १ १ १ १ १ २ २ १
मातरा२३४५: । पावा३उवा । मा२ना । वा २ ३ यि

* ऊ० गा० १५प्र० २ख० १९सा० ।

धा । मणा । औ३होवा ॥(२) त्वन्द्याञ्चमहा १ यिव्रा

ता । पृथिवीम् । चाता२३यिजा । ऊम्मा २१ऽ२ । भ्रि

षेप्रतिद्रापिममुञ्चथा२३४५: । पावा३उवा । मा २ना ।

मा२३हायि । त्वना । औ३होवा । हो५ई । डा(३) ।

॥ २०॥ [६]

॥ आकूपारे ॥ पवस्वा२३वाज । साता२३४यायि ।

पवा २यिस्वधा । रयासुता: । इन्द्रायासो २ । मविष्ण

वायि । देवेभ्योमा२३ । धू२३मा३ । ता३४५ रो ६ हा

यि ॥(१) तुवा ऽरा२३यिहन्ति । धीता२३४या: । हरा

२यिम्पवायि । ने अद्रुहा: । वत्सञ्जाता २म् । नमात

रा: । पवमाना२३ । वा२३यिधा३ । मा३४५णो६हा

यि ॥(२) तुवन्द्या२३ञ्चम । दिव्रा२३४ता । पृथा २यि

---

● ऊ० गा० १५प्र० २अ० २०सा०

१र २ १ १ १
वीश्वा । तिजभ्रिषायि । प्रतिद्रापा २यिम् । अमुश्च
२ १ १ ४ २ ४
थाः । पवमाना२३ । मा२३त्वा३यि । त्वा३४५नोई३वा
यि(३) ॥ २१* ॥ [७]

२ १र २ १
॥ आत्रेयम् ॥ पवस्ववा । जसातार२३यायि । पा
२र १र २ १र २ १ र र र
वित्रेधा । रयासू२३ताः । इन्द्रायसो । माविष्णावा २
१र १ २ ४ ५ ५
यि । देवेभ्योश्मा३ । धुमोवा । ता५रोई३वायि ॥ (१)
२ र १र १ १ २ १ २र १
तुवां्रिश्चा । तिधीतार२३याः । वारिपवि । त्रे अद्र
२ १ र ७५ १ २ २
२३वाः । वत्सञ्जातम् । नामातारा २ः । पवामा३ना२ ।
४ ५ ४ ५ २ र १
विधोवा । मा५णोई३वायि ॥(२) तुवन्द्याञ्चा । मचित्रा
२ १ १र १ १ २ १ र
२३ता । पार्थिवीश्चा । तिजभ्री२३षायि । प्रतिद्रापिम् ।
७ १ २ २ ४ ५ ४
आमुञ्चाथा २ः । पवामा३ना३ । मद्दोवा । त्वा५नो
५
ई३हायि(३) ॥ १०† ॥ [८]

---

* ऊ० गा० १५प्र० २अ० २१गा० ।

† ऊ० गा० १६प्र० १अ० १०गा० ।

४ ३ ४ ३ ४र

॥ यज्ञायज्ञीयम् ॥ पवा५स्व । वा३जा३सा३साता

५ १ र २ १ २ १ १ १ र

यायि । पवित्रेधा । रा३यासू३ताः । इन्द्रा२य । सो

२ १ २ २ १ रर

मा२३वा । ऊम्मायि । ष्णा३वायि । दायिवेभ्योमधुमा

५१२ १ १ १र र १र

३त्तराउ ॥(१) रास्व । वा॒रिद्दन्तिधीतयोह्वरिम्यवायि ।

२ १ २ २ १ र १ २ १

त्रे३आद्रू३हाः । वत्सा२जा । तन्ना२३मा । ऊम्मायि ।

२ २ १ र ५ ३ १ २ १

ता३राः । पावमानविधा २ म्मणाउ ॥(२) णायित्व । व

र र २ २ २ २ १

न्द्यांन्द्वमहिव्रतपृथिवीन्द्वा । ती३जाभी३षायि । प्राता२

१र २ १ २ २ १ र

यिद्रा । पिमा२३मू । ऊम्मायि । चा३थाः । पावमान

५ ३ २ ५ १ १ १

मद्दा२यित्वनाउ । वा३४५(३) ॥ ९ ॥ [९]

१ ५ २र१र

॥ त्रासदस्यवम् ॥ पा२३४ । व । स्वा । जासात

१ र५ २र१र

या२३यि । पा२३४ । वि । त्रे धा । रायासुता२३ः ।

१ र ५ १र १ १

आ२३४यि । द्रमयसो । माविष्णावा२३यि । दा२३४यि ।

* ऊ० गा० १६प्र० २अ० ९सा० ।

२ २ ५ ११ २ १ २
वे। भ्योमा। धुमत्तरा३१उ ॥(१) तू२३४। वाम्।

५ १२ रि १ ५
रिहा। तीधीतया२३ः। द्वा२३४। रिम्। पवायि।

२र १ १ २ ५ १र १र
त्रे अद्र्चा२३ः। वा२३४। त्सम्। जाताम्। नामा

१ २ ५ १र १ र
तरा२३ः। पा२३४। व। माना। वीधर्म्मणा३१उ ॥(२)

१ र ५ २र १ १
तू२३४। वम्। द्याम्चा। माचिव्रता२३। पा२३४।

र ५ २र १ १
थिं। वीच्चा। तौजम्रिषा२३यि। प्रा२३४। ति।

र ५ २र १ १ र ५
द्रापायिम्। आमुच्चथा२३ः। पा२३४। व। माना।

२र १ २ ११११
माचित्वना३१उ। वा२३४५(३) ॥ ३* ॥ [१०]

३ ५ र ३र ४ ५र २
॥ वषट्कारनिधनम् ॥ पवस्ववाजसातये। पवस्वा

४र ५ ४र ५ २ र र १ ७ १ २
३वाजसातयायि। पवित्रे धारा३यासुता२ः। रयासू१

१र ऽ २ र १ ७
ता२३ः। ओमो३वा। इन्द्रायसोमा३वायिष्णवा२यि।

१ २ १र ऽ २ ररर १ ७
मवायिष्णा१वा२३यि। ओमो३वा। देवेभ्योमध३मात्त

---

* ऊ० गा० १०प्र० २ख० ३सा०।

रा२ः। धुमात्ता१रा२३ः। ओम्। ओ२। वा२३४। औहोवा। ऊ२३०पा(१) ॥ २* ॥ [११]

॥ प्रुद्वाप्रुद्धीयाद्यम् ॥ त्वन्द्याञ्चमहिव्रता। पृथिवी
ञ्चातिजभ्रीऽ२३षाषि। प्रतिद्राापिममुञ्चा२३थाः। पवमा
२३ना ३। मा २। हित्वा ३ ४ औहोवा। ना २ ३
४ ५ (३) ॥ १२† ॥ [१२] १९

अथ पञ्चम-तृचेः‡—

प्रथमा।

इन्दुर्वाजीपवतेगोन्योघा
इन्द्रेसोमःसहइन्वन्मदाय।
हन्तिरक्षोबाधतेपर्यरातिं
वरिवस्कृण्वन्वृजनस्यराजा ॥ १¶ ॥

---

* ऊ० गा० २३प्र० ३ख० २सा०।

† ऊ० गा० २३प्र० १ख० १२सा०।

‡ 'दाशस्पत्यं साम'—इति वि०।

¶ ऋ० ग्रा० ६, १, ४, ८ (१भा० १३९४० )=ऋ०वे० ७, ४, ११, ५।

"इन्दुः" चरण-शीलः "सोमः" "वाजी" बलवान् "गोन्योघा" गमनशील-नीचीनाग्र-रस-सङ्घातः "इन्द्रे" "सह्वः" बलकरं रसम् "इन्वन्" प्रेरयन् सोमः "मदाय" अस्य मदार्थं "पवते" चरति । किञ्च "रक्षः" राक्षस-कुलं हन्ति" हिनस्ति । किञ्च "अरातिं" शत्रुं "परि बाधते" परितः संहरति । कीदृशः ? "वरिवः" वरणीयं धनं "कृण्वन्" स्तोतॄणां कुर्वन् "वृजनस्य" बलस्य "राजा" ईशिता सोमइति ॥

"अरातिम्"–"अरातीः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ ३१ २ ३ १ २   ३ २
अधधारयामध्वापृचान

३ १र २र   ३ २ २
स्तिरोरोमपवतेअद्रिदुग्धः ।

२ ३ १ २   ३ १ २ ३ २
इन्दुरिन्द्रस्यसख्यञ्जुषाणो

३ २ ३ १ २   ३ १र २र
देवोदेवस्यमत्सरोमदाय ॥ २* ॥

"अध" अथ अनन्तरं "अद्रि दुग्धः" ग्रावभिर्दुग्धोऽभिषुतः सोमः "मध्वा" मदकारिण्या "धारया "पृचानः" देवान् सम्यर्चयन्† "रोम"‡ अवि-रोमभिः कृतं पवित्रं "तिरः"

---

* ऋ० वे० ७, ४, १३, १ ।

† 'पृचानः—निष्पाद्यमानः'—इति वि० ।

‡ 'रोम—रोमाणि अविमयानि, दशापवित्रस्येत्यर्थः'—इति वि० ।

तिरस्कृत्य व्यवधायकं कृत्वा "पवते" कलशेषु चरति। किञ्च "इन्द्रस्य" "सख्यं" सखिभावं कर्म वा "जुषाणः" सेवमानो "देवः" द्योतमानः "मत्सरः" मदकरः* "इन्दुः" सोमः "देवस्य" इन्द्रस्य "मदाय" मदार्थं "पवते" चरति ॥ २ ॥

अथ तृतीया।

३ २ ३१ २ ३ २
अभिव्रतानिपवतेपुनानो

३ २ ३ २उ ३१२ ३र २
देवोदेवान्त्स्वेनरसेनपृञ्चन्।

२ ३ १२ ३१र ३र ३
इन्दुर्धर्माण्यृतुथावसानो

२३ १ २ ३२ ३१ २
दशक्षिपोअव्यतसानोअव्ये ॥ ३† ॥ २०

"धर्माणि" धारकाणि "व्रतानि" कर्माणि "ऋतुथा" ऋतोः काले "वसानः" आच्छादयन् "इन्दुः" सोमः "पुनानः" पूयमानः सन् "अभि पवते" कलशानभिलक्ष्य चरति। कीदृशः? "देवः" सङ्क्रीडनशीलः‡ "स्वेन" आत्मीयेन "रसेन" इन्द्रादीन् "पृञ्चन्" सम्पर्चयन् संयोजयन्¶। तमिमं सोमं

* 'मत्सरः—मदनीयः भक्षणीयो वा"—इति वि०।

† ऋ० वे० ७, ४, १२, २।

‡ 'देवः—सोमः दानादि-गुण-युक्तः'—इति वि०।

¶ 'पृञ्चन्—तर्पयन् प्रीणयन् वा'—इति वि०।

"दश" दशसङ्ख्याकाः "क्षिपः"* [ अङ्गुलि-नामैतत् ( निघ० २,५,२ ) ] कर्मार्थं प्रेर्यन्त इति तत्सङ्ख्याका अङ्गुलयः "सातौ" समुच्छ्रिते† "अव्ये" अवि-भवे पवित्रे "अव्यत" गमयन्ति [यद्वा, तत्र पवित्रे पूयमानं सोमम् अव्यत गच्छन्ति । वी गत्यादिषु ( अदा०प० ) लङि व्यत्ययेनात्मनेपदम् ॥

"व्रतानि"-"प्रियाणि"—इति पाठौ ॥ ३ ॥ २०

॥ दाशस्पत्यम् ॥ इन्दुरौहोवाहाइया । वाजाउ । वा३ । हाउवा । पवतेगोनियोघाउ । वा३ । हाउ वा । इन्द्रायिसोमः । साहइन्वाउ । वा३ । हाउवा ३ । मा२दा२३४औहोवा । या२३४५ । हन्तायिरत्नो । वाधातायिपाउ । वा३ । हाउवा३ । मा२दा२३४औ होवा । तो२३४५म् । वरायिवस्कृ । णवन्वृजनाउ । वा३ । हाउवा३ । स्या२रा२३४औहोवा । जा २ ३

* 'क्षिपः—क्षिप्यन्त इति क्षिपः अङ्गुल्यः,—इति वि०

† 'उच्चे प्रदेशे'—इति वि० ।

४५ ॥(१) अभीह्वोवाह्वाईया। धाराउ। वा३। हाउ

वा। यामधुवापृचामाउ। वा३। हाउवा। तिरोरो

म। पवाताआउ। वा३। हाउवा३। द्रा२इदू२३४

औहोवा। ग्धा२३४५ः। इन्दूरायिन्द्रा। स्वसाखीया

उ। वा३। हाउवा३। जू२षा२३४औहोवा। णा२३

४५ः। देवोदायिवा। स्वमात्माराउ। वा३। हाउ

वा३। मा२दा२३४औह्वोवा। या२३४५ ॥(२) अभीह्वो

वाह्वाईया। व्रताउ। वा३। हाउवा। निपवतेपु

नानाउ। वा३। हाउवा। देवोदायिवान्। स्वेना

रासाउ। वा३। हाउवा३। ना२पा२३४औह्वोवा।

चा२३४५न्। इन्दुर्धर्मा। णियार्त्तथाउ। वा३। हा

उवा३। वा२सा२३४औह्वोवा। ना२३४५ः। दशाहा

यिपो । अव्यातासाउ । वा३ । हाउवा३ । नोर्श्चा

२३४औहोवा । व्यार२३४५यि(३) ॥ १५* ॥ [१]

॥ सम्पावैयश्वम् ॥ ओ३हायि । ओ३हा । ओहा ।

इया२ । ओ३हा३ए । इन्दुर्वाजी । पवते । गोनियो

घाः । इन्द्रे सोमाः । सहइ । न्वन्मदाया । हन्तिर

क्षो । बा३धते । पर्य्यैरातीम् । वरिवस्का । एवा ३

न्वृज । ना३४३ । स्या३रा५जा६५६ ॥(१) अधधारा ।

या३मधु । बापृचानाः । तिरोरोमा । पवते । अद्रि

दुग्धाः । इन्दुरिन्द्रा । स्या ३ सखि । यज्जुषाणाः ।

देवोदेवा । स्यमत्स । रो३४३ । मा३दा५या६५६ ॥(२)

अभिव्रता । नी३पव । तेपुनानाः । देवोदेवान् । स्वे

३नर । सेनपृचान् । इन्दुर्ईर्म्मा । णी३क्षतु । थाव

* ज० गा० ५प्र० १ख० १५सा० ।

४ ५ २ १ २ ३र १ १
साना:। ओ३हायि। ओ३हा। ओहा। इया२।
५ २ २ १ ११ २ २ ४
ओ३हा३ए। दश्चित्रियो। अव्यत। सा३४३। नो३आ
५व्याई५६यि(३)॥ ५*॥ [२] २०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य
षष्ठः खण्डः† ॥ ६ ॥

---

अथ सप्तमे खण्डे,‡ प्रथम-सूक्तम्¶—

प्रथमा।

१ २ ३१ २ ३ १२
आतेअग्नइधीमहिद्युमन्तन्देवाजरम्।
२ ३ २ ३१ २ ३ २ ३ १ २ ३१र
यद्धस्यतेपनीयसीसमिद्दीदयतिद्यवी
२र ३ २ ३ १ २
षंस्तोतृभ्यआभर॥ १ ॥

---

* ऊ० गा० ८प्र० २ख० ५सा०।

† 'यज्ञायज्ञीयमग्निष्टोम साम'—इति वि०।

‡ 'इदानीमुक्थसामानि'—इति वि०।

¶ 'सप्तमं साम'—इति वि०।

§ छ० आ० ५, १, ४, १ (१भा० ८५४पृ०) = ऋ० वे० ३, ८, २२, ४

हे "अग्ने!" "द्युमन्तं" दीप्तिमन्तम् "अजरम्" अजीर्णम् "ते" त्वाम् "आ" सर्वतः "इधीमहि" दीपयामः। "यत् ह" यदा खलु "ते" तव "स्या" सा "पनीयसी" स्तुत्या "समित्" दीप्तिं "दिवि" द्युलोके "दीदयति" दीप्यते तदा हे अग्ने! "स्तोतृभ्यः" अस्मभ्यम् "इषम्" अन्नम् "आभर" आहर॥१॥

अथ द्वितीया।

१२ ३२ १२ २१२
आते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते।

१ २ २ २३ १ २ ३ १ २३ १ २
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यꣳ हूयत

३१२ ३ २३१ २
इषꣳ स्तोतृभ्य आभर॥ २*॥

हे "ज्योतिषस्पते" दीप्तेः स्वामिन् अग्ने! "शुक्रस्य" दीप्तस्य "ते" तुभ्यम् "ऋचा" मन्त्रेण सह† "हविः"‡ "आ" आभिमुख्येन "हूयते"। हे "सुश्चन्द्र" सुष्ठाह्लादक! शोभन-हिरण्य! वा, हे "दस्म" शत्रूणामुपक्षपयितः!। शिष्टं गतम्॥

"ज्योतिषः"--"शोचिषः"—इति पाठौ॥ २॥

---

* ऋ० वे० ३, ८, २२, ५।

† 'याज्यानुवाक्या-लक्षणया'—इति वि०।

‡ 'हविः—चरु-पुरोडाशादि-लक्षणम्'—इति वि०।

अथ तृतीया।

१२ २ १ २ ३ १ २
ओभेसुश्चन्द्रविश्पतेदर्वी श्रीणीषआसनि।

२ ३ ३ १ २ ३ १ २ ३
उतोनउत्पुपूर्याउक्थेषुशवसस्पत

१ २ ३ २ ३ १ २
इषꣳस्तोतृभ्यआभर॥ ३* ॥ २१

हे "सुश्चन्द्र" शोभनाह्लादक! शोभन-हिरण्य! वा, अग्ने! "उभे" "दर्वी" दर्व्यौ हविः-पूर्णे जुहूप्रभृती "आसनि" आस्ये "आ श्रीणीषे" आश्रयसि पचसि वा "उतो"† अपिच "नः" अस्मान् "उक्थेषु" यागेषु‡ "उत्पुपूर्याः उत्पूरय¶ फलैः। हे "शवसस्पते" बलस्य पालयितः!। इषमित्यादि गतम् ॥३॥२१

३२ ४२ ५ २ २ ४ ५
॥ सञ्जयम् ॥ आतेअग्नइधी। मा३हायि। द्युम

२ ४२५ ४ ५ ३ ४ ३२ ४२ ३ ४२ ५ २ ४ ३ ४२ ३ ४ ५
न्ता३न्देवअजरम्। यद्धस्यातेपनीयसी। समिद्दीदयता

१ ऽ २ २ ५ ३२ ४२ ५ २
यि। ऊ३। ऊम्। द्या२३४वी ॥(१) आतेअग्नऋचा।

२ ४ ५ २ ४२ ५ ४ ५ ३ ४ ३ ४
हा३वायिः। शुक्रस्या३ज्योतिषस्पतायि। सुश्चन्द्रदस्म

* ऋ० वे० ५, ८, २२, ४।

†, ¶ 'उत उ—इति पदपूरणः'—इति वि०।

‡ 'उक्थेषु—सामसु'—इति वि०।

१ ४ र १ ४ र ३ ४ ५ ऽ १र १ ५
विश्वतेद्रव्यवाट्तुभ्यꣳ३। ऊ३। ऊम्। या२३४ता

१र ४र ५ २ ४ ५ र २ ४
यि॥(२) ओभेसुश्चन्द्रवि। भ्या३तायि। दवीत्रा३यि

रर ५ ४५ ५ ३र ४ ३ ४ र र ३र ४ ५ ऽ
णीषत्रासनायि। उतोनउत्युपूर्व्याउक्थ्युषुभ्रवसा। हु३

३ ५ १ र २ २ ऽ
३ऊम्। पा२३४तायि। इषꣳस्तोनृभ्या३भा। ऊ३।

२ २ ५
ऊम्३४म्। भा३४५रोई३दायि(३)॥ १६ *॥ [१]

१ र ५ र ४ ५
॥ सौगमतम्॥ आ२३४। तेअग्नइधी। माद्दायि।

२ र १ २ १ २ १ २ २
द्युमन्तन्देवा३। आ२३। जरमा। यद्धास्या३ता३यि।

१ २ ५ २ १ १ २ ३
पानीरया२३४सो। समिद्दीरद्य। ता२३यि। द्यवि

२ १ र ५ र ४ ५ २
या॥(१) आ२३४। तेअग्नऋचा। हावायिः। शुक्र

र १ १ ३ २ १ २ २
स्यज्योती३। षा२३ः। पतआ। सुश्चान्द्रा३दा३।

१ २ ५ २ १ १
स्यवा२यिअपा२३४तायि। द्रव्यवा२ट्तुभ्यम्। ह्र२३।

२ ३ २ १ र ५ ४ ५
यतआ॥(२) ओ२३४। भेसुश्चन्द्रवि। ग्रपातायि।

* ऊ० गा० ३प्र० १खं० १६गा०।

१२ २ २ २१२ १ २३२ १ ० २
दवीश्रोणोषे३ । आ२३ । सनिया । उतोना३ऊ३त् ।

१ ३ ५ २ १२ १ २३२
पुपू२रा२३४याः । उक्थेषू२अव । सा२३ः । पतआ ।

१ २ २ १ ४ २ ५
इषा२स्तो३टू३ । भ्या२३आ३ । भा३४५ रो६ हायि ।

॥ ६ * ॥ [१२] २१

अथ द्वितीयदृचे†—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ ३ १
इन्द्रायसामगायतविप्रायबृहतेबृहत् ।

३ १ २ ३ १ २ ३ १ २
ब्रह्मकृतेविपश्चितेपनस्यवे ॥ १ ‡ ॥

हे उद्गातारः ! "इन्द्राय" "बृहत्" एतन्नामकं साम "गायत" उच्चरत । कीदृशाय ? "विप्राय" मेधाविने "बृहते" महते "ब्रह्मकृते" वृष्टिद्वारा हविर्लक्षणस्यान्नस्य कर्त्रे "विपश्चिते" विदुषे "पनस्यवे" स्तुतिमिच्छते ॥

"ब्रह्मकृते"-"धर्मकृते"—इति पाठो ॥ १ ॥

---

* ऊ० गा० १७प्र० १अ० ६सा० ।

† ऋ० आ० ४, २, ५, ८ (१भा० ७६६ पृ०)=ऋ० वे० ६, ७, १, १ ।

‡ 'महावैश्वामित्रं साम'—इति वि० ।

अथ द्वितीया ।

१र २र ३१२ ३१र २र
त्वमिन्द्राभिभूरसित्वꣳसूर्य्यमरोचयः ।
२ १२ ३१२ ३१ २
विश्वकर्म्माविश्वदेवोमहाꣳअसि ॥ २ * ॥

हे "इन्द्र!" "त्वम्" "अभिभूः" शत्रूणाम् अभिभविता "असि" भवसि" किञ्च "त्वम्" "सूर्यम्" आदित्यम् "अरोचयः" तेजोभिरदीपय,† किञ्च "विश्वकर्मा" विश्वस्य कर्त्तासि "विश्वदेवः" सर्वदेवश्चासि [ तथाच यजुर्ब्राह्मणम्—"अग्निं वा अन्वन्या देवता इन्द्रमन्वन्या" इति] अतो "महान्" सर्वाधिकोऽसि ॥२॥

अथ तृतीया ।

३ २ ३ १ १ २ २ १२ ३ २ ३ १
विभ्राजज्ज्योतिषास्वाऽ३ऽरगच्छोरोचनन्दिवः ।
३ १ २ ३ २ १
देवास्तइन्द्रसख्यायये मिरे ॥ ३‡ ॥ २२

हे "इन्द्र !" त्वं "ज्योतिषा" तेजसा "दिवः" आदित्यस्य "रोचनं" प्रकाशकं अधिकरणत्वेन "स्वः" स्वर्गं "विभ्राजत्" प्रकाशयन् "अगच्छः" अप्राप्नोः, किञ्च "देवाः" सर्वाः "ते" तव

* ऋ० वे० ६, ७, १,२ ।

† 'त्वं सूर्यमपि दीपयसे'—इति वि०

‡ ऋ० वे० ६, ७, १, ३ ।

"सख्याय" मित्रत्वाय "येमिरे" स्वं स्वमात्मानं निर्यमितवन्तः* अस्माकम् इन्द्रः सखा यथा स्यादिति सर्वे देवाः प्रयत्नमकार्षु-रित्यर्थः ॥ ३ ॥ २२

॥ सौमित्रम् ॥ औहोहोयि । औ२होइयि । ओ२२३४५वा६५६ । इन्द्रा२यसामगायता२३४५ । विप्रा२यबृहा१त् । ब्रह्मकृते२विपश्चिते२३४५ । ए३ । पनस्यवे२३४५ ॥(१) त्वमिन्द्राभिभूरसौ२३४५ । त्वꣳसूर्य्यमरोचया२३४५ः । विश्वकर्म्माविश्वदेवा२३४५ः । ए३ । महाꣳअसा२३४५यि ॥(२) विभ्राजज्ज्योतिषास्वा२३४५ः । अगच्छोरोचनन्दिवा१ः । देवास्तइन्द्रसख्याया२३ ४ ५ । औहौहोयि । औ३होइयि । ओ२२३४५वा६५६ । ए३ । येमिरा२३४५यि(३) ॥ १७ † ॥ [१] २२

---

* 'एतदुक्तं भवति—त्वदीयाय सख्याय चात्मानं नियेमिरे'—इति वि० ।

† ऊ० गा० १प्र० १ख० १७सा० ।

अथ तृतीय-तृचे*—

प्रथमा।

१ २ ३ १ २ ३१ २ ३ १ २
असाविसोमइन्द्रतेशविष्ठधृष्णवागहि।

१ २ ३ २उ ३ २ ३ ३२ १ २
आत्वापृणक्त्विन्द्रियꣳरजःसूर्य्योनरश्मिभिः॥ १ † ॥

हे "इन्द्र!" "ते" त्वदर्थं "सोमः" "असावि" अभिषुतोऽभूत्। हे "शविष्ठ" अतिशयेन बलवन्! अतएव "धृष्णो" शत्रूणां धर्षयितः! इन्द्र! "आगहि" देवयजनदेशमागच्छ, आगतञ्च "त्वा" त्वाम् "इन्द्रियं" सोमपानेनोत्पन्नं प्रभूतं सामर्थ्यम् "आ पृणक्तु" आपूरयतु। "रजः" अन्तरिक्षं "रश्मिभिः" किरणैः "सूर्यो न" यथा सूर्यः पूरयति तद्वत् [शविष्ठ—शवस्विन्-शब्दादिष्ठनि विन्मतोर्लुक्, "टेः (६,४,१५५)"—इति टि-लोपः, पादादित्वान्निघाताभावः (८,१,१८)। गहि—गमेर्लोटि "बहुलंछन्दसि (२,४,७३)"—इति शपो लुक्, "अनुदात्तोपदेश (६,४,३७)"—इत्यादिना अनुनासिक-लोपः, तस्य असिद्धवदत्राभात् (६,४,२२)"—इत्यसिद्धत्वाद्धेर्लुगभावः॥ १ ॥

---

* 'मद्दावैश्वामित्रं साम'—इति वि०।

† ऋ० आ० ५, २, १, ६ (१भा० ७०८पृ०) = ऋ० मं० १, ६, ४, १।

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

आतिष्ठवृत्रहन्रथंयुक्तातेब्रह्मणाहरी।

३ २ ३ २ ३ २ ३ १ २ ३ १ २

अर्वाचीनꣳसुतेमनोग्रावाकृणोतुवग्नुना॥ २ *॥

हे "वृत्रहन्" शत्रूणां हन्तः इन्द्र! "रथम्"† "आ तिष्ठ" आरोह। यस्मात् "ते हरी" त्वदीयावश्वौ "ब्रह्मणा" स्तोत्र-लक्षणेन मन्त्रेण‡ "युक्ता" रथेऽस्माभिर्योजितौ ["सुपां सुलुग् (७,१,३९)"—इत्याकारः] तस्मात् त्वं रथमातिष्ठ। "ते मनः" त्वदीयं मनश्च "ग्रावा" अभिषवार्थं प्रवृत्तः पाषाणः "वग्नुना" वचनीयेनाभिषवशब्देन ["वचेर्गश्च (उ० ३, ३२)"—इति नु-प्रत्ययो गकारश्चान्तादेशः] "अर्वाचीनम्"—अस्मदभिमुखं "सुकृणोतु" सुष्ठु करोतु॥ २॥

अथ तृतीया।

२ ३ १ २ ३ २ ३ १ २

इन्द्रमिद्धरीवहतोप्रतिधृष्टशवसम्।

१ २ ३ १ २ ३ २ ३ २ ३ १ २

ऋषीणाꣳसुष्टुतीरुपयज्ञञ्चमानुषाणाम्॥ ३ ¶॥ २३

॥ इति तृतीयः प्रपाठकः॥

---

* ऋ० वे० १, ६, ५, ३=य० वे० ८, ३३।

† 'रथं—रंहणीयं वेगवन्तम्'—इति वि०।

‡ 'ब्रह्मणा—त्रैविद्य-लक्षणेन अथवा ब्रह्मणा अन्नेन। अथवा ब्रह्मणा हिरण्य-गर्भेण'—इति वि०।

¶ ऋ० वे० १, ६, ५, २=य० वे० ८, ३४।

"अप्रतिधृष्टशवसं" केनाप्यधर्षितबलमहिंसितबलमित्यर्थः "इन्द्रमित्"*इन्द्रमेव "ऋषीणां" वसिष्ठादीनां† "मानषाणाम्" अन्येषां मनुष्याणाञ्च "सुष्टुतीः" शोभनाः स्तुतीः "यज्ञञ्च" "हरी" अश्वौ "उप वहतः" समीपं प्रापयतः। यत्र यत्र स्तुवन्ति यत्र यत्र यजन्ते तत्र सर्वत्रेन्द्रमश्वौ प्रापयत इत्यर्थः। [ मानुषाणाम् "मनोर्जातौ (४,१,१६१)"—इति मनु-शब्दादञ् षगागमश्च ] ॥ "ऋषीणां सुष्टुतीः"-"ऋषीणाञ्चस्तुतीः"—इति पाठौ ॥३॥ २ ॥

॥ महावैश्वामित्रम् ॥ हयायि। हयाउ। ओहो ओहा। (एवन्त्रिः) असाविसो। मइन्द्राता २यि। प्रविष्ठधा। ष्णुवागाहो २। आत्वापृणा। क्तुइन्द्राया २म्। रजःसूर्य्यो। नरश्मायिभा २यिः ॥(१) आतिष्ठ वा। तृहन्नाथा २म्। युक्तातेब्रा। ह्मणाहारी २। अर्वाचीनाम्। सुतेमाना २ः। ग्रावाकृणो। तुवन्नूनी २ ॥(२) इन्द्रमिड्ढा। रीवहाता २ः। अप्रतिधा। ष्टश

* 'इत्—इति पदपूरणः'—इति वि० ।

† 'ऋषीणां—दर्शन-समर्थानाम्'—इति वि० ।

वामा२म्। कृषीणाउसू। हूतीहुपा२। यज्ञस्वंमा।
नुषाणा२म्। यज्ञस्वा। मानुषाणा२म्। हयायि।
हयाइ। ओहाओहा। ३। हो४इडा। २। हो२३४५ई।
डा(३)॥ १८ *॥ [१]

॥ त्वष्ट्रीसाम †॥ असाविसो३हा। मदिन्द्राता२यि।
प्रेष्ठधा३हा। प्पुवागाहो२। आत्वापृणा३हा। त्त्नु
इन्द्राया२म्। रजःसूर्य्यो३हा। नरा३हो२३४। वा।
स्मापुयिभोई३हायि॥(१) आतिष्ठवा३हा। तृहन्राथा२
म्। युक्तातेब्रा३हा। ह्मणाहारी२। अर्वाचीना३उ
हायि। सुतेमाना२ः। ग्रावाकृणो३हा। तुवा३हो२
३४। वा। ग्नेपुनोई३हायि॥(२) इन्द्रमिद्धा३हा। री
वहाता२ः। अप्रतिधा३हा। ष्टशवासा२म्। कृषी

* ऊ० गा० ३प्र० १ख० १८सा०।

† 'त्वारत्वाष्ट्री'—इति ख० पु० पाठः।

णा१ऽसूइहा। ष्टुतीरूपा२। यज्ञञ्चाइहायि। मानूइ

ह्वो२३४। वा। षा५णो६हायि(३)॥ १८ * ॥ [२]

॥ गौरीवितम्॥ अमा। विसो३। मइन्द्रतायि। म्रा

विष्ठधृष्णुवागहा२३यि। आत्वापृणा३१२३। तुई५द्रि

याम्। राजःसूर्य्यो३१२३। नरोवा। श्मा५यिभो६हा

यि॥(१) आति। ष्ठवा३। तुहनुथाम्। युक्तातेब्रह्म

णाहरा२३यि। आर्वाचीना३१२३म्। सुते५मनाः। गा

वाकृणो३१२३। तुवोवा। नू५नो६हायि ॥(२) इन्द्रम्

इद्वा३। रीवहताः अप्रतिधृष्टशवसा२३म्। आर्षी

णा१ऽमू३१२३। ष्टुती५रूपा। याज्ञञ्चा३१२३। मानो

वा। षा५णो६हायि(३)॥ ४ † ॥ [३] २३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य

सप्तमः खण्डः॥ ७ ‡ ॥

---

* ऊ० गा० २२प्र० २ख० १८सा०।

† ऊ० गा० २३प्र० १ख० ४सा०।

‡ 'द्वादशाहस्य पञ्चममहः परिसमाप्तम्'—इति वि०।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः॥ ६॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-
प्रकाशे उत्तराग्रन्थे षष्ठोऽध्यायः* ॥

---

* 'तृतीयः प्रपाठकः परिसमाप्तः'—इति वि० मूलग्रन्थसम्मतश्च।